# सामवेदसंहिता

भगवत्सायणाचार्य्य-विरचित-भाष्य-सहिता,

श्रीलश्री

वङ्गदेशीयासियाटीक्-समाजाभ्यर्थनया

अधीतवेद-"प्रत्नकम्रनन्दिनी"-सम्पादकेन

श्रीसत्यव्रतसामश्रमिभट्टाचार्य्येण

वङ्गसामगेन

टीकिता यथावसरं शोधिता च ।

चतुर्थो भागः ।

॥ उत्तरार्च्चिकः ॥

चतुर्थादि-प्रपाठक-चयात्मकः ॥

कलिकाता

गणेशयन्त्रे मुद्रितः ।

ब्दाः १८१४ ।

# ॥ मन्त्राणामकारादिक्रमेण सूची ॥

———०:०———

मन्त्रप्रतीकम् पृष्ठम्

मन्त्रप्रतीकम् — पृष्ठम्

मन्त्रप्रतीकम् ... पृष्ठम्

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।

निर्म्ममे तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ ७ ॥

## ॥ अथ सप्तमोऽध्यायः आरभ्यते* ॥

तत्र

प्रथमखण्डे,† प्रथम-तृचे—

प्रथमा ।

१ २ ३ १ २ ३ १ २ ३ २
ज्योतिर्यज्ञस्यपवतेमधुप्रियं
३ २ ३ १ २ ३ २ ३ १ २
पितादेवानाञ्जनिताविभूवसुः ।
१ २ ३ १ २ ३ १ २ ३क २र
दधातिरत्नँस्वधयोरपीच्यं
३ १ २ ३ १ २ ३ १र २र
मदिन्तमोमत्सरइन्द्रियोरसः ॥ १‡ ॥

"यज्ञस्य" अग्निष्टोमादेः "ज्योतिः" दीपकः सोमः "प्रियम्" इन्द्रादीनां प्रियभूतं "मधु" मधुरसं "पवते" पूयते दशापवि-

---

* 'त्रिवृत्सौमिकमिदानीं षष्ठमहः'—इति वि० ।

† 'त्रयस्त्रिंशद्देवताष्टकम्'—इति वि० ।

‡ ऋ० वे० ७, ३, १२, ५ ।

लण शोध्यतइत्यर्थः। रसो विशिष्यते—"पिता" पालकः "जनिता" फलस्य उत्पादकः "विभूवसुः" प्रभूतधनः तेन सम्पादयितुं शक्यत्वात् तादृशः सोमरसः "स्वधयोः" ["स्वधे"—इति द्यावापृथिव्योर्नाम (निघ० ३, ३०, १)] "अपीच्यम्" [—इति चान्तर्हितस्य (निघ० ३, २५, ६)] द्यावापृथिव्योर्मध्येऽन्तर्हितं "रत्नं" रमणीयं धनं "दधाति" स्थापयति यजमानेषु। स एव पुनर्विशेष्यते—"रसः" रसयिता "मदिन्तमः" मादयितृतमः "मत्सरः" स सोमः "इन्द्रियः" इन्द्रेण जुष्टः इन्द्रिय-वर्द्धको वा* ॥ १ ॥

अथ द्वितीया।

२ १२ ३ १ २ ३क २र ३
अभिक्रन्दन्कलशंवाज्यर्षति

१ २ ३ २ ३ १ २ ३ १
पतिर्दिवःशतधारोविचक्षणः।

१ २ ३ २ ३ १ २
हरिर्मित्रस्यसदनेषुसीदति

३ १ २ २ १ २ ३ १ २
मर्मृजानोविभिःसिन्धुभिर्वृषा ॥ २† ॥

* 'ज्योतिर्यज्ञस्य पवते—ज्योतिरुज्ज्वलं दीप्तिकरं यज्ञस्य पवते पूयते मधुरसं * * * पिता देवानां जनिता विविधेन प्रकारेण जनिता। कथम्? "अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः"—अनेन प्रकारेण जनिता। विभुर्विश्वस्य भावयिता। दधाति धारयति रत्नं स्वधयोः अपीच्यम् अविनाशि मदिन्तमः मत्सरः भक्षणीयः इन्द्रियः इन्द्रस्य स्वभूतः रसः वीर्यम्'—इति वि०।

† ऋ० वे० ७, ३, १४, १।

सोमः "वाजी" वेजनवान् गमनवान् [यद्वा, अश्वसदृशः] "अभिक्रन्दन्" अभितः शब्दं कुर्वन् "कलशं" द्रोणकलशम् "अर्षति" गच्छति। कीदृशः "दिवः" द्योतमानस्य अन्तरिक्षस्य दशापवित्रलक्षणस्य "पतिः" पालकः स्वामी यद्वा द्युलोकस्य स्वामी [दिवि हि सोमउत्पन्नः "तृतीयस्या मितो दिवि सोम आसीत्"—इति श्रुतेः] "शतधारः" परिमित-धार-पेतः "विचक्षणः" विशेषेण द्रष्टा* "हरिः" हरितवर्णः सोमरसः "मित्रस्य" मित्रवर्द्धितकस्य यज्ञस्य "सदनेषु" "सीदति" निषसो भवति†। कीदृशः सन्? "सिन्धुभिः" स्यन्दन-साधनैः अविरोमभिः दशापवित्रावयवैः‡ "मर्मृजानः" शोध्यमानः "वृषा" वर्षकः फलानाम्॥ २॥

अथ तृतीया।

२ ३ १ २ ३ २ २ ३
अग्रेसिन्धूनाम्पवमानोअर्षं
१ २ २ १ २ ३ १र २र
स्यग्रेवाचोअग्रियोगोषुगच्छसि।
२ ३ १ २ ३ १र २र
अग्रे वाजस्यभजसेमहद्धनꣳ
२ २ २ १ २
स्वायुधःसोतृभिःसोमसूयसे॥ ३¶॥ १

* 'विश्वस्य द्रष्टा'—इति वि०।

† 'मित्र आदित्यविशेषः। अथवा मित्रस्य यजमानस्य सखा स्तुत्यर्थं-लक्षणेन सम्बन्धेन तस्य हर्ष्येषु द्रोणकलशप्रभृतिषु सीदति'—इति वि०।

‡ 'अविभिः—तृतीयाबहुवचनमिदं षष्ठ्येकवचनस्य स्थाने द्रष्टव्यम्। अवेः सम्भूतेन दशापवित्रेण सिन्धुभिः उदकैरित्यर्थः'—इति वि०।

¶ ऋ० वे० ७, ३, १४, २।

हे सोम! त्वं "सिन्धूनां" स्यन्दन-स्वभावाना मुदकानाम् "अग्रे" पुरस्तात् "पवमानः" पूयमानः सन् "अर्षसि" गच्छसि वृष्ट्योदकं जनयितु माहुतिद्वारान्तरिक्षे गच्छसीत्यर्थः। तथा "वाचः" माध्यमिकाया अपि "अग्रियः" ग्राह्यः पूज्यः सन् गच्छसि तथा "गोषु" रश्मिषु तेषामग्रे गच्छसि तथा "वाजस्य" प्रचूणा मन्नस्य लाभायेति शेषः। तदर्थं "महाधनं" सङ्ग्रामं "भजसे"* सेवसे। कीदृशः सन्? "स्वायुधः" शोभन--प्रहरण-साधनायुधः। हे सोम! तादृशस्त्वं "सोतृभिः" अभिषुण्वद्भिः अध्वर्य्वादिभिः "सूयसे"† अभिषूयसे॥ ३॥ १

१ ५ ४ ५ र ४र ५र
॥ मरुतान्धेनु॥ ज्यो२३४। तिर्यज्ञस्यपवतेमधौ।
४ ५ १ र र र र २ र १
वोप्रायाम्। पितादेवानाञ्जनिता। विभूवसू२ः।
१ र १ र १ २ २
दधातिरत्न२ꣳस्वधयोः। अभीचायार२३म्। मादिन्ता२३
५ २ १ २ १ २ ४ १
४माः। मत्सरइन्द्रीयो३रा५सा६५६ः॥(१) आ २ ३ ४।
५ ४ ५र ४ ५र ४ ५ १
भिक्रन्दन्कलशंवाजियौ। वोषातायि। पतिर्द्दिवःशत
र २ १ १ २ र
धारो। विचक्षाण२ः। हरिर्म्मित्रस्यसदनायि। षुसी
१ २ ३ ५ ३ १ २ १ र
दाता२३यि। मार्म्मजा२३४नाः। अविभिःसि। धूभा

*, † "भजते"—इति "पूयते"—इति च च्छ०-पाठः।

इयिर्वा५र्षा६५६॥(२) आ२३४। ग्रेसिन्धूनाम्पवमान
औ। होर्षासायि। अग्रेवाचोअग्रियोगो। प्रुगच्छा
सा२यि। अग्रेवाजस्यभजसायि। महद्धाना२३म्।
सुवायू२३४धाः। सोतृभिःसो। मासू२या५सा६
५६यि(३)॥]११*॥[१]

॥ वरुणसाम ॥ ज्योतिर्य्य। ज्ञा३स्यपवतोमधुप्रि
याम्। पितादेवानाञ्जनिताविभूवमू२३हौयि। दधा
तिरत्नꣳस्वधयोः। अपीचियार२३म्। होयि। मदायि
न्तार२३माः। मात्सरः। इन्द्रि। यो२३। रसाउवा
३॥(१) अभिक्र। दा२न्कलशंवा। जियर्षतायि। प
तिर्द्दिवःशतधारोविचक्षणा२३होयि। हरिम्मित्रस्यसद
ने। प्रुसीदतार२३यि। होयि। मर्म्मजा२३नाः। आ

* ऊ० गा० ८प्र० ३अ० ११सा०।

२ १ २ ४ ३
विभिः । सिन्धुः । भा२३यिः । वृषाउवा३ ॥(२) अग्नै
५ ४ २ २ ४ र ५ १ र र र
सि । धू३नाम्पवमानः । अर्षसायि । अग्नेवाचोअग्रि
र र १ र र र
योगोषुगच्छसा२३यिहोयि । अग्नेवाजस्यभजसे । मह्
१ २ २ २ १ २ १र
द्धना२३म् । होयि । सुवायू२३धाः । सोतृभिः । सो
२ २ १ २ १ २१र
म । सू२३ । यसाउवा३ । ए३ । इन्दुःसमुद्रमुर्वि या
२र २१११
विभाती२३४५(३) ॥ २* ॥ [२] १

अथ द्वितीय-तृचे—

प्रथमा ।

१ २ ३२३ १ २ ३ १र २र ३ २
असृक्षतप्रवाजिनोगव्यासोमासोअश्वया ।
३ १ २ ३ १र २र
शुक्रासोवीरयाशवः ॥ १* ॥

"वाजिनः" बलवन्तः "शुक्रासः" दीप्ताः "आशवः" वेगवन्तश्च "सोमासः" सोमाः "गव्यया"‡ यजमानस्य गवेच्छया तथा

* ज० गा० २३प्र० २अ० २सा० ।

† ऋ० आ० ५, २, ५, ६ (२भा० ३६१०)=ऋ० वे० ७, १, ३६, ४, ५ ।

‡ "गव्या"—इति ऋ०-पाठः ।

"अश्वया" अश्वेच्छया तथा "वीरया" वीराः पुत्र-भृत्यादयः तेषामिच्छया "प्र असृक्षत" प्रासृज्यन्त रसान्वा विसृज्यन्ते ॥१॥

अथ द्वितीया ।

३ १ २    ३१ २३ १ २ ३ १ २
शुम्भमानाऋतायुभिर्मृज्यमानागभस्त्योः ।
१ २ ३ १ २ ३ १ २
पवन्तेवारेअव्यये ॥ २* ॥

"ऋतायुभिः" यज्ञेच्छुभिः अध्वर्यु-प्रभृतिभिः "शुम्भमानाः" अलङ्क्रियमाणाः "गभस्त्योः" हस्तयोः हस्ताभ्यां† "मृज्यमानाः" शोध्यमानाः "वारे" वाले दशापवित्रे । कीदृशे? "अव्ये" अविमये "पवन्ते" पूयन्ते ॥ २ ॥

अथ तृतीया ।

१र २र ३ २ ३ २ ३१ २ ३ २ ३ १ २
तेविश्वादाशुषेवसुसोमादिव्यानिपार्थिवा ।
१ २ ३ १र २र
पवन्तामान्तरिक्ष्या ॥ ३‡ ॥ २

"ते" सोमाः अभिषूयमाणाः "दाशुषे" हविः-प्रदात्रे यजमानाय "विश्वा" सर्वाणि "वसु" वासकानि गवादि-धनानि "आ

* ऋ० वे० ७, १, ३६, ५ ।

† "गभस्त्योः—गभस्तिभ्यां बाहुभ्यां । 'गभस्ती बाहू—इति बाहुनामसु पाठात्' —इति ऋ०-व्याख्या ।

‡ ऋ० वे० ७, १, ३७, १ ।

पवन्तां सर्वतः चरन्तु। वस्त्वित्युक्तं कथं वसूनां विश्वत्वमिति ?] उच्यते—"दिव्यानि" दिवि भवानि "पार्थिवा" पृथिवी-सम्बन्धानि "अन्तरिक्षा" अन्तरिक्षाणि अन्तरिक्षे भवानि* एव मुक्त-प्रकारेण विश्वानीत्यर्थः ॥ ३ ॥ २

पवस्वेति-द्व्यृचं तृतीय-सूक्तं—

प्रथमा।

१ २ ३ १र २र ३ १ २ ३ १ २

पवस्वदेववीरतिपवित्रꣳसोमरꣳह्या।

१ २ ३ १र २र

इन्द्रमिन्दोवृषाविश ॥ १† ॥

हे सोम! "देववीः" देवकामः‡ त्वं "रंह्या" वेगेन "पवित्रं" यथा भवति "अति पवस्व" अतिचर किञ्च हे "इन्दो" "वृषा" सेचकस्त्वं इन्द्रम् "आविश" प्रविश ॥ १ ॥

अथ द्वितीया।

१ २ ३ २ ३ २ ३ १ २ ३ १

आवच्यस्वमहिप्सरोवृषेन्दोद्युम्नवत्तमः।

१र २र ३ २

आयोनिन्धर्णसिस्सदः ॥ २¶ ॥

---

* 'भवानीत्यनुषज्यते'—इति वि०।

† ऋ० आ० ६, १, २, ४ (२भा पृ० ऋ०) वे० ६, ७, १८, १।

‡ 'देवानां भक्तभूतः'—इति वि०।

¶ ऋ० वे० ६, ७, १८, १।

हे "इन्दो" सोम! "वृषा" सेवकाभीष्टदाता वर्षकः "द्युम्नवत्तमः" यशस्वितमः "धर्णसि" धर्त्ता त्वं "मही" महत् "स्वरः" पानीयम् "अन्धः" अन्नम् "आवच्यस्व" अस्मान् प्रति आगमय किञ्च "योनिं" स्वकीयं स्थानम्* "आसदः" आसीद च ॥ २ ॥

अथ तृतीया ।

१ २  १२उ ३१ २ ३१२ ३१२
अधुक्षतप्रियम्मधुधारासुतस्यवेधसः ।
३१ २  ३१२
अपोवसिष्टसुक्रतुः ॥ ३† ॥

"सुतस्य" अभिषुतस्य "वेधसः" अभिलषितस्य विधातुर्यस्य "सोमस्य" "धारा" "प्रियं" प्रीतिकरं "मधु" अमृतम् "अधुक्षत" दुग्धे स "सुक्रतुः" सुकर्मा सोमः "अपः" "वसतीवरीः" "वसिष्ट" आच्छादयति ॥ ३ ॥

अथ चतुर्थी ।

३ १ २  ३१र  २र  ३ १ २
महान्तन्त्वामहीरन्वापोअर्षन्तिसिन्धवः ।
१र २र  ३ १ २
यद्गोभिर्वासयिष्यसे ॥ ४‡ ॥

हे सोम! त्वं "यद्" यदा यज्ञे "गोभिः" गोविकारैः पयोभिः "वासयिष्यसे" आच्छादयिष्यसे तदा "म[illegible]"

* 'योनिं द्रोणकलशम्'—इति वि० ।

† ऋ० वे० ६, ७, १८, ३ ।

‡ ऋ० वे० ६, ७, १८, ४ ।

प्रवृद्धं "त्वा अनु" त्वाम्प्रति "सिन्धवः" स्यन्दमानाः "मही:" महत्यः "आपः" "अर्षन्ति" गच्छन्ति ॥ ४ ॥

अथ पञ्चमी ।

२ ३ २ ३ १ २ १ २ ३ १ २ ३ २

समुद्रोअप्सुमामृजेविष्टम्भोधरुणोदिवः ।

१ २ ३ १ २ ३ १

सोमःपवित्रे अस्मयुः ॥ ५* ॥

"समुद्रः" समुद्रवन्ति अस्मादूसादिति समुद्रः "विष्टम्भः" "दिवः" स्वर्गस्य "धरुणः" धर्त्ता च "अस्मयुः" अस्मत्-कामः† "सोमः" "अप्सु" उदकेषु "मामृजे" मर्मृज्यते पवित्रेऽभिषिच्यते चेत्यर्थः ॥ ५ ॥

अथ षष्ठी ।

१ २ ३ २ ३ १ २ ३ २ ३ १ २ १ २ ३ २

अचिक्रदद्वृषाहरिर्म्महान्मित्रोनदर्शतः ।

१२ १२

सꣳसूर्येणदिद्युते ॥ ६‡ ॥

"वृषा" कामानां वर्षकः "हरिः" हरितवर्णः "महान्" सर्वोत्तमः "मित्रः न" यथा सखा तद्वत् "दर्शतः" दर्शनीयः यः सोमः "अचिक्रदत्" शब्दं करोति सोऽयं सोमः सूर्येण सह "सन्दिद्युते" समित्येकीभावे सूर्येण सह द्योततइत्यर्थः ॥

"रोचते"—इति बह्वृचानां पाठः ॥ ६ ॥

---

* छ० आ० ६, १, २, १ ( २ भा० ५५ पृ० )=ऋ० वे० ९, ७, १८, ५।

† 'अस्मासु भक्तमिच्छुः'—इति वि०।

‡ ऋ० वे० ६, ७, १९, १।

अथ सप्तमी।

२ ३१ २ ३ १ २ ३१ २
गिरस्तइन्द्रओजसामर्मृज्यन्तेअपस्युवः।
२ ३ १ २ ३ १ २
याभिर्म्मदायशुम्भसे॥ ७*॥

हे "इन्द्र!" "ते" तव "ओजसा" बलेन "अपस्युवः" कर्मेच्छा-सम्बन्धिन्यः ताः "गिरः" स्तुतयः "मर्मृज्यन्त" शोध्यन्ते। "याभिः" "गीर्भिः" त्वं मदाय "चरन्" "शुम्भसे" अलङ्क्रियसे† ॥ ७॥

अथ अष्टमी।

२३ १ २ ३ १ २ ३ १ २
तन्त्वामदायघृष्वयउलोककृत्नुमीमहे।
२ ३ १ २ ३ २
तवप्रशस्तयेमहे॥ ८‡॥

"लोककृत्नु" लोकस्य कर्त्तारं "तं त्वा" सोम "घृष्वये" शत्रूणां घर्षण-शीलाय¶ "मदाय" "ईमहे" याचामहे। हे सोम! पातमिति शेषः। किमर्थम्? इति, उच्यते— "तव" "महे" महते "प्रशस्तये" प्रशंसनाय॥ ८॥

---

* ऋ० वे० ६, ७, १९, २।

† 'शुम्भसे शोभसे'—इति वि०।

‡ ऋ० वे० ६, ७, १९, ३।

¶ 'घृष्वये—धर्षणार्थम्'—इति वि०।

अथ नवमी ।

२ १ २ २ १ २ ३ १ २ ३ २ ३ १

गोषाइन्दोनृषाअस्यश्वसावाजसाउत ।

२ २ ३ १ २ ३ १

आत्मायज्ञस्यपूर्व्यः ॥ ९* ॥

हे "इन्दो" क्लिद्यमान-सोम ! "यज्ञस्य" ज्योतिष्टोमादेः "पूर्व्यः" पुराणः नित्यः आत्मा स्वरूपभूतः [ सोमस्य यज्ञस्वरूपत्वं प्रसिद्धम् ]। तादृशस्त्वं "गोषा" अस्मभ्यं गवां दाता "असि" भवसि, "नृषा" नृणां पुत्र-भृत्यादीनां दातासि, "अश्वसाः" अश्वानां दाता चासि, "उत" अपिच "वाजसा" अन्नानां दाता चासि ॥ ९ ॥

अथ दशमी ।

२ १ २ २ १२ २१ २ १ २

अस्मभ्यमिन्दविन्द्रयम्मधोःपवस्वधारया ।

२ १ २ ३ १ २

पर्ज्जन्योवृष्टिमाँइव ॥ १०† ॥ ३

हे "इन्दो" सोम ! "इन्द्रियम्" इन्द्रेण जुष्टम् इन्द्रियस्य वीर्यस्य वा वर्द्धकं रसं "मधोः मदकरस्य अमृतस्य "धारया" "पर्जन्योवृष्टिमांइव" यथा वर्षवान् पर्जन्यो मेघः तथा "अस्मभ्य" मेधातिथिभ्यः "पवस्व" चर ॥ १० ॥

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य षष्ठस्याध्यायस्य प्रथमः खण्डः ॥ १ ॥ ३

* ऋ० वे० ६, ७, १९, ५।

† ऋ० वे० ६, ७, १९, ४।

अथ द्वितीय-खण्डे—

सनाचेति-द्व्यृचे प्रथमे सूक्ते, प्रथमा ।

१ २ ३ १ २ ३ १ २ ३ २ ३ १ २

सनाचसोमजेषिचपवमानमहिश्रवः ।

१ २ ३ १ २

अथानोवस्यसस्कृधि ॥ १* ॥

हे "महिश्रवः" महदन्न ! "पवमान" सोम ! "सन"† अस्मद्यागे यजनीयान् देवान् भज "जेषि च" याग-विघ्नकारिणो राक्षसांश्च जय । "अथ" देवान् प्राप्य राक्षसांश्च जित्वा अनन्तरं "नः" अस्मान् "वस्यसः" श्रेयसः‡ "कृधि" कुरु श्रेयोऽस्मभ्यं देहीत्यर्थः ॥ १ ॥

अथ द्वितीया ।

२ ३ २ ३ २३ १ १ २ ३ १ २

सनाज्योतिःसनास्वा॒ऽ३ऽर्विश्वाचसोमसौभगा ।

१ २ १ २ १

अथानोवस्यसस्कृधि ॥ २¶ ॥

हे सोम ! त्वं "ज्योतिः" तेजः "सन" अस्मभ्यं प्रयच्छ । अपिच "स्वः" स्वर्गं "सन" अस्मभ्यं देहि । "विश्वा" विश्वानि "सौभगा" सौभाग्यानि "च" सन सिद्धमन्यत् ॥ २ ॥

---

* ऋ० वे० ६, ७, २२, १ ।

† 'सना-शब्दः सदावाची । सदा जेषि च शत्रून्'—इति वि० । सायण-मते तु 'सना'—इति क्रियापदम् "द्व्यचोऽतस्तिङः (६, ३, १३५) "—इति दीर्घः । विवरणकार-मते तु सना सदार्थमव्ययमिति "निपातस्य च (६, ३, १३६)"—इति दीर्घः । मूले सर्वत्रैव दीर्घान्तः, व्याख्यानकाले लघयाथार्थं ह्रस्वान्त-प्रतीकमेव गृह्यते ; इयमेव शैलिरस्य व्याख्यातुः सर्वत्रेति बोध्यम् ।

‡ 'वस्यसः—वसनीयः'—इति वि० ।

¶ ऋ० वे० ६, ७, २२, २ ।

अथ तृतीया।

२ ३ १ २ ३ २उ ३ १ २ ३ १ २
सनादक्षमुतक्रतुमपसोममृधोजहि।
१ २ ३ १ २
अथानोवस्यसस्कृधि॥ ३† ॥

हे सोम! त्वं "दक्षं" बलं "सन" अस्मभ्यं देहि, "उत" अपिच "क्रतुं यज्ञं" सन, "मृधः" हिंसकान् शत्रूंश्च "अप जहि" मारय। सिद्धमन्यत्॥ ३॥

अथ चतुर्थी।

१ २ ३ २ ३१ ३ १ २ ३ १ २
पवीतारःपुनीतनसोममिन्द्रायपातवे।
१ २ ३ १ २
अथानोवस्यसस्कृधि॥ ४‡ ॥

हे "पवीतारः" सोमस्य शोधयितार ऋत्विजः! "सोमं" "पुनीतन" पावयत दशापवित्रेण शोधयत किमर्थम्? "इन्द्राय पातवे" इन्द्रस्य पानाय। गतमन्यत्॥ ४॥

---

† ऋ० वे० ६, ७, २१, ३।

‡ ऋ० वे० ६, ७, २२, ४।

अथ पञ्चमी ।

१र  १र३१ १ २१ २२२ २ ३ १ २
त्वᳬं सूर्य्ये न आभज तव क्रत्वा तवोतिभिः ।
१ २ ३ १ २
अथा नो वस्यसस्कृधि ॥ ५* ॥

हे सोम ! त्वं "तव क्रत्वा तव ऊतिभिः" त्वत्कर्त्तृकाभी-रक्षाभिश्च "नः" अस्मान् "सूर्य्ये" "आ भज" प्रापय । सिद्ध-मन्यत् ॥ ५ ॥

अथ षष्ठी ।

२ ३ १ २  ३ १ २  २  ३ १ २
तव क्रत्वा तवोतिभिर्ज्योक्पश्येम सूर्य्यम् ।
१ २ ३ १
अथा नो वस्यसस्कृधि ॥ ६† ॥

हे सोम ! "तव" "क्रत्वा" प्रज्ञानेन "तव ऊतिभिः" पालनैश्च "ज्योक्" चिरं पश्येम सूर्यं पश्याम द्रक्ष्यामः । सिद्धमन्यत् ॥ ६ ॥

अथ सप्तमी ।

२क २र  ३ १ २ ३ १ १  ३ १
अभ्यर्ष स्वायुध सोम द्विबर्हसᳬं रयिम् ।
१ २ ३ १ २
अथा नो वस्यसस्कृधिः ॥ ७ ॥

हे "स्वायुध" शोभनायुध सोम ! त्वं "द्विबर्हसं" द्योर्व्वा पृथिव्योः स्थानयोः परिवृढं "रयिं" धनम "अभ्यर्ष" स्तोतॄन्-अभिगमय । सिद्धमन्यत् ॥ ७ ॥

---

* ऋ० वे० ९, ७, २२, ५ ।
† ऋ० वे० ९, ७, २३, १ ।
‡ ऋ० वे० ९, ७, २३, २ ।

अथाष्टमी।

२ २ १२ ३१२ ३१२ ३१

अभ्या३र्षानपच्युतोवाजिन्समत्सुसासहिः।

१ २ ३ १ २

अथानोवस्यसस्कृधि ॥ ८* ॥

हे सोम! "समत्सु" सङ्ग्रामेषु "अनपच्युतः शत्रुभिरनाहतः "सासहिः" शत्रूणामभिभविता† त्वम् "अभ्यर्ष" अभिगच्छ चर। गतमन्यत् ॥ ८ ॥

अथ नवमी।

२ ३१२ ३१२ ३११

त्वांयज्ञैरवीवृधन्पवमानविधर्मणि।

१ २ ३ १२

अथानोवस्यसस्कृधि ॥ ९‡ ॥

हे "पवमान" शोध्यमान सोम! त्वां "विधर्मणि" विविध-फलस्य धारके यज्ञे "यज्ञैः" यज्ञ-साधनैः "स्तोत्रैः" "अवीवृधन्" यजमाना वर्द्धयन्ति। गतमन्यत् ॥ ९ ॥

अथ दशमी।

३१२ ३२३ २३११ १ ३१ ३१२

रयिन्नश्चित्रमश्विनमिन्दोविश्वायुमाभर।

१ २ ३ १२

अथानोवस्यसस्कृधि ॥ १०¶ ॥ ४

* ऋ० वे० ६, ७, २३, ३।

† 'सासहिः साधनस्वभावः'—इति वि०।

‡ ऋ० वे० ६, ७, २३, ४।

¶ ऋ० वे० ६, ७, २३, ५।

हे "इन्दो!" यागेषु क्लिद्यमान सोम! त्वं "चित्रं" नानाविधम् "अश्विनम्" अश्ववन्तञ्च "विश्वायु" सर्वंगामिनं* "रयिं" धनं "नः" अस्मभ्यम् "आ भर" आहर। गतमन्यत्॥ १०॥ ४

तरत्समन्दीति चतुर्ऋचे द्वितीयसूक्ते—

प्रथमा†।

२ ३ १ २ १ २ ३ १ २ ३१२ २र
तरत्समन्दीधावतिधारासुतस्यान्धसः।
२ ३ १ ३ १ २
तरत्समन्दीधावति॥ १‡॥

"मन्दी" देवानां हर्षकरः स सोमः "तरत्" स्तोतॄन् पाप्मनः सकाशात् तारयन् "धावति" दशापवित्रादधः चरति। तदेव दर्शयति—"सुतस्य" अभिषुतस्य "अन्धसः" देवानामन्नात्मकस्य सोमस्य धारा धावतीति। पुनरपि तदेवात्यन्तादरार्थं "तरत्समन्दीधावति"—इति¶॥ [यद्वास्या ऋचो यास्केनोक्तोऽर्थो द्रष्टव्यः, तद्यथा—"तरति स पापं सर्वं मदीयं स्तौति धावति गच्छत्यूर्द्ध्वां गतिं धारासुतस्यान्धसोधाराभिषुतस्य सोमस्य मन्त्रपूतस्य वाचासुतस्य (निरु०१३,६)"—इति॥ २॥

* 'विश्वायुं—दीर्घाद्दुष्येण सह आभर'—इति वि०।

† 'तरत्समन्दीधावतीति-चतुर्ऋचः छन्दसिकाभाष्ये विस्तरेणोक्ताः, सप्रयोजनं तथाप्यत्र सङ्क्षेपेणोच्यते'—इति वि०।

‡ छ० आ० ६, १, ९, ४ (२भा० ५८४०)=ऋ० वे० ७, १, १५, १।

¶ 'तरत्सः—तरति स पापं यस्य मन्दी धावति सोमस्य। सोमस्य धारा बहुला सुतस्याभिषुतस्य अन्धसीऽन्नस्य सोम-लक्षणस्य'—इति वि०।

अथ द्वितीया।

२१ २३१२३१ २ ३१२
उस्रा वेद वसूनां मर्त्तस्य देव्यवसः।
२३२ ३१ २
तरत्स मन्दी धावति ॥ २* ॥

"वसूनां" धनानाम् "उस्रा" उत्सरणशीला प्रदात्री "देवी" द्योतमाना स्तूयमाना वा यस्य सोमस्य धारा "मर्त्तस्य" मनुष्यं यजमानम् "अवसः" रक्षितुं "वेद" जानाति†। सिद्धमन्यत् ॥ २ ॥

अथ तृतीया।

३१२ ३२ ३ २ ३ १ २
ध्वस्रयोः पुरुषन्त्योरा सहस्राणि दद्महे।
२३२ ३१ २
तरत्स मन्दी धावति ॥ ३‡ ॥

"ध्वस्रयोः पुरुषन्त्योः"¶ ध्वस्रः कश्चिद्राजा तथा पुरुषन्तिश्च, तयोरुभयोरन्नेतद्योग-विवक्षया द्विवचनं द्रष्टव्यं "सहस्राणि" धनानां सहस्राणि "आ दद्महे" वयं प्रतिगृह्णीमः। तदस्माभिः प्रतिगृहीतं धनमुत्तममस्त्विति ऋषिः सोमं प्रार्थयत इति सोमस्य स्तुतिः। सिद्धमन्यत् यथावसार एतयोर्धनानि

---

* ऋ० वे० ७, १, १५, २।

† 'उस्रा दीप्ता वेद वसूनां, विद ज्ञाने, विद्लृ लाभे, विद सत्तायाम्, सर्वज्ञा धारा'—इति वि०।

‡ ऋ० वे० ७, १, १४, ३।

¶ 'ध्वस्रयोः पुरुषन्त्योः—समान-स्वभावयोः सोम-धारयोरपि द्रोणकलशेन सह सम्बन्धयोः पापध्वंसकरयोः'—इति वि०।

प्रतिजग्राह एवं तरन्त-पुरुमीढौ प्रतिजगृहतुः । तथाच शाट्यायनकम्—'अथ ह वै तरन्त-पुरुमीढौ वैदश्वी ध्वस्रयोः पुरुषन्त्योः बहु प्रतिगृह्य गरगिराविव मेनाते तौ ह स्माङ्गुल्या सातं प्रतिमृशाते तावकामयेतामसातमाविविद सातंस्वादात्त मिवैव न प्रतिगृह्णीत मिति भावे तच्चतुर्ऋचमपश्यतान्तरेण प्रत्यैतां तयोर्वैतयोरसातंसातमभवदात्तमिवैव न प्रतिगृह्णीतं स यः प्रतिगृह्य कामयेत"—इत्यादि ॥ ३ ॥

अथ चतुर्थी ।

१र २र ३ २ ३ १ २ ३ १ २ ३ १ २
आययोस्त्रिंशतन्तनासहस्राणिचदद्महे ।

२ ३ २ ३ १ २
तरत्समन्दीधावति ॥ ४* ॥ ५

"ययोः" ध्वस्र-पुरुषन्त्योः "त्रिंशतं" त्रीणि शतानि सहस्राणि च "तना" वस्त्राणि "आ दद्महे" वयं "प्रतिगृह्णीमः" तयोरस्माभिः प्रतिगृह्णीतं तत् सर्वम् अप्रतिगृह्णीतमस्त्विति सोमम् ऋषिः प्रार्थयतइति सोमस्यैव स्तुतिः । गतमन्यत् ॥४॥ ५

एतेसोमाइति तृचं तृतीयं सूक्तम्—

तत्र, प्रथमा ।

३ १र २र ३ २र २र ३ २
एतेसोमाअभिप्रियमिन्द्रस्यकाममक्षरन् ।

३ १ २ ३ १ २
वर्धन्तोअस्यवीर्यं ॥ १† ॥

---

* ऋ० वे० ७, १, १४, ४ ।

† ऋ० वे० ७, १, १८, १ ।

"मदिन्तमस्य" देवानां मादयितृतमस्य रसस्य सम्बन्धिन एते सोमा अभिषुताः सरूपाः "स्तुणानाः" स्तूयमानाः "महे" महते "अवसे" अस्माकं बलाय धारया "असृक्षत" गच्छन्ति ॥१॥

अथ द्वितीया।

२ ३१र २र ३ १२३ १ ३ २१ १ २
अभिगव्यानिवीतयेनृम्णापुनानोअर्षसि।
३ १२ ३ १ २
सनद्वाजःपरिस्रव ॥ २* ॥

हे सोम! "वीतये" देवानां भ†क्षणाय नृम्णा" नृम्णानि धनवत् प्रियतराणि "गव्यानि" गो-सम्बन्धीनि क्षीरादीनि "पुनानः" पूयमानः सन् "अभ्यर्षसि" अभिगच्छसि। हे सोम! "सनद्वाजः" दीयमानान्नः‡ त्वं "परि" परितः "स्रव" दशापवित्रादधः क्षर ॥ २ ॥

अथ तृतीया।

३ २३ १ २ ३ २ ३ १ २ ३ १ २
उतनोगोमतीरिषोविश्वाअर्षपरिष्टुभः।
३ २ ३ १ २
गृणानोजमदग्निना ॥ २१ ॥ ६

---

* ऋ० वे० ७, १, २८, ३।

† 'नृम्णा बलेन'—इति वि०।

‡ 'सनत् सदा'—इति वि०।

सम्बन्धयोः पाठे ७, १, २८, ४।

"उत" अपिच हे सोम! "जमदग्निना" जमदग्नि-नाम्ना ऋषिणा मया "स्तुवानः" स्तूयमानः त्वं "नः" अस्माकं "गोमतीः" गोभिर्युक्तानि "परिष्टुभः" परितः स्तोतव्यानि* सर्वाणि "इषः" अन्नानि देहीत्यर्थः ॥ ३ ॥ ६

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य सप्तमस्याध्यायस्य द्वितीयः खण्डः† ॥ २ ॥

---

इमंस्तोममिति-तृतीयखण्डे‡—

प्रथम-ऋचि,¶ प्रथमा ।

२ ३उ   ३ १ २   ३ १ २   २
इमᳫँ स्तोममर्हतेजातवेदसे
१ २   ३ १ २   ३ १ २
रथमिवसम्महेमामनीषया ।
३ १उ   ३ १ २   ३ १र
भद्राहिनःप्रमतिरस्यसᳫँस
२र ३ १र २र   ३ १र २र
द्यग्नेसख्येमारिषामावयन्तव ॥ १§ ॥

"अर्हते" पूज्याय "जातवेदसे" जातानामुत्पन्नानां वेदित्रे, जात-प्रज्ञाय जात-धनाय वा अग्नये "मनीषया" निश्चितया

---

* 'परिष्टुभः—परि समन्तात् स्तौति'—इति वि० ।

† 'उक्तं वक्ष्यमाणम्'—इति वि० ।

‡ 'वयस्विं शस्तोमः षष्ठमहः'—इति वि० ।

¶ 'आग्नेयमाज्यम्'—इति वि० ।

§ ऋ० आ० १, ९, २, ४ (१भा २०३पृ०)=ऋ० वे० १, ६, ३०, १ ।

बुद्ध्या "इमम्" एतत्सूक्तरूपं स्तोमं रथमिव यथा तक्षा रथं संस्करोति तथा "सम्महेम" सम्यक् पूजितं कुर्मः । तस्याग्नेः "संसदि" सम्भजने "नः" अस्माकं "प्रमतिः" प्रकृष्टा बुद्धिः "भद्रा हि" कल्याणी समर्था खलु अतस्तया बुद्ध्या स्तुम इत्यर्थः । हे "अग्ने" "तव सख्ये" अस्माकं त्वया सह सखित्वे सति वयं "मारिषाम" हिंसिता न भवामः अस्मान् रक्षेत्यर्थः । [ "अर्हते"—अर्ह पूजायाम् ( भ्वा० प० ) "अर्हः प्रशंसायामिति ( ३,२,१३३) लटः शत्रादेशः, शपः पित्त्वादनुदात्तत्वम् ( ३,१,४), शतुस्वादुपदेशात्सार्वधातुक-स्वरेणाद्युदात्तत्वम् (६,१,१८६)। महे—मह पूजायाम् ( भ्वा० प० )। रिषाम—रिष हिंसायां (भ्वा०प० ) व्यत्ययेन शः(३,१, ८५)। तव—"युष्मदस्मदोर्ङसि (६,१,२११)" —इत्याद्युदात्तत्वम ॥१॥

अथ द्वितीया ।

१ २ ३ २ ३ १ २ ३ १ २
भरामेध्मङ्कृणवामाहवीꣳषिते

३ १ २ ३ ३ २ ३ १
चितयन्तःपर्वणापर्वणावयम् ।

३ १ २ ३ १ २ ३ १
जीवातवेप्रतराꣳसाधयाधियो

२र ३ १र १र ३ १र २र
ऽग्नेसख्येमारिषामावयन्तव ॥ २* ॥

हे "अग्ने !" त्वद्यागार्थम् "इध्मम्" इन्धन-साधनम् एकविंशति-द्रव्यात्मकं समित्समूहं "भराम" सम्भराम सम्पादयाम,

---

* ऋ० वे० १, ९, ३०, ४ ।

तदनु "ते" तुभ्यं "हवींषि चरुपुरोडाशादि-लक्षणान्यन्नानि वयं "कृणवाम" करवाम। किङ्कुर्वतः? "पर्वणा पर्वणा"* प्रतिपच्च-मावृत्ताभ्यां दर्शपूर्णमासाभ्यां "चितयन्तः" त्वां प्रज्ञापयन्तः स त्वं "जीवातवे" अस्माकं जीवनौषधाय चिरकालावस्थानाय "धियः" कर्माणि अग्निहोत्रादीनि "प्रतरां" प्रकृष्टतरं "साधय" निष्पादय। अन्यत् समानम्॥ [चितयन्तः—चिती सञ्ज्ञाने (भ्वा० प०) सञ्ज्ञापूर्वस्य विधेरनित्यत्वात् लघूपध-गुणाभावः। पर्वणा—"नित्यवीप्सयोः (८, १,४)"—इति वीप्सायां द्विर्भावः, "तस्य परमाम्रेडितम् (८,१,२)"—इति परस्याम्रेडित-सञ्ज्ञायाम् अनुदात्तत्वम् (८, १, १९)। प्रतरां—तरबन्तात् प्रशब्दात् क्रिया-प्रकर्षे वर्त्तमानात् "किमेत्तिङव्ययादाम्वद्र[व्य]... (५, ४, ११)"—इत्यामु-प्रत्ययः॥ २॥

अथ तृतीया।

३ १ २ ३ १ २ ३ २ ३ १ २
शकेमत्वासमिधꣳसाधयाधिय

२ ३ २ ३ १ २.३ १ २
स्त्वेदेवाहविरदन्त्याहुतम्।

१ २ ३ १२ २२ ३ २ १२
त्वमादित्याꣳआवहतान्ह्य ऽ३ऽश्म

२२३ १२ २२ ३१२ २२
स्यग्नेसख्येमारिषामावयन्तव॥ ३†॥ ७

* 'पर्वणा—तृतीयैकवचनमिदं सप्तम्येकवचनस्य स्थाने द्रष्टव्यम्, पर्वणि भूयाम समर्थः'—इति वि०।

† ऋ० वे० १, ९, २०, ३।

हे अग्ने! "त्वा" त्वां "समिधं" सम्यगिद्धं कर्त्तुं "शकेम" शक्ता भूयास्म। त्वञ्च "धियः"* अस्मदीयानि दर्शपूर्णमासादीनि कर्माणि "साधय" निष्पादय त्वया हि सर्वं निष्पद्यन्ते यस्मात् "त्वे" त्वयि अग्नावाहुतम् ऋत्विग्भिः प्रक्षिप्तं चरुपुरोडाशादिकं हविः देवा "अदन्ति" भक्षयन्ति, तस्मात्त्वं साधयेत्यर्थः। अपि च त्वम् "आदित्यान्" अदितेः पुत्रान् सर्वान् देवान् "आवह" अस्मद् यज्ञार्थमानय। तान् हि इदानीं वयम् "उश्मसि" कामयामहे। अन्यत् पूर्ववत्॥ [ शकेम—शक्लृ शक्तौ (भ्वा० प०), "लिङ्याशिष्यङ्" (३,१,८६), अदुपदेशाल्लसार्वधातुकानुदात्तत्वे (६, १, १८६) अङ एव स्वरः शिष्यते। समिधम्—ञि इन्धी दीप्तौ (रु० आ०) अस्मात् सम्पदादिलक्षण कर्मणि क्विप्। त्वे—सुपांसुलुगिति (७, १, ३९) सप्तम्येकवचनस्य शे-आदेशः। उश्मसि—वश कान्तौ (अ० प०), "इदन्तोमसि (७, १, ४६), अदादित्वाच्छपोलुक् (२, ४, ७२), ग्रहिज्येत्यादिना सम्प्रसारणम् (६, १, १६)॥ ३॥ ७

२१ ३२ १ २र ३ १र २ १
॥ समन्तम्॥ इमᳬस्तोममर्हते जातवेदसायि। रथ

२र २ २ ३ १ २
मिवसम्महेमामनीषया। भद्राह्वाऽ२३यिनाः। प्रामतिर

१ १ २२र १ ३ १ र २र १र २१
स्यसᳬस। द्यशायि॥(१) भराम इध्माङ्कृणवामाहवीᳬषिता

* "धीः"—इति कर्मनामसु एकविंशतितमं नैघण्टुकम् (२, १)।

उद्देश्यश्चतुर्थ्यर्थः । तथाहि–सम्प्रदाने चतुर्थी । तच्च "कर्मणा यमभिप्रैति स सम्प्रदानम्" (पा०सू०१।४।३२) इति सूत्रात् कर्मणा–करणभूतेन यमभिप्रैति–ईप्सति तत् कारकं सम्प्रदानमित्यर्थका-दुद्देश्यम् ।

---

दर्पणः

चतुर्थ्यर्थं निरूपयति—*उद्देश्य इति* । ननूद्देश्यत्वं कामनाविषयत्वं, तच्च 'विप्राय गां ददाति' इत्यत्र क्रियाजन्यफलभागितया कामनाविषये गवादावतिप्रसक्त-मतस्तद्व्यावृत्तम्, तत्सूत्रप्रामाण्येन दर्शयति—*तच्च कर्मणेत्यादि* । कर्मणेत्यन-न्तरम्, सम्बन्धुमिति शेषः । कर्म चाऽत्र पारिभाषिकम् । "कर्मणा यमभिप्रैति" (पा० सू० १ । ४ । ३२ ) इति क्रियाव्याप्यमानस्य सम्प्रदानसञ्ज्ञाविधानात् । अत एव तदकर्मकविषयम् ।

ननु 'ग्रामं गच्छति' इत्यत्र ग्रामरूपकर्मजन्यसुखादिफलभागितयोद्देश्ये कर्त्तर्यप्य-तिप्रसङ्गोऽत आह—*करणभूतेनेति* । करणत्वं च सम्बन्धक्रियाऽपेक्षम् । क्रियाव्यव-हितव्यापारवत एव करणतया व्यापारे कर्मवृत्तित्वलाभेन तद्वृत्तित्वस्य धात्वर्थता-वच्छेदकफल एव सम्भवात् । कर्मवृत्तितज्जन्यत्वस्य ग्रामजन्यसुखे असत्त्वान्नोक्तानि-प्रसङ्ग इति भावः । यमित्यस्यानुपादाने योऽभिप्रैतीत्यर्थस्यापि लाभात् प्रथमान्त-कर्त्तर्यैतिप्रसङ्गः स्यादतस्तदुपात्तम् ।

यद्यपि 'गौर्ब्राह्मणस्य भवतु' इतीच्छाविशेष्यतया गामेवाऽवगाहते; तथापि तस्य सूत्रफलितार्थपरत्वान्न दोषः । तथाच—कर्मजन्यतद्वृत्तिफलभागित्वप्रकारको यद्वि-

परीक्षा

शीनादर्थाध्याहारः "स्पृहेरीप्सित"सूत्रसत्वात्पदाध्याहारश्च कलसलक्ष्यानुरोधेन व्य-वस्था कार्य्या । चतुर्थीवाच्यो य उद्देश्यः स एव दर्शयँस्तमाह–*तच्चेति* । *यमभि-प्रैति*—यमभिसम्बन्धुमिच्छति । एवं च क्रियाकर्मसम्बन्धजन्यफलवत्वेनेच्छावि-षयो यः स एवोद्देश्यपदेनोच्यते; नत्विच्छाविषयमात्रम् । इच्छाविषयत्वस्य कर्म-ण्यपि सत्वात् । न च 'यः पुरुषो ग्रामं गच्छति, तस्य ग्रामसम्बन्धजन्यं सुखं मे जाय-ताम्' इत्याकारेच्छावर्त्तत इति कर्त्तुरपि तादृशोद्देश्यत्वसत्त्वादतिव्याप्तिरिति वा-च्यम्? "कर्मणा" इति तृतीयोपादानेन कर्मणः करणत्वं लभ्यते, तत्र करणत्वमभि-सम्बन्धक्रियां प्रति बोध्यम् । करणस्य च व्यापारस्त्वनियमादनुपस्थितस्य व्यापारस्य कल्पनापेक्षया कर्मत्वप्रयोजकफलस्य व्यापारत्वकल्पनालाघवमिति "धात्वर्थफल-द्वारं कर्मजन्यत्वं लभ्यते, यथा—'विप्राय गां ददाति' इत्यत्र दाधात्वर्थः स्वस्वध्वं-सविशिष्टपरसत्त्वानुकूलो व्यापारस्तत्र फले स्वस्वध्वंसविशिष्टपरस्वत्वं तद्द्वारा कर्मजन्यत्वं विप्रवृत्तिसुखस्य 'ग्रामं गच्छति' इत्यादौ तु न गम्धात्वर्थस्य संयोगस्य कर्त्तृवृत्तिसुखं प्रति जनकत्वम्; अन्यथा सिद्धत्वात् । किन्तु ग्रामवासादेरित्यतिप्रसङ्गा-भावात् । 'विप्राय गां ददाति' इत्यत्रोद्देश्यश्चतुर्थ्यर्थः । स्वस्वध्वंसविशिष्टेच्छा दाधा-त्वर्थः, गोपदोत्तरद्वितीयार्थः—आश्रयस्तस्य स्वस्वध्वंसविशिष्टे स्वत्वेऽन्वयः, इच्छैव व्यापारस्तस्मात् फलवैशिष्ट्यामनुकूलतासम्बन्धेनेति विप्रोद्देश्यिका गोवृत्तिस्वस्व-ध्वंसविशिष्टस्वत्वेच्छेति बोधः ।

र . र र २
यि। चितयन्तःपर्वणापर्वणावयाम्। जीवातार२३वायि।
१ २र र र १ १ १र २र १
प्रातरा॒साधयाधि। योग्नायि॥(२) शकेमत्वासमिधं॒
२र १ र ३ १ १र र र र
साधयाधियाः। त्वेदेवाहविरदन्त्याहुतम्। तुवमार२३
२ १ र २ र १ २ ५र
दी। त्वा॒आवहतान्हुम्म। स्यग्नायिसाख्यां। औ
२ ३र २ १र २ १ २ २
होऽ३४वाहायि। मा। रायिषार२३मा३। होवा३हायि।
१ २ १
वयन्तार२३वा३४३। ओ२३४५ई। डा(३)॥ १५ *॥ ७

अथ द्वितीय-तृचे—

प्रथमा।

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २
प्रतिवा॒सूरउदितेमित्रङ्गृणीषेवरुणम्।
३ १ २ ३ १ २
अर्यमण॒रिशादसम्॥ १ †॥

हे मित्रावरुणौ! "मित्र" त्वां "वरुणं" च "वां" युवां "रिशादसं" शत्रूणामत्तारम् "अर्यमणं" च "प्रति" प्रत्येकं "गृणीषे"

* ऊ० गा० १७प्र० १ख० १५ सा०।

† ऋ० वे० ५, ५, ८, २।

स्तुवे। कदा? इति, उच्यते—"सूरे" सूर्य्ये देवे "उदिते" सति प्रातरित्यर्थः ॥ १ ॥

अथ द्वितीया।

२ १ २ २ २ ३ २ ३ १ २ ३ २ ३ १ २
रायाहिरण्ययामतिरियमवृकायशवसे।
२ १ १ २र ३ १ २
इयंविप्रामेधसातये ॥ २ * ॥

"हिरण्यया" हित-रमणीयेन "राया" धनेन सहितया "अवृकाय" अहिंस्राय "शवसे" अस्माकं बलाय "इयम्" इदानीं क्रियमाणा "मतिः" स्तुतिर्भवत्विति शेषः ॥ [ हिरण्यया—इत्यत्र सुपां सुलुगिति (७,१,३९) तृतीयैकवचनस्य याजादेशः ] किञ्च हे "विप्राः" प्राज्ञाः! "इयम्" एव स्तुतिः "मेधसातये" यज्ञ-लाभाय† च भवतु ॥ २ ॥

अथ तृतीया।

१ २ ३ १ २ ३ १ २ ३ २
तेस्यामदेववरुणतेमित्रसूरिभिःसह।
२ ३क २र
इषꣳस्वश्चधीमहि ॥ ३ ‡ ॥ ८

हे "देव वरुण!" "ते" वयं तव स्तोतारः "स्याम" समृद्धा भवेम। न केवलं वयमेव यजमानाः किन्तु "सूरिभिः"

* ऋ० वे० ५, ५, ९, ३।

† 'विप्राः—ऋत्विजः, मेधसातये—मेधालाभार्थम्'—इति वि०।

‡ ऋ० वे० ५, ५, ९, ४।

स्तोतृभिः ऋत्विग्भिः सह ; तथा हे "मित्र" देव ! "ते" वयं "सूरिभिः" सह "स्याम" भवेम । किञ्च "इषम्" अन्नं "स्वश्च" रुचकञ्च "धीमहि" धारयामहे* ॥ ३ ॥ ८

अथ तृचात्मके तृतीय-सूक्ते—

प्रथमा ।

२ २उ ३ २ ३ २ ३ २ ३१ २ ३ १ २र
भिन्धिविश्वाअपद्विषःपरिबाधोजहीमृधः ।
१ २ ३ १र २र
वसुस्पार्हन्तदाभर ॥ १ † ॥

हे इन्द्र ! त्वं "विश्वाः" सर्वाः "द्विषः" द्वेष्ट्रीः शत्रुसेनाः "अप भिन्धि" विदारय । तथा "बाधः" हिंसकान् "मृधः" सङ्ग्रामान् त्वं "परि जहि" परिभावय । हे सोम वासकेन्द्र ! "स्पार्हं" स्पृहणीयं द्वेष्ट्रीणां "वसु" धनं यदस्ति "तत्" "आभर" ॥ १ ॥

अथ द्वितीया ।

१ २ ३ १ २ ३ १र २र ३ २ ३ १ २
यस्यतेविश्वमानुषग्भूरेर्दत्तस्यवेदति ।
१ २ ३ १र २र
वसुस्पार्हन्तदाभर ॥ २ ‡ ॥

हे इन्द्र ! "ते" त्वां [ विभक्ति-व्यत्ययः (३,१,८५) ] "दत्तस्य" दत्तं "भूरि" बहु "यस्य" यत् धनम् [ सर्वत्र कर्म्मणि षष्ठी वेदि-

---

* 'स्वः—स्वर्गलोकम्, धीमहि—चिन्तयामः'—इति वि० ।

† छ० आ० २, १, ४, १० ( १भा० ३२२ पृ० ) = ऋ० वे० ६, ३, ४९, ४ ।

‡ ऋ० वे० ६, ३, ४९, ५ ।

तव्या ] "विश्व" सर्वं तद्धनम् "आनुषक्"—इति आनुपूर्व्या* सततं सर्वो मनुष्यो "वेदति" जानाति तत् "स्पार्हं" स्पृहणीयं "वसु" "आभर" ॥ २ ॥

अथ तृतीया ।

२ ३ १ २ ३ २ ३१२ २२ ३१२
यद्वीड़ाविन्द्रयत्स्थिरे यत्पर्शानेपराभृतम् ।
१ २ २ १२ २२
वसुस्पार्हन्तदाभर ॥ ३ † ॥ ९

हे "इन्द्र !" त्वया च "वीड़ौ" दृढ़े परैः कम्पयितुमशक्ये "यत्" धनं "पराभृतं" विन्यस्तं, "यत्" च "स्थिरे" स्वयमचले पराभृतं, "यत्" च "विपर्शाने" विमर्शन-क्षमे पराभृतं, तत् "स्पार्हं" स्पृहणीयं "वसु" "आ भर" आहर ॥ ३ ॥ ९

अथ तृचात्मकं चतुर्थं सूक्तम्—

तत्र, प्रथमा ।

३ २ ३ २उ ३ २ ३ २ ३ १ २३१ २
यज्ञस्यहिस्थऋत्विजासस्नीवाजेषुकर्म्मसु ।
१ २ ३ १ २
इन्द्राग्नीतस्यबोधतम् ॥ १ ‡ ॥

* "आनुषगिति नामानुपूर्व्यस्यानुषक्तं भवति, स्तृणन्ति बर्हिरानुषगित्यपि निगमो भवति"—इति निरु० नै० ६, १४ ।

† छ० आ० ३, १, २, ४ ( १भा० ४४० पृ० )=ऋ० वे० ६, ३, ४९, ६ ।

‡ ऋ० वे० ६, ३, २०, १।

हे "इन्द्राग्नी!" युवां "यज्ञस्य" ज्योतिष्टोमादेः "ऋत्विजा स्थः" ऋत्विजौ ऋतौ काले काले यष्टव्यौ भवथः। अतो "वाजेषु" सङ्ग्रामेषु कर्मसु यज्ञात्मकेषु च "सस्नी" संस्नातौ शुद्धौ सन्तौ* "तस्य" तं मां हे इन्द्राग्नी! बोधतम् अथवा तस्य मम† स्तुतिं जानीतम् ॥ १ ॥

अथ द्वितीया।

३ १ २ ३ १ २ ३ १ २र
तोशासारथयावानावृत्रहणापराजिता।
१ २ ३ १ २
इन्द्राग्नीतस्यबोधतम् ॥ २ ‡ ॥

हे "इन्द्राग्नी!" "तोशासा"¶ शत्रून् हिंसन्तौ, "रथयावाना" रथेन गच्छन्तौ, "वृत्रहणा" वृत्रस्य हन्तारौ "अपराजिता" केनाप्यपराजितौ "तस्य" तं मां "बोधतम्" ॥ २ ॥

अथ तृतीया।

३ १ २ ३ १र २र ३ १ २ ३ १ २
इदंवाम्मदिरम्मध्वधुक्षन्नद्रिभिर्नरः।
१ २ ३ १ २
इन्द्राग्नीतस्यबोधतम् ॥ ३ § ॥ १०

---

* 'सस्नी—साधन-स्वभावः'—इति वि०।

† 'तस्य—यजमानस्य'—इति वि०।

‡ ऋ० वे० ६, ३, २०, २।

¶ 'तोशासा—दीप्ति-सम्पन्नौ'—इति वि०।

§ ऋ० वे० ६, ३, २०, ३।

हे "इन्द्राग्नी !" "वां" युवाम् उद्दिश्य "नरः" यज्ञस्य नेतारः "अद्रिभिः" ग्रावभिः "मदिर" मदकरं "मधु" सोमात्मकम् अमृतम् "अचन्" अपूरयन् । सिद्धमन्यत् ॥ ३ ॥ १०

इति सामवेदार्थ-प्रकाशे उत्तराग्रन्थस्य सप्तमस्याध्यायस्य

तृतीयः खण्डः* ॥ ३ ॥

---

अथेन्द्रायेन्दोमरुत्वतइति-चतुर्थखण्डे†—

तृचात्मके प्रथम-सूक्ते‡ प्रथमा ।

१ २　　३ १ २ ३ १ २ ३　२

इन्द्रायेन्दोमरुत्वतेपवस्वमधुमत्तमः ।

३ २ ३ १　२ ३ १ २

अर्कस्ययोनिमासदम् ॥ १ ¶ ॥

हे "इन्दो" सोम ! "मधुमत्तमः" अतिशयेन मधुमान् त्वम् "अर्कस्य" अर्चनीयस्य यज्ञस्य "योनिम्" स्थानम् "आसदम्" उपवेष्टुम् "मरुत्वते इन्द्राय" इन्द्रार्थम् "पवस्व" चर ॥ १ ॥

अथ द्वितीया ।

२ ३　१ २　३　२ ३ १ २　　　　३ २

तन्त्वाविप्रावचोविदःपरिष्कृण्वन्तिधर्णसिम् ।

१ २　　३　१ २

सन्त्वामृजन्त्यायवः ॥ २ § ॥

---

* 'उक्तं प्रातःसवनम्'—इति वि० ।

† 'इदानीं माध्यन्दिनं सवनमुच्यते'—इति वि० ।

‡ 'इषोवृधीय-प्रभृतीनि सामानि, तेषां प्रकृतावार्षेयमुक्तम्'—इति वि० ।

¶ ऋ० आ० ५, २, ४, ६ ( २भा० १९ पृ० )=ऋ० वे० ७, १, ४०, २ ।

§ ऋ० वे० ७, १, ४०, ३ ।

हे सोम! "तं" पवमानं "त्वा" त्वाम् "धर्णसिं" धर्त्तारं "विप्राः" प्राज्ञाः "वचोविदः" स्तोतारः* "परिष्कृण्वन्ति" अलङ्कुर्वन्ति†। अपि च "त्वा" त्वाम" "आयवः" मनुष्याः‡ "सम्मृजन्ति" सम्यक् शोधयन्ति ॥ २ ॥

अथ तृतीया।

१ २ ३ १ २ ३ १ २र ३ १ २
रसन्तेमित्रोअर्यमापिबन्तुवरुणःकवे।
१ २ ३ १ २
पवमानस्यमरुतः ॥ ३ ¶ ॥ ११

हे "कवे" क्रान्तकर्मन् सोम! "पवमानस्य" च्चरतः "ते" तव रसं§ "मित्रः" "अर्यमा" च "वरुणः" च "मरुतः" च एते सर्वे देवाः "पिबन्तु" ॥ ३ ॥ ११

२ र र १
॥ इषोवृधीयम् ॥ इन्द्रायेन्दाउ। मरुत्वतायि।
२ १ १ २ १ १ र
पवस्वामा २। धुमत्तमाः। अर्कस्यायो २। निमा।
१ ३ ५र र २ र र १
स्यारंदार२३४औहोवा ॥(१) तन्त्वाविप्राः। वचोविदाः।

---

* विप्रा वचोविदः—मेधाविनः ऋत्विजः'—इति वि०।

† 'परिष्कृण्वन्ति—परिचरन्ति'—इति वि०।

‡ "आयवः"—इति मनुष्य-नामासु सप्तदशं नैघण्टुकम् (२, ३)।

¶ ऋ० वे० ७, १, ४०, ४।

§ 'रसं वीर्यम्'—इति वि०।

२ १ १ २र १ १
परिष्काण्वा२। निधर्णसायिम्। सन्त्वामाज्जा२। ति
र ३ ५र र १र र
श्रा। यार्२वार२ ३ ४ औहोवा ॥(२) रसन्तेमायि। चो
१ २ १ १ २ १
अर्य्यमा। पिबन्त्वा२। रुणःकवायि। पवमाना२।
१ ३ ५र र १ र २
स्यम। रू२ता२३४औहोवा। इषोवृधे१(३) ॥ १९ * ॥ [१]

२ र र २ ६ २
॥ गायत्रीकौञ्चम् ॥ इन्द्रायेन्दा१औहो। मा ३ रु
३ ५ १ २१ २ ६ २ ३ ५
त्वा२३४तायि। पावस्वामा। धू३म। ता २ ३ ४माः।
१ ६ ३ ५ १ र
माः। पवस्वमधुमा३२। ता२३४माः। अर्कस्ययोना२
४ ५ १ ५र
३यिम। अ। वाहायि। सा२३४दाम्। एहियाई
५ २ र २ ६ २ ३ ५
हा ॥(१) तन्वाविप्रा १ औहो। वा३। चो। वी२३४दाः।
१ २ १ २ २ ३ ५ १
पारिष्काण्वा। ता३यिधा। णा२३४सायिम्। परिष्क
६ ३ ५ १ र
णवन्तिधा३२। णा२३४सायिम्। सन्त्वामृजन्ता२३यि।
४ ५ १ ५र ५ २
अ। वाहायि। या२३४वाः। एहियाईहा ॥(२) रस

* ऊ० गा० ३ प्र० १ अ० १९ सा०।

न्तेमा१औहो । चो३अर्या२३४मा । पार्थिवन्तुवा । हू३णः ।
का२३४वायि । पिवन्तुवरुणा३२ः । का२३४वायि । पव
मानस्या२३ । म । वाहायि । हू२३४ताः । एहियाह्
हा । हो५ई । डा(३) ॥ २० * ॥ [२]

॥ वाजदावदावयम् ॥ इन्द्रायेन्दाउ । मरु२त्वा२३
४तायि । पवा२स्वा२३४मा । धुमत्ता२माः । आ२३र्का ।
स्या२यो । निमो२३४वा । सा५दो६हायि ॥(१) तन्त्वा
विप्राः । वचो२वी२३४दाः । परा२यिष्का २ ३ ४ एवा ।
तिधर्णा२सायिम् । सा२३न्त्वा । मा२जा । तियो२३४
वा । या५वो६हायि ॥(२) रसन्तेमायि । ओआ२र्या
२३४मा । पिबा२न्तू२३४वा । हणःका२वायि । पा२३वा ।
मा२ना । स्वमो२३४वा । हू५तो६हायि(३) ॥ २१ † ॥ [३]

* ऊ० गा० ३प्र० १अ० १०सा० ।

† ऊ० गा० ३प्र० १अ० २१सा० ।

२ ३र ४ ५ र र
॥ आश्वसूक्तम् ॥ औऔहोवाहायि। इन्द्रायेन्दा
२ १ र २र र ३र २ २ १ ३
उ। मरु। त्वते। ऐहीयेही१। पावस्वमधुमात्तमः।
र र २र २ १ १र
ऐहीयैही१। आ२यि। आर्का२स्यायो२। निमा।
२ ५र र २ ३र ४ ५ र
सा२दा२३४औहोवा॥(१) औऔहोवाहायि। तन्त्वा
२ १ २र र ३र २ २
विप्राः। वचो। विदः। ऐहीयैही१। पारिष्कृण्वन्ति
१ २र र २ र १ १
धार्णसिम्। ऐहीयैही१। आ२यि। सान्त्वा२मार्जा
१र ३ ५र र २ ३र ४
२। तिआ। या२वा२३४औहोवा॥(२) औऔहोवा
५ र २ र १ र २र र ३र १
हायि। रसन्तेमायि। नोआ। यैमा। ऐहीयही१।
१ २ १ र २र र ३र २ २
पायिवन्तुवरुणाःकवे। ऐहीयैही१। आ२यि। पावा
१ १ ३ ५र र २ १ र २
२माना२। स्वम। रु२ता२३४औहोवा। प्रुक्षआक्ष
२ १ १ १ १
ता२३४५ः(३) ॥ ४ * ॥ [४]

५ र २ ४र ५ २ १
॥ आमहीयवम् ॥ इन्द्राया३यिन्दोमरुत्वतायि। पवा

* क० गा० ८प्र० १ख० ४सा०।

२ १ १ १ २ १
स्वा१मा२। धुमा२३त्तमाः। अर्कस्ययो। निमा२३स

२ १२ २ १ १ १ १
दाउ। वा३। स्तौषि३४५(१) ॥ ४ * ॥ [५]

२ १ २ २ १
॥ दार्ढच्युतम् ॥ इन्द्रा। इहा। येन्दोमरू२त्वता

२ १ १
यि। इहा। पवा। इहा। स्वमधुमा२त्तमाः। इ

२ १ २ १ २
हा। अर्का। इहा। स्ययोनिमा२सदाम्। इहा१ ॥(१)

२ १ २ १ २ १
तन्त्वा। इहा। विप्रावचो२विदाः। इहा। परायि।

१ २ १
इहा। इखन्तिधा२र्णसायिम्। इहा। सन्त्वा। इ

१ २ २ १
हा। म्हजन्तिआ२यवाः। इहा१ ॥(२) रसाम्। इ

२ २ १ ३ १
हा। तेमित्रोआ२र्य्यमा। इहा। पिबा। इहा। तु

१ २ १ २
वरुणा२ःकवायि। इहा। पवा। इहा। मानस्यमा

१ २
२रुताः। इहा१(३) ॥ १२ † ॥ [६]

---

* ऋ० गा० १०प्र० २ख० ४सा०।

† ऊ० गा० १६प्र० १ख० १२सा०।

२ र र र र १ ०
॥ वारवन्तीयोत्तरम् ॥ इन्द्रायेन्द्राऔहोहायि । मा

२ ३ २ १ ५ २ १ २
रुत्वा२३४तायि । पवास्वा२३४हायि । मधुमत्ता ३ ४ ।

३र ४र ५ १ २ ५ २ ३ ५ २ १ २
आहोवा । इहा२३४हायि । उङ्वा२३४माः । अर्कस्य ।

१ ७र २ ३र ४र ५ १ २ ५ ३र २
योनिमासा३४ । औहोवा । इहा२३४हायि । औहो

५र ५ २ र र र १
३१२३४ । हाम् । एहियाईहा ॥(१) तन्त्वाविप्राऔहो

२ २ ५ २१ ५ १
हायि । वाचोवी२३४दाः । परायिष्का२३४हा । एवन्ति

२ ३र ४र ५ १ २ ५ २ ३ ५
धर्णा३४ । औहोवा । इहा२३४हायि । उङ्वा२३४सोम् ।

२ १ २ १ ७ र २ ३र ४र ५ १ ३
सन्त्वाम्ह । जान्तिआया३४ । औहोवा । इहा २ ३ ४

५ ३र २ ५र ५ २
हायि । औहो३१२३४ । वाः । एहियाईहा ॥(२) रसं

र र र १ २ ३ ५ २ १
न्तो मा । औहोहायि । नोअर्य्या२३४मा । पिवातू २३

५ १ २ ३र ४र ५ १ २ ५
४हायि । वरुणःका३४ । औहोवा । इहा२३४हायि ।

२ ३ ५ २ १ १र १ ७ २ ३र ४र ५
उङ्वा२३४वायि । पवमा । नास्य मरु३४ । औहोवा ।

१ २ ५ ३र २ ५र ५
इहा२३४हायि। औहो३१२३४। ताः। एहियाइहा।
४
हौं५ई। डा(३)॥ १६ * ॥ [७]

१२र १ र २ र १ २ १
॥ इडवद्वामदेव्यम्॥ तन्त्वा विप्रा वचोविदः। इहा।
१ २ १ र
परिष्कृण्वन्ति धर्णसा २ रयिम्। इहा। सन्त्वा मृजन्ता २
१ २ १ ५ ५
यि। इहा२। या२३४ वो६हायि(२)॥ १९ † ॥ [८]

२ र १ २ १ ३र
॥ मार्गीयवाद्यम्॥ रसौहोवा। तेमा२यि। चो
२ ३ ५ १ २ १ २ १ र
अर्या२३४मा। पिबन्तुव। रुणाःका१वा२यि। पव।
२ २ २ ५ १ २ ५र र २
औ३होयि। मा२३४ना। स्या२मा२३४औहोवा। ए३।
१ १११११
हुता२३४५ः(३)॥ २० ‡ ॥ [९] ११

---

* ऊ० गा० २२प्र० २अ० १६सा०।

† ऊ० गा० २२प्र० १अ० १९सा०।

‡ ऊ० गा० २२प्र० १अ० २०सा०।

मृज्यमानेति-प्रगाथात्मकं द्वितीयं सूक्तम्*—

तत्र प्रथमा ।

३ १ २ ३ १र २र
मृज्यमानःसुहस्त्यासमुद्रे वाचमिन्वसि ।
३ २ ३ १ २ ३ १ २र ३ २ ३ १ २ ३क २र
रयिम्पिशङ्गम्बहुलम्पुरुस्पृहम्पवमानाभ्यर्षसि ॥ १ †॥

हे "सुहस्त्या" [हस्ते भवा हस्त्या अङ्गुलयः] शोभनाङ्गुलिक सोम! "मृज्यमानः" शोध्यमानः त्वं "समुद्रे" अन्तरिक्षे कलशे वा "वाचं" शब्दम् "इन्वसि" प्रेरयसि। किञ्च हे "पवमान" पूयमान सोम! "पिशङ्ग" हिरण्यैः पिशङ्गवर्णं "बहुलं" प्रभूतं "पुरुस्पृहं" बहुभिः स्पृहणीयं "रयिं" धनम् "अभ्यर्षसि" स्तोतृणामभि चरसि प्रयच्छसि ॥ १ ॥

अथ द्वितीया ।

२ ३उ ३ १ २ ३ २ ३ १ २ ३ १ २
पुनानोवारेपवमानोअव्ययेवृषोअचिक्रदद्वने ।
३ १ २ ३ १र २र ३ १
देवानाꣳसोमपवमाननिष्कृतङ्गोभिरञ्जानो
२
अर्षसि ॥ २ ‡॥ १२

* 'बृहती, औद्गणोरम्भ-प्रभृतीनि आह्वाणोक्तानि'—इति वि० ।
† ऋ० आ० ६, १, २, ७ ( २भा० ३९७पृ० )=ऋ० वे० ७, ५, १६, १ ।
‡ ऋ० वे० ७, ५, १६, २ ।

"अयं" सोमः "वृषः" वृषभसदृशः* सन् "पुनानः" अभिषूयमाणः सर्वं शोधयतु "अव्यये" अविमये "वारे" वाले पवित्रे "पवमानः" पूयमानः सन् "वने" वननीये "उदके" काष्ठे कलशे वा† "अचिक्रदत्" शब्दमकरीत्। [अथ प्रत्यक्षवादः] हे "सोम! पवमान!" त्वं "गोभिः" गव्यैः क्षीरादिभिः‡ "अञ्जानः" अञ्जमानः¶ सन् "निष्कृतं" संस्कृतं§ देवानां स्थानम् "अर्षसि" गच्छसि॥ २॥ १२

॥ औक्ष्णोरन्ध्रम्॥ मृ२ज्य२रमानाः। सुहस्तिया३। सा१मू२३द्रा४यि५वा२। चमिन्वसा३यि। रा१यी२३रू४पा५यि२शा। गम्बऊला३म्। पू१हू२रं३स्पृ५र१२३४हा२रम्। पवमा१। ना। औ२३हो२। भियो२३४वा३। षा४५सो६हायि५॥ (१) पवमाना२र। भियर्षसा३यि। पा१वा२३४मा५ना२। भियर्षसा३यि। पू१ना२३

---

* 'वृषा उ इति पदपूरणः'—इति वि० सम्मतश्चैव छेदः पदकारस्य तथाहि—"वृषा१२र। उ३"—इति।

† 'वने—काष्ठमये द्रोणकलशे अथवा वने उदके मदीक्ष्यते'—इति।

‡ 'गोभिः—उदकैः अथवा गी-सम्भूतैः क्षीरैः'—इति वि०।

¶ 'अञ्जानः—मिश्रीयमाणः'—इति वि०।

§ 'निष्कृतं स्थानम्'—इति वि०।

४ ५ २र १र ३ ५ १र २
नोवा । रेपवमा३ । नोआ२र्व्या२३४यायि । वृषोअ ।

१ २ २ ५ ४ ५
चा । औ३हो । क्रदो२३४वा । वा५नो६हायि ॥(२)

२र १ २ ४ ५ २
वृषोअचायि । क्रदद्वना३यि । वार्षो३आचायि । क्रद

१ २ ४ ५ २ १
द्वना३यि । दायिवा३ना७सो । मपवमा३ । नना२यि

३ ५ १र २ १ २ २ १
ष्का२३४र्त्तीम् । गोभिर । जा । औ३हो । नओ२३

५ ४ ५
४वा । षा५सो६हायि(३) ॥ १ * ॥ [१]

२ १ र र र र
॥ स्वारैडमौक्षोरन्ध्रम् ॥ मृज्यमानःसुहस्त्या । समु

१ २ १ २ १ ७ २ २ २
द्रे वोवा । चामिन्वसि । रायिम्पिशा ३ । हा २ हा ।

१ २र २ १ २ १ २ २ २ १
गम्बहुलम्पुरुस्पृहम् । पवमाना३ । हा३हा । भियर्षा

१ २र र १ २ र १ २ १ २
२३३यि ॥(१) पवमानाभियर्षसि । पवमानोवा । भाय

१ र र २ २ २र र २ र र १ ३र
र्षसि । पूनानोवा ३ । हा २ हा । रेपवमानोअव्यये ।

१र २ २ २ १ ३
वार्षोअचा३यि । हा३हायि । क्रदद्दा२३ना३४३यि ॥(२)

* ऊ० गा० ३प्र० १अ० १सा० ।

१ र २ १ र २ र १ २ १ २ र १
वृषोऽअचिक्रदद्वने। वृषोऽअचोवा। क्रादद्वने। द्दायि
र र २ २ २ १ २र १ र
वानाऽ३सो३। द्दा३द्दा। मपवमाननिष्कृतम्। गोभा
२ २ २ र ५ २ २
यिरञ्जा२। द्दा३द्दा। नोऽअर्षा२३सा३४३यि। औ२३
४५ई। डा(३)॥ २ * ॥ [२]

२ १ र २ १ १
॥ वाजजित्† ॥ मृज्यमानःसुहा। स्तिया२। समू
१ र १ २र १ १
२हो। द्रेवा२हो। चामिन्वसायि। रया२यिऽ३हो
१ २ १ २र १
यि। पिशा२हो। गम्बङ्गलाम्। पूरुस्पृहाम्। पवा
१ र १ २र १ २ १ २र
२हो। माना२हो। भीयर्षसा३१उवा२३ ॥(१) पवमा
र १ १ १ र २र
नामिया। षसा२यि। पवा२हो। माना२हो। भी
१ १ र १ २र १ २र
यर्षसायि। पुना२हो। नोवा२हो। २पवमा। नो
१ १ १ २र १
अव्ययायि। वृषो२होयि। अचा२यिहोयि। क्राद
२ १ र २ १
द्वना३१उवा२३ ॥(२) वृषोऽअचिक्रदात्। वना२यि।

* ज० गा० ३प्र० १ख० २सा०।

† "बार्हद्वाजजिदौक्ष्णोरन्ध्रम्"—इति ख० पु० पाठः।

१ १ १ २र १ २ र
वृषो२होयि। अचा२यिहोयि। क्रादद्वनायि। देवा

१ र १ २ १ २र १ र
२हो। ना९सो२हो। मपवमा। नानिष्कृताम्। गो

१ १ २र १ २
भा२यिहौयि। अज्ञा२हो। नोऋर्षसा२१उवार३।

१र १र २ २
वाजीजिगी२वा९१(३) ॥ २ * ॥ [३]

१ र १ २ १ २ १
॥ वरुणसाम ॥ मृज्यमानःसुहस्त्योवा। ओवा। सा

२ र र १ २ १ २ १
मुद्रे वा। वमायिन्वा१सी२। रा२३यीम्। पा२३यि

२ १ २ १ २ १ ५ २ १
ष्रा। गम्बकुलम्। पुरू२३हायि। स्पृहा३मा। पव

२र र १ २ १ २ १ र २ ५ २
मानाभियर्षसि। पा२३वा। मानाभियौ३। हो३हो२३

५ ४ ५ २ र र १ २
४। वा। षा५सो६हायि ॥(१) पवमानाभियर्षसोवा।

१ २ १ २र र १ २ १ २
ओवा। पावमाना। भियार्षा१सा२यि। पू२३ना।

१ २ १र २ र १र २ १ ४ २
नो२३वा। रेपवमा। नोआ२३हायि। व्यया३आ।

१र २ १ १र १ २ १ २ ५ २
वृषोअचिक्रदद्वने। वा२३र्षो। आचिक्रदौ३। हो३१२३

* ऊ० गा० ३प्र० १अ० ३सा०।

५ ४ ५ २र १ २
४। वा। वा५नोई्हायि ॥(२) वृषोअचिक्रदद्वनोवा।
१ १ १र २ १ २ १ २
ओवा। वार्षोअचि। क्रदाद्दा१ना२यि। दार३यिवा।
१ २ १ २र १ २ १ ऽ २
नार२३९सो। मपवमा। नजार२३हायि। क्रता ३ मा।
२ १ २ १र २ १ १ १ २ २ ऽ
गोभिरञ्जानोअर्षसि। गो२३भायिः। आञ्जानऔ३।
२ १ ५ ४ ५
होइहोर२३४। वा। षा५सोई्हायि(३) ॥ ४ * ॥ [४]
२ऽ ऽ ऽ १ र
॥ अङ्गिरसाङ्गोष्ठम् ॥ हाउहाउहाउवा। मृज्यमा
२ १र ३ १ १ १ १ २ १ र र
नःसुहस्त्या। इहा। उपार२३४५। समुद्रे वाचमिन्व
१ २ १ १ १ १ २ १ २ १ २ १ २ १
सि। इहा। उपार२३४५। रयिम्पिशङ्गम्बहुलंपुरुस्पृ
२ १ २ १ १ १ १ १ २र र १ २ १
हम्। इहा। उपा २ ३ ४ ५। पवमानाभियर्षसि। इ
३ १ १ १ १ १ २र र १ २ १
हा। उपार२३४५ ॥(१) पवमानाभियर्षसि। इहा। उ
३ १ १ १ १ १ २र २ १ २ १ ३ १ १ १ १
पार२३४५। पवमानाभियर्षसि। इहा। उपार२३४५।
१र १र र र १र र १ २र १ ३ १ १ १ १ १र
पुनानोवारेपवमानोअव्यये। इहा। उपार२३४५। वृषो

* ऊ० गा० ३प्र० १अ० ४सा०।

२ १२र १ ३ १ १ १ १ १र २ १
अचिक्रदद्वने। इ्हा। उपा२३४५॥(२) वृषोअचिक्रद

२र १ ३ १ १ १ १ १र २ १२र १
द्वने। इ्हा। उपा२३४५। वृषोअचिक्रदद्वने। इ्हा।

३ १ १ १ १ २र१र र २र र १
उपा२३४५। देवाजा७सोमपवमाननिष्कृतम्। इ्हा।

३ १ १ १ १ २उ ऽ ऽ १र २ र २र २
उपा२३४५। हाउहाउहाउवा। गोभिरञ्जानोअर्षसि।

१ ३ १ १ १ १
इ्हा। उपा२३४५(३)॥ ५ *॥ [५]

१ १ र २ १ २ १ र २
॥ सम्मतम्॥ मृज्यमानःसुहस्तिया। समुद्रे वाऽच

१ २ १ २ २ १
मिन्वसायि। रयिम्पा२३यिशा। गाम्बद्भलम्। पुरुस्प

२ ३ ३ १ ३र १ १ २ १
हाम। औहो३४वाहायि। प। वामा२३ना ३। हो

२ २ १ २ ११२र र १ २ १
वा३हा। भियर्षा२३सा३४३यि॥(१) पवमानाभियर्षसा

र २ १ २ र र १ २ १र
यि। पुनानो२३वा। रेपवमा। नोआव्यार्या। औ

२ ४ ३र २ १ २ १ २ २
हो३वाहायि। वृ। षोआ२३चा३यि। होवा३हायि।

१ २ र १ १ १ १ र
क्रदद्वा२३ना३४३यि॥(२) वृषोअचिक्रदद्वनायि। वृषो

---

* ऊ० गा० ३प्र० २अ० ५सा०।

२ १ २ र २ १ २ र
अचायिक्रदद्वनायि । देवाना२३९सो । मापवमा । न
१ ३ ३र २ ३र २ १र
नायिष्कार्त्ताम् । औहो३४वाहायि । गो । भायिरा
२ १ २ २ र १ २ १
२३ज्ञा३ । होवा३हा । नोअषार३सा३४३यि । ओ
२३४५ई । डा(३) ॥ ५ * ॥ [६]

२ र र र १ २
॥ त्रिणिधनमायास्यम् ॥ मृज्यमानःसुहाहाउहोवा ।
१ २ ३ ५ १र ३ २ ३
स्तायासार२३४म् । द्रेवा२ । चमा३४५यि । न्वार ३ ४
१ २ ३र ४र ५ १ ३
सी । रया३४ । औहोवा । पिशङ्गम्बङ्कलार२म् । पुरु
३ ५ १ २ ३र ४र ५ १
३४५ । स्पर३४हाम् । पवा३४ । औहोवा । माना२ ।
३ २ ५ ५ २ र र र र १ २
भिया३४५ । षा२३४सी ॥(१) पवमानाभियाहाउहोवा ।
१ २ ३ ५ १र ३ ३ ५
षासायिपार३४वा । माना२ । भिया३४५ । षा२३४सी ।
१ २ ३र ४र ५ १र र र ३र २
पुना३४ । औहोवा । नोवारेपवमा२ । नोआ३४५ ।
३ ५ १ २ ३र ४ ५ १ ३ २
व्यार३४ये । वृषो३४ । औहोवा । आचा३यि । क्रदा

* ज० गा० ८प्र० १अ० ५गा० ।

३ ५ २र र १२ १
३४५त्। वार२३४ने ॥(२) वृषोअचिक्रदद्वाउहोवा । वा।
२ ३ ५ १ ३२ ३
वानायिवार२३षा। अचारयि। क्रदा३४५त्। वार२३४
५ ४ २ ३र ४र ५ १र र ३१
ने। देवा२३४। औहोवा। नाꣳसोमपवमा२। नना
३ ५ १र २ ३र ४र ५ १
३४५यिः। का२३४र्त्ताम्। गोभा२३४। औहोवा। आ
३ २ ३ ५
ञ्जा२। नआ३४५। षा३४५। षा२३४सी(३) ॥ ६* ॥ [७]
५४ २ ४ ५ ४ ५ १ २र
॥ अभीवर्त्तम् ॥ पवा३मा३ना॒भियर्षसोवा। पावमा
र १२ १ र र २ ३र ४ ५र
ना। भियार्षा१सा२यि। पूनानोवा३१२३४। रेपवमा।
२र १ २ १ २ ३ २ १
नोआव्या१या२यि। वृषोआ१चा२यि। क्रदा३त्। वा
३ १ १ १ १
२३४५। ना२३४५यि(२) ॥ ८ † ॥ [८]
५ र २ ४ ५ ४ ५ २ १ २ १
॥ कालेयम् ‡ ॥ वृषोआ३चिक्रददनायि। वृषोअचा
२ ३ २ १ २र ३र र २ १ ३
यि। क्रददना२३यि। देवानाꣳसो३। मा२३४। पव

* ऊ० गा० ८प्र० १ख० ६सा० ।

† ऊ० गा० ८प्र० १ख० ८सा० ।

‡ "महाकालेयम्"—इति ख० पु० पाठः ।

४र ५ २ २ १र ३ १ २
माननिः । क्रा२र्त्ताम् । गोभायिरजौ । वा३४३ । औ

५ ४र ४
३४वा । नोआपूर्षसायि । होप्ई । डा(३) ॥ ८ ॥ [९]

५ ४ ५र ३र २ ३र ४र ५ १
॥ पौरुमीढम् ॥ पवमा । नाभा३४औहोवा । आ

२ १ २र र १ २ १र र र
र्षसि । पवमाना । भियर्षा२३सायि । पुनानोवा । रे

२ र १ र २ १
पवा२३मा । नोअव्ययायि । वृषोआ२३चायि । क्रद

१ २ १ १ १ १ १
दा२३४५ना६५६यि । दचाइया२३४५(२) ॥ १२ † ॥[१०]

२ऽ ऽ ऽ र
॥ आङ्गिरसाङ्गोष्ठम्‡ ॥ हाउहाउहाउवा । पुना

१र र २र १ २र र १ २र १ ३ १ १ १ १ १ र १
नोवारेपवमानोअव्यये । इहा । उपा२३४५ । वृषोअ

१ २र १ ३ १ १ १ १ २र १र र २र
चिक्रदद्वने । इहा । उपा२३४५ । देवाना९सोमपव

र १ ३ १ १ १ १ २ऽ ऽ ऽ
माननिष्कृतम् । इहा । उपा२३४५ । हाउहाउहाउ

---

* ऊ० गा० ८प्र० २ख० ९सा० ।

† ऊ० गा० ९प्र० २ख० १२सा० ।

‡ 'प्रतोदगोष्ठम्"—इति ख० पु० पाठः ।

१र २र १र २ १ ३ १ १ १
वा। गोभिरञ्जानोअर्षसि। इहा। उपा२३४
१
५(२)॥५*॥[११]

२र १र२र १२१ २१र
॥कण्वरथन्तरम्॥ पावमानाभियर्षसायि। पवमा
२ १ २ २ र र र र र र २
ना। भा३यार्षा३सायि। पुनानोवारिपवमानोअव्यया
५र २१र ५ २ २
२३४ऐही। वृषोआ२३४चायि। क्रदा३१उवा२३। ए३।
२३१
वनआ(२)॥१४†॥[१२]

२र १र२ १२१ २१र
॥कण्वरथन्तरम्॥ मार्ज्यमानःसुहस्तिया। समुद्रे
२ १ १ २
वा। चा३मायिन्वा३सायि। रयिम्पिशङ्गम्बहुलम्पुरुस्पृ
३ ५र २१ ५ १ २
हा२३४मैही। पवमा२३४ना। भिया३१उवा२३। ए३।
२३२
षसआ(१)॥७‡॥[१३]

२१र१ १र
॥अर्कपुष्पोत्तरम्॥ मृज्यमानःसुहस्त्या। ऊवायि।

---

* ऊ० गा० १९प्र० २ख० ५सा०।

† ऊ० गा० १९प्र० २ख० १४सा०।

‡ ऊ०गा० २०प्र० २ख० ७सा०।

२र १ १२र २ १ २र १
औहोवा२। समुद्रेवाचमिन्वसि। ऊवायि। औहो

१ २१ २ १ २१ २ १ २र
वा२। रयिम्पिशङ्गम्बहुलम्पुरुस्पृहम्। ऊवायि। औ

१ १ २र र १ २ १ २र र
होवा२। पवमानाभियर्षसि। ऊवायि। औ। हो२।

३ ५र र १ २र र १ २ १
वा२३४। औहोवा ॥(१) पवमानाभियर्षसि। ऊवायि।

२र १ र १र र २र१ २र र १ ३र १
औहोवा२। पुनानोवारेपवमानोअव्यये। ऊवायि।

२र १ १र २ १ २र १ २र १
औहोवा२। वृषोअचिक्रदद्वने। ऊवायि। औ। हो२।

३ ५र र १र २ १२र १
वा२३४। औहोवा ॥(२) वृषोअचिक्रदद्वने। ऊवायि।

२र १ १र २ १ २र १ २र १
औहोवा२। वृषोअचिक्रदद्वने। ऊवायि। औहोवा

र१र र २र र १ २र
२। देवानांसोमपवमाननिष्कृतम्। ऊवायि। औ

१ १र २र १र २ १ २र १
होवा२। गोभिरञ्जानोअर्षसि। ऊवायि। औ। हो२।

३ ५र र २१ २र१र २ १र ३ १ १
वा२३४ औहोवा। अक्षन्देवाःपरमेवियो२मा२३

१ १
४५ नृ३) ॥ ८ * ॥ [१४] १२

* ऊ० गा० ७प्र० २अ० ८सा०।

एतमुत्यमिति तृचात्मकं तृतीयं सूक्तम्—

तत्र, प्रथमा ।

२ २ २२उ २ १ २ ३ २ २ १ २
एतमुत्यन्दशक्षिपोमृजन्तिसिन्धुमातरम् ।
१ २ ३ १ २
समादित्येभिरख्यत ॥ १ * ॥

"सिन्धुमातरं" यस्य सोमस्य सिन्धवो† नवः‡ मातरो भवन्ति । "त्यं" तम् "एतम्" इमम् सोमं "दश क्षिपः" दश-सङ्ख्याका अङ्गुलयो¶ "मृजन्ति" शोधयन्ति। अपि च सोऽयम् "आदित्येभिः"§ आदित्यैः "समख्यत" सङ्गच्छते ॥ १ ॥

अथ द्वितीया ।

१ २र२ २ ३ १ २ ३ १ २ ३ २२ २
समिन्द्रेणोतवायुनासुतएतिपवित्रआ ।
१ २र ३ १ २
सꣳसूर्य्यस्यरश्मिभिः ॥ २ ‖ ॥

---

* ऋ० वे० ७, १, १९, २ ।

† "सिन्धवः"—इति निघण्टु-प्रथम-त्रयोदशे नदीनामसु पठितम् ।

‡ —तास नव "इमम्मेगङ्गे ( १, ६, ७, ५ )"—इति बह्वृक्श्रुता ज्ञेयाः । तथाहि—गङ्गा, यमुना, सरस्वती, शुतुद्री, परुष्णी ( इरावती ), असिक्नी, मरुद्वृधा, वितस्ता, आर्जिकीया ( विपाट् ) ;—इत्येता नव ।

¶ "क्षिपः"—इति निघण्टावङ्गुलिनामसु तृतीयम् ( २, ५ ) ।

§ "बहुलञ्छन्दसि ( ७, १, १० )"—इति भिस ऐसभावः ।

‖ ऋ० वे० ७, १, १९, ३ ।

"सुतः" अभिषुतः सोमः "पवित्रे" "इन्द्रेण" "सम् एति" सङ्गच्छते। "उत" अपि च "वायुना" समेति "सूर्य्यस्य "रश्मिभिः" किरणैरपि समेति ॥ २ ॥

अथ तृतीया।

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २
सनोभगायवायवेपूष्णेपवस्वमधुमान्।

१ २ ३ १ २र
चारुर्मित्रेवरुणेच ॥ ३ * ॥ १३

हे सोम! "मधुमान्" मधुररसः "चारुः" कल्याण-रूपश्च सोऽभिषुतः त्वं "नः" अस्माकम् यज्ञे "भगाय" भगाख्याय देवाय "वायवे" "पूष्णे" च "मित्रे" मित्राय देवाय "वरुणाय" च "पवस्व" क्षर ॥ ३ ॥ १३

२र १ २ १ २ १ २ १ २
॥ इहवद्वामदेव्यम् ॥ एतमुत्यन्दशक्षिपः। इहा। मृ

१ र १ २ १ र र १ २
जन्तिसिन्धुमातरा२म्। इहा। समादित्येभिरा२। इहा

१ ५ ५ १ र र २र १ २र १ २र १
३। ख्या२३४ौहोइहायि ॥(१) समिन्द्रेणोतवायुना। इ

२ १ र १ २ १ र
हा। सुतएतिपवित्र आ२। इहा। स९सूर्यस्यरा२।

१ २ १ ५ ५ १ २र १ र २ र १ २र
इहा३। श्मा२३४यिभौहोइहायि ॥(२) सनोभगायवायव।

---

* ऋ० वे० ७, १, १९, ४।

१ २२ १र १ २ १र र
इहा । पूष्णो पवस्वमधुमा २न् । इहा । चारुर्म्मिन्वे व

१ २ १ ५ ५
हू २ । इहा३ । णा२३४यिचो६हायि(३) ॥ ६ * ॥ [१]

५र ४ २ ४ ५ २ १
॥ अयासोमीयम ॥ एता३मू३त्यन्द ुाच्चिपाः । मृज

१ २र १
न्तिसायि । धुमा२ता२३४राम् । सामादित्या२३यि ।

२ ४ ५ ४ २ ४र ५र २
भिरा३ख्या५ुनाई५ई ॥(१) समा३यिन्द्रे ३णोतवायुना । सु

१ र ३ ५ १ २र १
तएतायि । पवा२यित्वा२ ३ ४ आ । सा९सूरिया २ ३ ।

२ ४ ५ ४ २ ४र ५र
स्यरा३स्मा५यिभा६५ईयिः ॥(१) सनो३भा३गायवायवायि ।

२र १र ३ ५ १ २ १
पूष्णोपवा । स्वमा२धू२३४मान् । चारुर्म्मि त्वा २ ३ यि ।

२ ४
वहू३णा५यिचा६५६(३) ॥ १४ † ॥ [२] १३

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य सप्तमस्याध्यायस्य
चतुर्थः खण्डः ‡ ॥ ४ ॥

---

* ऊ० गा० ३प्र० २अ० ७सा० ।

† ऊ० गा० १२प्र० २अ० १४सा० ।

‡ "उक्तो माध्यन्दिनः पवमानः"—इति वि० ।

अथ पञ्चमे खण्डे*—

रेवतीर्न-इति तृचात्मकं† प्रथमं सूक्तम्—

तत्र, प्रथमा ।

३र २ ३ २ ३ १ २ ३ १ २
रेवतीर्न्नःसधमादइन्द्रे सन्तुतुविवाजाः ।
२ १ ३ २ ३ १ २
क्षुमन्तोयाभिर्म्मदेम ॥ १‡ ॥

"क्षुमन्तः" अन्नवन्तः "याभिः" गोभिः सह "मदेम" हृष्येम "इन्द्रे" "सधमादे" अस्माभिः सह हर्षयुक्ते सति "नः" अस्माकं ता गावः "रेवतीः" क्षीराज्यादि-धनवत्यः "तुविवाजाः" प्रभूत-बलाश्च "सन्तु" ॥ [रेवतीः—रयि-शब्दात् मतुपि "रयेर्मतौ बहुलम् (६, १, ३४ वा०)" —इति सम्प्रसारणम, परपूर्वत्वे, "छन्दसीरः (८, २, १५)"—इति मतुपो वत्वम्, "वाच्छन्दसि (६, १, १०६)"—इति पूर्वसवर्णदीर्घः, "रे-शब्दाच्च मतुप उदात्तत्वं वक्तव्यम (६, १. १७६ वा०)"—इति रे-शब्दादुत्तरस्यापि भवतीति पूर्वमेवोक्तम् । सधमादे—मद तृप्ति योगे चौरादिकः, सह मादयतीति सधमादः "सधमादस्थयोश्छन्दसि (६, ३, ९६)"—इति सह-शब्दस्य सध आदेशः, थाथादिना (६, २, १४४)—उत्तर-पदान्तोदात्तत्वे प्राप्ते "परादिश्छन्दसि

* 'दशानी छन्दांसि'—इति वि० ।

† 'रेवतीषु वारवन्तीयं छन्दः भवति'—इति वि० ।

‡ ऋ० आ० २, २, १, ९ (१मा०' ३५३पृ०)=ऋ० वे० १, २, ३०, २ ।

बहुलम् ( ६, २, १९९ )”—इति उत्तरपदाद्युदात्तत्वम्। तुविवाजाः—बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ( ८, २, १ )। द्युमन्तः—द्यु स्तु रु कु शब्दे ( अदा० प० ), अस्मात् क्विपि तुगभावश्छान्दसः, “ह्रस्वनुड्भ्यां मतुप् ( ६, १, १७६ )”—इति मतुप उदात्तत्वम्। मदेम—मदी हर्षे ( दि० प० ), व्यत्ययेन शप्, अदुपदेशाल्लसार्वधातुकानुदात्तत्वे शपः पित्त्वादनुदात्तत्वम्, ततो धातुस्वरः शिष्यते ॥ १ ॥

अथ द्वितीया ।

२ ३ २ ३ १ २ ३ २ ३ १ २ ३ २
आघत्वावांत्मनायुक्तस्तोतृभ्योधृष्णवीयानः ।
३ २उ ३ २ ३२ २र
ऋणोरक्षन्नचक्र्योः ॥ २ * ॥

हे “धृष्णो !” धार्ष्ट्ययुक्तेन्द्र !† “त्वावान्” त्वसदृशो देवताविशेषः, “त्मना” आत्मना अस्मदनुग्रह-बुद्ध्या युक्तः “ईयानः” अस्माभिर्याच्यमानः “स्तोतृभ्यः” स्तोतॄणामनुग्रहाय तदभीष्टमर्थं “घ” अवश्यम्‡ “आ ऋणोः” आनीय प्रक्षिपतु । तत्र दृष्टान्तः—“चक्र्योः” रथस्य चक्रयोः “अक्षं न” यथा अक्षं प्रक्षिपति तद्वत् ॥ त्वावान् वतुप्प्रकरणे “युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसङ्ख्या

---

* ऋ० वे० १,२,३०,४ ।

† ‘धृष्णो—धारण-स्वभावः’—इति वि० ।

‡ ‘घ—इति पद-पूरणः’—इति वि० ।

नम् ( ५, २, ९४ वा० )"—इति वतुप् "प्रत्ययोत्तर-पदयोश्च (७, २, ९८ )"—इति मपर्यन्तस्य त्वादेशः, "आ सर्वनाम्नः ( ६, ३, ९१ )"—इति दकारस्यात्वं, वतुपः पित्त्वादनुदात्तत्वे (३, १, ४) प्रातिपदिक-स्वरः शिष्यते। त्मना—"मन्त्रे-ष्वाङ्यादेरात्मनः (६, ४, १४१ )"—इत्याकार-लोपः। धृष्णो—ञि धृषा प्रागल्भ्ये, "त्रसिगृधि-धृषि-क्षिपेः क्नुः, आम-न्त्रितानुदात्तत्वम्। ईयानः-ईङ् गतौ, ( दि० आ० )छन्दसि लिट् ( ३, २, १०५ ), तस्य "लिटः कानज्वा ( ३, २, १०७ )" —इति कानजादेशः, "अचिश्नु धातु ( ६, ४, ७७ )"—इत्या-दिना इयङादेशः,"चितः ( ६, १, १६३ )"—इत्यन्तोदात्तत्वम्। कृणोः—कृण गतौ ( तना० उ० ) लङि व्यत्ययेन तिपः सिपि ( ३, १, ८५ ), "इतश्च ( ३, ४, ९७ )"—इतीकारलोपः, "तनादि-कृञ्भ्य उः ( ३, १, ७९ )",—सार्वधातुकगुणः ( ७, ३, ८४ ), "बहुलञ्छन्दस्यमाङ्योगेऽपि"—इत्यडागमा-भावः, विकरण-स्वरेणान्तोदात्तत्वम्। अत्नम्—"अत्नस्यादेवनस्य ( फि० २, १२ )"—इत्याद्युदात्तत्वम्। चक्रोः—"अकारस्यैका-रश्छान्दसः ( ३, १, ८५ )" ॥ २ ॥

अथ तृतीया।

१र　२र　३ १र　२र　३ २
आयद्द्वः शतक्रतवाकामञ्जरितॄणाम्।
३ २उ　३ १र　२र
कृणोरत्नंशचीभिः ॥ ३ * ॥ १४

हे "शतक्रतो" इन्द्र! "यत्" "दुवः" धनं[१] कामितार्थ-

---

* ऋ० वे० १,२,३,५।

रूपम् स्तोतृभिः आप्तव्यमस्ति तं कामं "जरितॄणां" स्तोतॄणा-मनुग्रहाय "आ ऋणाः" आनीय प्रक्षिपसि। तत्र दृष्टान्तः— "शचीभिः" कर्मभिः शकटोचित-व्यापार-विशेषैः "अक्षं न" यथा अक्षं प्रक्षिपति तद्वत् ॥ [शचीभिः—शची-शब्दः शार्ङ्गरवादित्वात् (४, १, ७३) ङीबन्तत्वादाद्युदात्तः (३, १, ४)॥ ३ ॥ १४

२ २र र र १ २
॥ वारवन्तीयोत्तरम् ॥ रेवतीर्नऔहोहायि। सा
३ ५ २ २ १ ५ १ ०
धामा२३४हायि। इन्द्रायिसा२३४हा। तुतुविवा३४।
३र ४र ५ ३ ३ ५ २ ३ ५ २ १
औहोवा। इहा२३४हायि। उत्कुवा२३४जाः। त्तुम
२ १ ७ २ ३र ४र ५ १ ३ ५
न्तः। याभिर्मदा३४। औहोवा। इहा२३४हायि।
३र २ ५र ५ २र र र
औहो३१२३४। सा। एहियाई६हा॥(१) आघत्वावा२
र १ २ ३ ५ २र १ ५
औहाहायि। त्मानायू२३४त्काः। स्तोतृभ्यो२३४हायि।
१ र २ ३र ४र ५ १ ३ ५ २ ३
धृष्णुवीया३४। औहोवा। इहा२३४हायि। उत्कुवा
५ २ १र २ १ ७ २ ३र ४र ५ १ ३
२३४नाः। ऋणोर। त्वान्नचक्रा३४। औहोवा। इहा
५ ३र २ ५र ५
२३४हायि। औहो३१२३४। योः। एहियाई६हा॥(२)

१र २ २ १ २ ३ ५ १र १
आयहु वाऔहोहायि। आतंक्षा२३४ताउ। आकामा२३

५ १ १ ३र ४र ५ १ २ ५
४५हायि। जरितृ३४। औहोवा। इहा२ ३ ४ हायि।

२ २ ५ २ १र २ १ ७ २ ३र २र ५
उक्थवा२३४णाम्। क्ष्णोर। हान्नशचा३४। औहोवा।

१ २ ५ ३र २ ५र ५
इहा२३४हायि। औहो३१२३४। भीः। एहियाईहा।

४
होपई। डा(३)॥ ७ *॥ [१] १४

सुरूपकृत्नुमिति तृचात्मकं द्वितीयं सूक्तम्,

तत्र, प्रथमा ।

२ २ ३ १ २ ३ १ २ ३ १ १
सुरूपकृत्नुमूतये सुदुघामिवगोदुहे ।
२ ३ १ २ २
जुहूमसिद्यविद्यवि ॥ १ † ॥

"सुरूपकृत्नुं" शोभन-रूपोपेतस्य कर्मणः कर्त्तारमिन्द्रं "ऊतये" अस्मद्रक्षणार्थम् "द्यवि द्यवि" प्रतिदिनं "जुहूमसि" आह्वयामः ॥ [द्यो-शब्दः प्रातिपदिक-स्वरेणान्तोदात्तः(फि० १,१), "नित्य वीप्सयोः(८,१,४)"—इति द्विर्भावः, 'तस्यपरमाम्रेडितम्

---

* ऊ० गा० ३प्र० २ख० ७सा० ।

† छ० आ० २,२,२,६ (१भा० २६६पृ०) = ऋ० वे० १,४,७,१ ।

(८, १, २) "अनुदात्तञ्च (८, १, २)"—इति द्वितीयस्यानुदात्तत्वम्। जुहूमसि—इत्यत्र "इदन्तोमसि (७, १, ४६)"—इति इकार आगमः, प्रत्यय-स्वरेण (३, १, ३) इकारउदात्तः] आह्वाने दृष्टान्तः—"गोदुहे" गोधुगर्थं [ गां दोग्धीति गोधुक्; सत्सु द्विषेत्यादिना (३, २, ६१) क्विप्, कृदुत्तरप्रकृतिस्वरत्वम् (६,२, १३९)] "सुदुघाम् इव" सुष्ठु दोग्ध्रीं गामिव यथा लोके यो दोग्धा तदर्थं तस्य आभिमुख्येन दोहनीयां गामाह्वयन्ति तद्वत् [सुष्ठु दुग्धे इति सुदुघा, "दुहः कब्घश्च (३,२,७०)"—इति कप् प्रत्ययः हकारस्य च घकारः, कित्वात् गुणाभावः (१, १, ५), कपः पित्त्वादनुदात्तत्वे धातुस्वरेणोकार उदात्तः(६,१,१६२)॥१॥

अथ द्वितीया।

१ २ ३ २ ३ १ २ ३ १ २
उपनःसवनागहिसोमस्यसोमपाःपिब।

२ ३उ ३ १ ३ १ २
गोदाइद्रेवतोमदः॥ २ *॥

हे "सोमपाः" सोमस्य पातरिन्द्र! सोमं पातुं "नः" अस्मदीयानि "सवना" सवनानि त्रीणि "उप" समीपे "आ गहि" आगच्छ [ सवना—सूयते सोम एष्विति सवनानि सुपो डादेशः(७,१,३९) टिलोपश्च(६,४,१४३); "लिति(६,१,१९३)-इति प्रत्ययात् पूर्वस्या-"

* ऋ० वे० १,४,७,२।

कारस्य उदात्तत्वम् । गहि—इत्यत्र गमेः "बहुलञ्छन्दसि (२,४,७३)—इति शपो लुक्, हेर्ङित्त्वादनुदात्तोपदेशेत्यादिना (६,४,३७) मकार-लोपः, "अतोहेः (६,४,१०५)"—इत्याभीय-शास्त्रीये लुकि कर्त्तव्ये "असिद्धवदत्राभात् (६,४,२२)"—इति आभाच्छास्त्रीयो मकार-लोपोऽसिद्धवद् भवति]। आगत्य च "सोमस्य" सोमं "पिब", "रेवतः" धनवतः तव "मदः" हर्षः "गोदा इत्" गोप्रद एव, त्वयि हृष्टे सति अस्माभिर्गावो लभ्यन्त इत्यर्थः ॥२॥

अथ तृतीया ।

१ २ ३ १ २    २ १ २    ३ २<br>
अथाते अन्तमानांविद्यामसुमतीनाम् ।

२ ३ १ २ ३ १ २<br>
मानोअतिख्यआगहि ॥ २ * ॥ १५

"अथ" सोमपानानन्तरं हे इन्द्र ! "ते" तव "अन्तमानाम्" अन्तिकतमानामतिशयेन तव समीपवर्त्तिनां "सुमतीनां" शोभन-मति-युक्तानां शोभन-प्रज्ञानां पुरुषाणां मध्ये स्थित्वा "विद्याम" वयं त्वां जानीयाम [यद्वा, सुमतीनां शोभन-बुद्धीनां कर्मानुष्ठान-विषयाणां लाभार्थे मित्यध्याहारः बहुव्रीहि-पक्षे पूर्वपद-प्रकृति-स्वरापवादो "नञ्-सुभ्याम् (६,२,१७२)"—इत्युत्तर-पदान्तोदात्तः। कर्म्मधारय-पक्षेऽपि अव्यय-पूर्वपद-प्रकृति-स्वरापवाद-कृत्स्वरेणान्तोदात्ततैव (६,२,१३९)। अतो मतुपि ह्रस्वादन्तोदात्ताच्च सुमति-शब्दात् परस्य नामो "नाम-

* ऋ० वे० १, ४, ७, ३ ।

न्यतरस्याम् (६,१,१७७)"—इत्युदात्तत्वम् ]। त्वमपि "नः" अस्मान् "अति" अतिक्रम्य "माख्यः" अन्येषां त्वत्स्वरूपं मा प्रकथयः [ख्या प्रकथने (अदा० प०)—इत्यस्य लुङि "अस्यतिवक्तिख्यातिभ्योऽङ् (३,१,५२)"। आगहि——गमेः शपो लुकि ङित्त्वादनुदात्तोपदेशेति (६,४,३७) मकार-लोपस्यासिद्धवदत्राभादिति (६,४,२२) असिद्धवद्भावात् "अतो हेः (६,४,१०५)"—इति लुङ् न भवति ॥ ३ ॥ १५

उभेयदिन्द्ररोदसीति-तृचात्मकं तृतीयं सूक्तं;

तत्र, प्रथमा।

३ १र २र ३ १ २ २ २ ३ १ २
उभेयदिन्द्ररोदसीआपप्राथोषाइव।
३ १ २ ३ १ २ ३ १ २ २ २
महान्तन्त्वामहीनाꣳसम्राजञ्चर्षणीनाम्॥
३ १र २र ३ १र २र
देवीजनित्र्यजीजनद्भद्राजनित्र्यजीजनत्॥ १ * ॥

हे "इन्द्र!" "उभे" "रोदसी" द्यावापृथिव्यौ "यत्" यः त्वम् "आ पप्राथ" स्वतेजसा आपूरयसि [प्रा पूरणे, आदादिकः (प०). छान्दसो लिट् (३,२,१०५)] "उषा इव" यथा उषाः स्व-भासा सर्वं जगदापूरयति तद्वत् त्वं "महीनां" महतां देवानामपि "महान्तम्" अधिकं "चर्षणीनां" मनुष्याणामपि

* ऋ० ग्रा० ४,१,४,१० (१भा० ७७७पृ०)=ऋ० वे० ८,७,२२,१।

"सम्राजम्" ईश्वरम् इन्द्र "त्वा" त्वाम् "देवी" देवनशीला "जनित्री" साधु-जनयित्री अदितिः "अजीजनत्" अतः कारणात् सा "भद्रा" कल्याणी प्रशस्ता "जाता" [जनेर्ण्यन्तात् साधुकारिणि तृन् (३,२,१३४), "जनिता मन्त्रे (६,४,५३)"—इति इड़ादौ णि-लोपो निपात्यते, ऋन्नेभ्यइति ङीप् (४,१,५) ॥ १ ॥

अथ द्वितीया ।

२ १    १ २ १ २ ३ १ ३ १ २
दीर्घꣳह्यङ्कुशंयथाशक्तिम्बिभर्षिमन्तुमः ।
१ १    १ २ ३ २ ३ १र २र
पूर्वेणमघवन्पदावयामजोयथायमः ।
३ १र २र    ३ १र २र
देवीजनित्र्यजीजनद्भद्राजनित्र्यजीजनत् ॥ २ * ॥

"दीर्घम्" आयतम् "अङ्कुशं" सृणिं "यथा विभर्षि" एवमायतां "शक्तिं" हे "मन्तुमः" मन्तु ज्ञाने, तद्वन् ! ["मतुवसो रुः (८, ३, १ )"—इति सम्बुद्धौ नकारस्य रुत्वम्] ईदृशेन्द्र ! विभर्षि धारयसि [डु भृञ् धारण-पोषणयोः जौहोत्यादिकः, श्लौ "भृञामित् ( ७, ४, ७६ )"—इत्यभ्यासस्येत्वम् ] हे "मघवन्" धनवन्निन्द्र ! यथा "पूर्वेण" देहस्य पूर्वभागे वर्त्तमानेन "पदा"

* ऋ० वे० ८, ७, ११, ५ ।

पादेन "अजः" छागः "वयां" शाखां आकर्षति तथा पूर्वोक्तया शक्त्या आक्रम्यामः शत्रून् [नियच्छसि--यमेर्लेटरड़ागमः, "बहुलं छन्दसि (२, ४, ७३)"--इति शपो लुक्]। गतमन्यत् ॥ २ ॥

अथ तृतीया।

१ १ ३ १र २र ३ २
अवस्मदुर्हणायतोमर्त्तस्यतनुहिस्थिरम्।
३ १र २र ३ २ ३ १ २ ३ १ २
अधस्पदन्तमीङ्कृधियोअस्माꣳअभिदासति॥
३ १र २र ३ १र २र
देवीजनित्र्यजीजनद्भद्राजनित्र्यजीजनत्॥ ३* ॥१६

"दुर्हणायतः" दुःखप्रद-हरणमाचरतः "मर्त्तस्य" मनुष्यस्य शत्रोः "स्थिरं" दृढं बलम् "अव तनुहि" अवततं नीचीनं कुरु। "स्म"--इति पूरकः। "तम्" शत्रुम् "ईम्" एनम् अधस्पदं पादयोरधस्ताद्वर्त्तमानं "कृधि" कुरु। "यः" शत्रुः "अस्मान्" "अभिदासति" उपक्षिपति†। समानमन्यत् ॥३॥१६

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य सप्तमस्याध्यायस्य

पञ्चमः खण्डः ॥ ५ ॥

---

* ऋ० वे० ८, ७, २१, ३।

† 'अभिदासति--हिंसां करोति'--इति वि०।

अथ षष्ठे खण्डे *—

परिस्वानइति-तृचात्मके प्रथमं सूक्तम्,

तत्र, प्रथमा ।

१ २ ३ १ २ ३ २ ३ २ ३ १ २
परिस्वानोगिरिष्ठाःपवित्रेसोमोअक्षरत् ।

१ २ ३ १ २
मदेषुसर्वधाअसि ॥ १ † ॥

अयं "सोमः" "पवित्रे" दशापवित्रे "पर्यक्षरत्" परितः क्षरति । कीदृशः सन् ? "स्वानः" शब्दायमानः ["सुवानः"-इति बह्वृचानां पाठः] सूयमानः "गिरिष्ठाः" गिरिस्थायी ग्रावसु वर्त्तमान इत्यर्थः । हे सोम ! स त्वं "मदेषु" मादकेषु सोमेषु "सर्वधा असि" सर्वस्य धाता दाता च भवसि ॥ १ ॥

अथ द्वितीया ।

२उ ३ १ ३ २उ ३ १ २ ३ १र १र
त्वंविप्रस्त्वंकविर्मधुप्रजातमन्धसः ।

१ २ ३ १ २
मदेषुसर्वधाअसि ॥ २ ‡ ॥

---

* ['इदानीमार्भवो वक्तव्यः । तत्र च वैदन्वत-प्रभृतीनि सामानि, ब्राह्मणोक्तार्षाणि'—इति वि० ।

† छ० आ० ५,२.४,९ ( २भा० २६पृ० )=ऋ० वे० ६, ८, ८, १ ।

‡ ऋ० वे० ६, ८, ८, २ ।

हे सोम ! "त्वं" "विप्रः" विविधं प्रीणयिता विप्रसदृशो वा त्वञ्च "कविः" मेधावी, अतस्त्वम् "अन्धसः" अन्नात् जातं "मधु" मधुरसं प्रयच्छसीति शेषः ॥ २ ॥

अथ तृतीया ।

१र १र३ १ २ ३ १२ ३ १ २
त्वेविश्वसजोषसोदेवासःपीतिमाशत ।
१ २ ३ १ २
मदेषुसवधाअसि ॥ ३ * ॥ १७

हे सोम ! "त्वे" त्वयि "पीतिं" पानं "विश्वेदेवासः" सर्वे देवाः "सजोषसः" समान-प्रीतयः सन्त "आशत" प्राप्नुवन् ॥ ३ ॥ १७

३ २ ४ २ ४
॥ तृतीयंवैदन्वतम् ॥ पाऽ५रि। स्वानो३गा३यिरि
५ २ १ १र १र १र २ २ १ २ १ २२ १
ष्ठाः। पवित्रेसौ। मोअक्षरात्। पवित्रे। सोमो२३।
४ ५ ३ ४ २ ४ ५ २ १
क्षारात् ॥(१) तूऽ५वम्। विप्रा३स्तू३वङ्कवायिः। मधु
२ १ २ ३ २ १ २ १ र ४ ५
प्रजा। तमन्धसाः। मधुप्रजा। तमा२३। धासाः ॥(१)
० र ४ २ ४र ५ २र १र २ १ २ ३र
तूऽ५वे। विश्वे३सा३जोषसाः। देवासःपायि। तिमा

* ऋ० वे० ६, ८, ८, ३।

१ १   १२ र र   १   ४ ५   १
शता। देवैस:पी। तिमा२३। शाता। औयि।

२   २ ५   २ १   ३ १र
मदौ। वा३४३ओ३४वा। पुवा। सर्वधाः। असायि।

२   ५र र   २   २   १र   २ १ १ १ १ १
मा२दा२३४औहोवा। ए३। पुसर्वधाअसी२३४५॥८*॥[१]

१ २   र र   र   १
॥ वैदन्वताद्यम्॥ पारौ। स्वानोगिरिष्ठाः। पवा

२   ५   २र   १   १ २
२यिश्वे२३४सो। मोअचारा२त्॥(१) तूवाम्। विप्र

१   ३   ५   २   १
स्त्वङ्कविः। मधू२प्रा२३४जा। तमन्वामासा२ः॥(२)

१ २   र र   १र   ३   ५   २ र   १
तूवे। विश्वेसजोषसः। देवा२सा२३४ःपी। तिमाशा

१   २   ३ २   २ १   ५   ४
ता२। मदायिषूसा३। ई३या३। वंधो२३४वा। आ

५
५सो६हायि॥९†॥[२]

३   २   १ २३र २ १
॥ चतुर्थवैदन्वतम्॥ औ३होयि। इहहाहहायि।

३   ५   २   ३   ५   २ ३   ५
औ२हो२३४वा। परा२यिस्वा२३४नो। गिरा२३४यिष्ठाः।

---

* ऊ० गा० ३प्र० २ख० ८सा०।

† ऊ० गा० ३प्र० २ख० ९सा०।

२ २ ५ २ ३ ५ २ ३
पाविन्त्रे२३४सो। सोम्रश्चा२३४रात् ॥(१) तुवंवा२३४यि

५ २ २ ५ २ ३ ५ २ ३
प्रः। तुवंक्ता२३४वीः। मधुप्रा२३४जा। नमन्धा२३४

५ २ ३ ५ २ ३ ५ २र ३
साः ॥(२) तुवंवा२३४यिश्वे। सजोषा२३४साः। देवासा

५ २ ३ ५ २ ३ ५ २
२३४:पी। तिमाश्चा२३४ता। मदायिषू२३४सा। वंधा

३ ५ ऽ २ १ २ २र २ १
आ२३४सो। औ२होयि। हुहहाहहायि। औ२होर

२ १ २ १ १ १ १
३४५वा६५६। ए३। उपा२३४५(३) ॥ १० * ॥ [३]

२ र १ २र १
॥ ऐध्मवाहाद्यम् ॥ परिस्तुवाइहा। नोगायि। रा

२ ३ ५ ३ ५ २ र र र ऽ १ २
यिष्ठाओ२३४वा। ई२३४हा। पवित्रेसोमोऽ३आ। हा

२ ५ ३ ५ २ १ २ १
रादो२३४वा। ई२३४हा ॥(१) तुवंविप्रइहा। तुवाम्।

२ ३ ५ ३ ५ २ र ऽ १
कावाओ२३४वा। ई२३४हा। मधुप्रजाताऽ३मा। धा

२ ३ ५ ३ ५ २र १ २ १
साओ२३४वा। ई२३४हा ॥(२) तुवेविश्वइहा। सजो।

२ ३ ५ ३ ५ २र र र १
षासाओ२३४वा। ई२३४हा। देवासःपीतीऽ३मा। आ

* ऊ० गा० ३प्र० २अ० १०सा०।

२ १ २  ५  २  ५  २ १  २ १ २
ताँ ओ२३४वा। ई२३४हा। मदायि। पूसाँ ओ२३४

५  २  ४  १  ७  २
वा। ई२३४हा। वधाः। वंधा२ओ२३४५सा६५६यि।

२  ५
ई२३४हा(३)॥ ८ *॥ [४]

१ २र  १  २
॥ सन्तनितम्॥ परिस्रुवानः। गा२रयिरिष्ठाः। पवा

१  २  १र  १  २
२यि। नै२३सो। मोओ२आरात्। तुवंविप्रस्तु।

१  २  १  २  १  २
वा२कवायिः। मध२। प्रा२३जा। तमा२न्धासाः।

१ र २ र  १  २र  १  २  २
तुवेविश्वे स। जो२षसाः। देवा२। सा२३:पी। ति

१  २  १  ७  २
मा२प्राता। मा२३दायि। पू२सा। वधा२३:। हा

५
उवा३। आ२३४सी(३)॥ ६ *॥ [५]

२  १  २  १  २ १  २ १
॥ जराबोधीयम्॥ परिस्रुवोवा। नोगिरिष्ठाः। पवा

२  र  १  २  १  २  १  २
यिनै२३सो। मोओआरात्॥(१) तुवंविप्रोवा। तुवङ्क

२ १  २  १  २ र  १
वायिः। मधूप्रा२३जा। तमन्धासाः॥(१) तुवेविश्वो

* ज० गा० ८प्र० १ख० ८सा०।
† ज० गा० ८प्र० २ख० ६सा०।

वा । साजोषसाः । देवासा२३:पो । तिमाशाना । म

दायिषू१सा२३र्वा । धाः । असो३४५ई । डा(३)॥१८*॥[६]

॥ सुरूपोत्तरम् ॥ परितुवौहो२ । इया । नोगिरा

यिष्ठा२: । पवित्रे सौहो२ । इया । सोअक्षारा२रत् ॥(१)

तुवंविप्रौहो२ । इया । तुवङ्कावा२रयिः । मधुप्रजौहो२ ।

इया । तमन्धासा२: ॥(२) तुवेविश्वौहो२ । इया । स

जोषासा२: । देवासःपौहो२ । इया । तिमाश्नाता२ ।

मदेषुसौहो२ । इया । वंधाआ२३सा३४३यि । ओ२३

४५ई । डा(३) ॥ २१† ॥ [७]

॥ हाविष्मतम् ॥ हाउपरिस्वानोगिरिष्ठाहाउ । प

वित्रे सो३ । मोअक्षा२३४रात् ॥(१) हाउतुवंविप्रस्तुव

ङ्कविर्हाउ । मधुप्रजा३ । तामन्धा२३४साः ॥(२) हाउ

* ऊ० गा० १२प्र०१ अ० १८सा० ।

† ऊ० गा० १४प्र० १ख० १३सा० ।

तुवेविश्वे सजोषसोहाउ। देवासःपोइ। तायिमाशा२
३४ता। ऐ२हो१आ२३यिहौ। मदायिषू३सा। वंधाः।
आरंसा२३४औहोवा। हविष्मते२३४५(३)॥ ८ *॥ [८]

॥ श्राम्मदम्॥ परिसुवानऐ। हीऐंहो२३४या।
गिरिष्ठाऐ२हौऐ२हो३या। पवित्रे सोमोअक्षरदै२होऐ
२हो३या॥(१) तुवंविप्रस्तुऐ। होऐहो२३४या। वङ्क
विरै२हौऐ२हो३या। मधुप्रजातमन्धसऐ२हो३या॥(२)
तुवेविश्वे सऐ। होऐंहो२३४या। जोषसऐ२हो३या।
देवासःपीतिमाशतऐ२होऐ२हो३या। मादायिषुसा३१
२३। वंधो२३४वा। आयुसोहायि(३)॥ ९ †॥ [९]

---

* ऊ० गा० १५प्र० १ख० ८सा०।

† ऊ० गा० १५प्र० १ख० ९सा०।

२ १ ४र २ ५
॥ दावसुनिधनम् ॥ परिस्तुवार३नोगिरिष्ठाहाउ।
१ २र २ २ १ २ १ २ २
प।वित्रेसो। मोआशा१रार३त्। होवार३हायि ॥(१)
१ ४ ५ १ २र १ २
तुवंवार३यिप्रस्तुवङ्कविर्होउ। माधुप्रजा। तमान्धा१
१ २ २ २ १र ४र २
सार३ः। होवार३हायि ॥(२) तुवेवार३यिश्वेसजोहाउ।
१ २ २ २ १ २ १ २ २ १
दायिवासःपी। तिमाशा१तार३। होवार३हायि। म
२ १ २ २ १र २
दायिषू१सार३। होवार३हा। वंधाः। आ२सा२३४
५र २ २ २र १ २ १ १ १ १
औहोवा। ए३। दावनू२३४५(३) ॥ १० * ॥[१०]

१ २र
॥ प्रतीचीनेडङ्काशीतम् ॥ परिस्तुवानः। गा२यिरि
१ २र २ २ १ ७ २र २
ष्ठाः। पावित्रेसो। मोआहरा२३४त्। हाहोयि ॥(१)
१ २ १ २र १ ७
तुवविप्रस्तु। वा२ङ्कवायिः। माधुप्रजा। तमान्धसा
५र २ १ २ २ २ १
२३४ः। हाहोयि ॥(२) तुवेविश्वस। जो२षसाः। दा

* ऊ० गा० १५प्र० १अ० १०सा०।

र २ र १ ७ ३र २ १र २
यिवासःपी। तिमाशता२३४। हाहोयि। मदेषुसार्वा

२ १ २ ४ ५ ४ ५
३धाः। असा। औ३होवा। ई्डा(३)॥ ११ *॥[११]

२ र र र र १ २
॥ हाविष्कृतम्॥ परिसुवानोगाहाउरायिष्ठाः। प

१ र र २ र
विन्नेसो। मोआहार३रात्॥(१) तुवंविप्रस्तुव ह्राउ

१ २ १ २ २ र
कावायिः। मधुप्रजा। तमन्धा२३साः॥(२) तुवेवि

र र र १ २ र १र र २
श्वे सजोहाउषासाः। देवासःपायि। तिमाशा२३ता।

१ २ १र २ ५र
मदा२होश्यि। षू२३सा। वंधाः। आ२सा२ ३ ४ औ

र २ १ ३ १ १ १ २
होवा। हविष्कृते२३४५(३)॥ १२ †॥ [१२]

१ २र १र र र २
॥ गौषूक्तम्॥ परिसुवानोगौ। हौहोवाहायि। रि

१ र र २ १ १
ष्ठाः। पवित्रे सोमऔ२। ऊवायि। ऊवा२यि। ह्रा

१ २ १र र २ २
रा२त्॥(१) तुवंविप्रस्तुवौ। हौहोवाहायि। कवायिः।

* ऊ० गा० १५प्र० १अ० ११सा०।

† ऊ० गा० १५प्र० १अ० १२सा०।

१२   १   १
मधुप्रजातमौ२। ऊवायि। ऊवा२यि। धामा२ः ॥(२)

१ १ ३ २ १ २   २   २   १   २ २   २
तुवेविश्वे सजौ। हौहोवाहायि। षसाः। देवासःपी

२   १   १   १ २
तिमौ२। ऊवायि। ऊवा२यि। ग्माता२। मदेषुस

२   १   १   १ २
र्वधौ२। ऊवायि। ऊवा२यि। ग्माता२। मदेषुस

२   १   १   १
र्वधौ२। ऊवायि। ऊवा२यि। आसा२३यि। हो

२   ५ २ २   २ १ २ २ २ १ १ १ १
२वा२३४औहोवा। अग्निराऊता२३४५ः(३) ॥ ७* ॥[१३]१७

ससुन्वे-इति-प्रगाथात्मकं द्वितीयं सूक्तम्,

तत्र, प्रथमा।

१ २ ३ १ २   २ २ ३ २   ३   १   २   १ १ २   २ २
ससुन्वेयोवसूनांयोरायामानेतायइडानाम्।

२ ३ १ २   ३ २
सोमोयस्सुक्षितीनाम् ॥ १ † ॥

"सः" सोमः "सुन्वे" अभिषुवे ऋत्विग्भिः, यः सोमः वसूनां धनानाम् "आनेता", यश्च "रायां" रान्ति प्रयच्छन्ति क्षीरादिकमिति रायो गावः तेषां मानेता, यश्च "इडानाम्" अन्नानाञ्च, यश्च सोमः "सुक्षितीनां" सुनिवासानां शोभन-मनुष्य-युक्तानां गृहाणाम् आनेता विद्यते, सोऽभिषुतोऽभूदिति ॥ १ ॥

* ऊ० गा० १.प्र० २ख० ७सा०।

† ऊ० आ० ६, २, ४, ५ ( २भा० २३३पृ० )=ऋ० वे० ७, ५, १८, २।

अथ द्वितीया ।

१ २ ३ २ ३ २ ३ १ २ ३ १ ३ १ २ ३ २ ३ १ २
यस्यतइन्द्रःपिबाद्यस्यमरुतोयस्यवार्यमणाभगः ।
१ २र ३ १र २र ३ १ २ ३ २ ३ १ २ ३ २
आयेनमित्रावरुणाकरामहएन्द्रमवसेमहे ॥ २ ॥ १८

हे सोम! "यस्य" प्रसिद्धस्य "ते" तव रसम् "इन्द्रः" "पिबात्" पिबति [ पा पाने (भ्वा० प०), लेटयड़ागमः ] "यस्य" यञ्च सोमं "मरुतः" पिबन्ति, "वा" अपिच "अर्यमणा"† एतन्नामकेन देवेन सह "भगः"‡ देवः "यस्य" यं सोमं पिबति, "येन" सोमेन "मित्रावरुणा"¶ मित्रावरुणौ वयम् "आ करामहे" अभिमुखीकुर्म्महे। तथा "महे" महते "अवसे" रक्षणाय येन च सोमेन "इन्द्रम्" अभिमुखीकुर्महे, तं त्वाम-भिषुणोमीत्यर्थः ॥ २ ॥ १८

१ २ १र र २ १
॥ दीर्घम् ॥ सास्। न्वेयोवसू२३नाम्। योरा२
१ र र १ २ १ २ १ २
यामा२। नेतायइडा२३नाम्। सो२३माः। यःसुक्षि

---

* ऋ० वे० ७, ५, १९, ४ ।

† सुपांसुलुगित्यात्वे (७, १, ३९) रूपम् ।

‡ "भगो व्याख्यातः (३, १६)। तस्य कालः प्रागुत्सर्पणात् तस्यैषा भवति— * * * । अन्धो भग इत्याहुरनुत्सृप्तो न दृश्यते। प्राशित्र मस्याक्षिणी निर्जघानेति च ब्राह्मणं जनं गच्छतीति वा जनं गच्छत्यादित्य उदयेन"—इति निरु० द० ६, १३-१४ ।

१ ५ ५ १ २ २
तार३४यिनो६हायि ॥(१) सोमाः। यःसुच्चिता२३ यि

२ १ १ र १ २ १
नाम्। यास्वा२ताइ२। द्रःपिवाद्यस्थमरू२३ताः। या

१ र १ ० १ २
स्वा२ताइ२। द्रःपिवाद्यस्थमरू२३ताः। या२ ३ स्वा।

१र २ १र ५ ५ १ २ १र र
वार्य्यमणाभा २ ३ ४गो६हायि ॥(२) यास्वा। वार्यमणा

२ १ १ १र र २ १र २
भा२३गाः। आये२नामी२। त्वावरुणाकरामा२३हा

१ १ र र १र २ १
यि। आये२नामी२। त्वावरुणाकरामा२३हायि। आ

२ १ २र १ ५ ५
२३यिन्द्राम्। अवसेमा२३४हो६हायि(३)॥ ११*॥ [१]

२१ २ ४ २ २ ५ २र १
॥ सफम्॥ ससुन्वे३यः। वासू२३४नाम्। योरा

र १ २ २ २ ५ २र
या२म्। आनायिता३या३ः। इडा३२३ ४ नाम्। सो

१ २ ४ २ ५
नाः। याःसू३स्त्री३। ता३४५यिनो६हायि(१) ॥१४†॥[२]१८

---

* ऊ० गा० ३प्र० २अ० ११सा०।

† ऊ० गा० ११प्र० १अ० १४सा०।

तंवइति-त्वचात्मकं तृतीयं सूक्तम् ;

तत्र, प्रथमा।

१ २   २ १ २   ३ २ ३ १ २
तंवःसखायोमदायपुनानमभिगायत।
२ ३ १ २ ३ १ २   ३ १ २
शिशुन्नहव्यैःस्वदयन्तगूर्त्तिभिः ॥ १ * ॥

हे "सखायः" ऋत्विजः ! "वः" यूयं "मदाय" देवानां मदार्थं "पुनानं" पूयमानं तं सोमम् "अभि गायत" अभिष्टुत। "तम्" इमं सोमं "शिशुं न" शिशुमिव अलङ्कारैः चीरादिभिश्च स्वादूकुर्वन्ति, तद्वत् "हव्यै" हविर्भिः मिश्रणैः "गूर्त्तिभिः" स्तुतिभिश्च "स्वदयन्त" स्वादूकुर्वन्ति ॥ १ ॥

अथ द्वितीया।

२ ३ १ २   ३ २   ३ १ २   ३ १ २
सवत्सइवमातृभिरिन्दुर्हिन्वानोअज्यते।
३   १२   १२ ३ २   ३ १ २
देवावीर्मदोमतिभिःपरिष्कृतः ॥ २ † ॥

"हिन्वानः" प्रेर्यमाणः "इन्दुः" सोमः वसतीवरीभिः "समज्यते" सम्यक् सिक्तो भवति ‡। तत्र दृष्टान्तः—"वत्स-

---

* ऋ० आ० ६, २, ३, ३ (२भा० २०८पृ०) = ऋ० वे० ७, ५, ८, १।

† ऋ० वे० ७, ५, ८, २।

‡ 'इन्दुः हिन्वानः याच्यमानः, अज्यते अज्य सं पर्णे मनीषिभिः'—इति वि०।

इव" वत्सो यथा "मातृभिः"* गोभिः समक्तो भवति, तद्वत्। कीदृशः? "देवावीः" देवानां रक्षकः, "मदः" मदकरः "मतिभिः" स्तुतिभिः "परिष्कृतः" अलङ्कृतः [भूषणार्थे "सम्पर्युपेभ्यः (६,१,१३७)"—इति सुडागमः, "परिनिविभ्यः (८,३,७०)"—इति सुटः षत्वम्॥२॥

अथ तृतीया।

२ १र २र ३ १ २ ३१र २र ३ १ २
अयन्दक्षायसाधनोयꣳशर्धायवीतये।

३ २ ३ २ ३ १ २ ३ २
अयन्देवेभ्योमधुमत्तरःसुतः॥३ †॥१९

"अयं" सोमः "दक्षाय" बलाय वर्द्धनाय वा "साधनः" साधयिता भवति, तथा "अयं" सोमः "शर्द्धाय" बलाय "वीतये" देवानां भक्षणार्थं च भवति, "सुतः" अभिषुतः, "अयं" सोमः "देवेभ्यः" इन्द्रादिभ्यः "मधुमत्तरः" अतिशयेन माधुर्य-युक्तो भवति अत्यन्तं मदकरो भवतीति वा॥३॥१९

२ २ ५ २
॥काण्वश्रवसम्॥ ताँ२३४वः। सा२३४खा। सा२

५ २र १ २ १र २ र २
३४खा। योमदा२३या। पूनानम। भिगाया२३ता।

---

* 'मातृभिः—तृतीया-बहुवचनमिदं चतुर्थी-बहुवचनस्य स्थाने द्रष्टव्यम्'-इति वि०।

† ऋ० वे० ७, ५, ८, ३।

१ २ १ २ ३र २ १ २३र २
शायिशुन्नह। व्यःस्वदया२३। तगूर्त्तिभा३४३यिः॥(१)
३ ५ ३ ५ २१र २ १
सा२३४व। त्वा२३४ई। वमानू२३भायिः। आयिन्दु
२ र र १ २ १ २र१र १र ३ २
र्हिन्वा। नोअज्या२३तायि। दायिवावीर्मा। दोमति
१ २ ३ १ ३ ५ ३
भा२३यिः। परिष्कृता३४३ः॥(२) आ२३४यम्। दा२३
५ २१र २ १ २ र १र २
४स्वा। यसाधा२३नाः। आयछ्रद्धां। यवोता३२या
१ २र१र २र ३ २ १ २ ३ २ १
यि। आयन्देवे। भ्योमधुमाधतरःसुता३४३ः। ओ२३
४५ई। डा(३)॥ १२ *॥ [१]

२ र १र २ र १
॥ सुज्ञानम् ॥ तंवःसखा। योमदाया। पुनाना]
र १ २ १ र १
मा२। भिगायता। शिशुन्नाहार्व्ये२। व्यैःस्व। दां
५र र १र २ १ १ १ १ १
२या२३४औहोवा। तगूर्त्तिभिरे३उपा२३४५(१) ॥१०†॥[२

---

* ऊ० गा० ३प्र० २अ० १२सा०।

† ऊ० गा० ८प्र० १अ० १०सा०।

॥ काशीतम् ॥ तंवःसखा। योमदा२३या३४। पुनानमा। भिगाया२३ता३४। शिशुन्नहा। व्यैःसूदयन्तगू। तां २ यि। भा२३४। औहोवा। ऊ२३४पा(१) ॥ ११ * ॥ [३] १९

सोमाःपवन्तइति-त्र्यृचात्मकं चतुर्थं सूक्तम् ;

तत्र, प्रथमा।

सोमाःपवन्तइन्दवोऽस्मभ्यङ्गातुवित्तमाः।
मित्राःस्वानाअरेपसःस्वाध्यःस्वर्विदः ॥ १ † ॥

"गातुवित्तमाः" अतिशयेन मार्गस्य लम्भकाः "इन्दवः" दीप्ताः "सोमाः" "पवन्ते अस्मभ्यम्" अस्मदर्थं चरन्ति आगच्छन्ति वा। कीदृशाः? "मित्राः" देवानां सखिभूताः, "स्वानाः" सुवानाः अभिषूयमाणाः "अरेपसः" पाप-रहिताः, अतएव "स्वाध्यः" शोभन-ध्यानाः "स्वर्विदः" सर्वज्ञाः स्वर्गप्रापका वा ॥ १ ॥

---

* ऊ० गा० ८प्र० १अ० ११सा०।

† छ० आ० ६, २, १, ४=( २भा० १५९ पृ० )—ऋ० वे० ७, ५, २, ५।

अथ द्वितीया ।

२ ३ १ २   ३ २ ३ १ २ ३. १ २
तेपूतासोविपश्चितःसोमासोदध्याशिरः ।
१ २ ३ १ २ ३ १ २   ३ १ २ ३ २ ३ १
सूरासोनादर्शतासोजिगत्नवोध्रुवाघृते ॥ २ * ॥

"पूताः" पवित्रेण परिपूताः, "विपश्चितः" मेधाविनः, "दध्याशिरः" दध्यामिश्रणाः, "घृते" वसतीवर्य्याख्ये उदके "जिगत्नवः" गमन-शीलाः "ध्रुवाः" तत्र स्थैर्य्येण वर्त्तमानाः "ते" "सोमासः" सोमाः "सूरासः न" सूर्य्या इव "दर्शतासः" पात्रेषु सर्वैर्दर्शनीया भवन्ति† ॥ २ ॥

अथ तृतीया ।

३   २ ३ १ २ ३ १ २ ३ १ र   २र ३ २
सुषाणासोव्यद्रिभिश्चितानागोरधित्वचि ।
१ २ ३ १ २ ३ २ ३ ३ १ २   ३ १ २
इषमस्मभ्यमभितःसमस्वरन्वसुविदः ॥ ३ ‡ ॥ २०

"गोः" अनुडुहः "अधित्वचि" अधिषवण-चर्म्मणि "चिताना" ज्ञायमाना "अद्रिभिः" ग्रावभिः विविधैः "सुष्वाणासः" स्तूयमानाः "वसुविदः" वसुनो लम्भकाः "एते" सोमाः अस्मभ्यम्

* ऋ० वे० ७, ५, ३, १ ।

† 'दर्शतासः—सर्वस्य द्रष्टारः'—इति वि० ।

‡ ऋ० वे० ७, ५, ६, २ ।

“इषम्” अन्नम् अभितः “समस्वरन्” सम्यक् शब्दयन्ति प्रयच्छन्तीति यावत्* ॥ ३ ॥ २०

५र र   ३ १   ४ ५
॥ गौरीवितम् † ॥ सोमाः । पवा३ । तइन्दवाः ।
१ र १ १ र र २ ४
अस्मभ्यङ्गातुवित्तमा२३ः । मायिताास्वाना३१२३ः । अ
१ र २ ४ ५
रे५पसाः । सूवाधिया३१२३ः । सुवोवा । वा५यिदो६
५ ५र र ३र २ ४ ५ १र र र
हायि ॥(१ तेपू । तासो३ । विपश्चिताः । सोमासो
र १र र २ ४ र १
दध्याशिरा२३ः । सूरासोना३१२३ । दशा५तास्सः । जा
२ ४ ५ ४ ५
यिगत्नवा३ १ २३ः । ध्रुवोवा । घा५त्तौ६हायि ॥(२)
५ र ३र २ ४ ५ १ र र र
सुषा । णासो३ । वियद्भिभायिः । चितानागोरधित्व
१ २ ४ १
चा२३यि । आयिषमस्मा३१२३ । भ्यमा५भिताः । सा
४ ४
मस्वरा३१२३न् । वसोवा । वा५यिदो६हायि(३) ॥ १ ३‡ ॥ [१]

---

* ‘समस्वरन्— उन्मादयन्’—इति वि० ।

† “महागौरीवितम्”—इति ख० पु० पाठः ।

‡ ऊ० गा० ३प्र० २अ० १२सा० ।

॥ मधुश्च्युन्निधनम् ॥ सोमाःपवन्तइन्दवा३ए। अस्म
भ्यङ्गा३तुवित्तमा३ः। हा३हा। औ३हो३वा। आयिही
२। मित्रास्स्वाना३आरेपसा३ः। हा३हा। औ३हो
३वा। आयिही२। स्वाधिया३ः। हा३हायि। औ
३हो३वा। आयिही२। सुवः। वा२यिदा२३४औहो
वा ॥(१) तेपूतासोविपश्चिता३ए। सोमासोदा३धाआ
शिरा३ः। हा३हा। औ३हो३वा। आयिही२। सू
रासोना३दार्शतासा३ः। हा३हा। औ३हो३वा। आ
यिही२। जायिगत्नवा३ः। हा३हायि। औ३हो३वा।
आयिही२। ध्रुवाः। धा२र्त्ता२३४औहोवा ॥(२) सु
षाणासोवियद्रिभा३यिरे। चितानागो३राधित्वचा३।
हा३हा। औ३हो३वा। आयिही२। वृषमस्मा३भ्या

मभिता३ः। हा ३ हा। औ३हो ३ वा। आयिही२।
सामस्वरा३न्। हा३हायि। औ३हो३वा। आयिही
२। वसु। वा२यिदा२३४औहोवा। मधुश्च्यु ता२३४
५ः(३) ॥ १४ * ॥ [२]

॥ वाङ्निधनक्रौञ्चम् ॥ सोमाःपावा३१२३४। तइ।
दवा३। अस्मभ्यङ्गा३१२३४। तुवि। तमा३ः। मित्रा
स्वाना३१२३४ः। अरे। पसा३ः। सुवाधीया३१२३ः।
सुवा५र्विदाउ ॥(१) तेपूतासो३१२३४। विपः। चिता
३ः। सोमासोदा३१२३४। धिया। शिरा३ः। सूरासो
ना३१२३४। दर्शि। तासा३ः। जिगात्नावा३ १ २ ३ः।
ध्रु वा५घृताउ ॥(२) सुषाणासो३१२३४। विय। द्रिभा
३यिः। चितानागो३१२३४ः। अधि। त्वचा३यि। वृषा

---

* ऊ० गा० ३प्र० १अ० १४सा० ।

२ ५ ३ २ १ १ २
माम्मा३१२३४। भ्यम। भिता३ः। समाखारा३१२३

४
न्। वसूपूविदा३(३)॥ १५ *॥ [३]

५र २ ३ २ ३ ४ ५ २ १ २ १
॥ ऐडक्रौञ्चम्॥ सोमाःपवन्तइन्दवाः। अस्माभ्यङ्गा।

२ ३ २ १ २ ३ ५ २र १र १र १ २ १ १
तुवित्तमाः। मायित्वाओ२३४वा। स्वानाअरेपसा २ ३

१ १ १र २ १ २ १ २ ५र र ३र २र
४ ५ः। सुवाधियाः। सुवर्वा२३यिदा३४३ः॥(१)तेपूतासो

३ ४ ५ १र १ २र १ २ ३र २ १ ३ ६
विपश्चिताः। सोमासोदा। धियाशिराः। ह्वराओ२३

५ १र १ २ १र २ १ १ १ १ ३ २ १ १ १र
४वा। सोनदर्शतासा२३४५ः। जिगत्नवाः। ध्रुवाघा

२ ५ र १र २र ३ ४ ५ २ १
२३र्ता३४३यि॥(२) सुष्वाणासोवियद्रिभायिः। चिता

२र १ २ ३ २ १ २ ३ ५ २ १
नागोः। अधित्वचायि। आयिषाओ२३४वा। अस्म

२ १ २ १ १ १ १ २ २ १ २ १ २
भ्यमभिता२३४५ः। समस्वरान्। वसुवा२३यिदा३४३ः।

१
ओ२३४५ई। ई। डा(३)॥ १६ †॥ ४]

३र २ २ ४ ५ ५ २
॥ श्यावाश्वम्॥ सोमा३१ः। पा३व। तइ। दा३

* ऊ० गा० ३प्र० १ख० १५सा०।

† ऊ० गा० ३प्र० १ख० १६सा०।

५ १ २ २ १
वः । एहिया । आ । समभ्यञ्जातू । वि । तमा२ः ।
१र २ १र २ ४ ५ २र
एहिया२ । मित्रास्स्वानाआ३रे३ । पा२३४साः । ऐ
१र २ १ २ ४ २
हा२यि । एहिया२ । सुवाधियाःसू३वा३ः । वा३४५यि
५ २र १ २ ४ ऽ ५ २
दो६हायि ॥(१) तपू३१ । ता ३ सो । विपः । चा ३
४ ५ १ २ २ २र
यितः । एहिया । सो । मासोदधायि । आ ।
१ १र २ २ १र २ ४ ५
भिरा२ः । एहिया२ । सूरासोनादा३र्भा३ । ता२३४साः ।
२र १र १ २ ४ २
ऐहा२यि । एहि या२ । जिगत्नवोघ्रू३वा३ः । घा ३
५ २ २ २ ४ ऽ ५
४ ५ तौ६हायि ॥(२) सुषा३१ । णा३सो । विय ।
२ ४ ५ १ २ २ २ २ १
द्रा३यिभिः । एहिया । चायि । तानागोरा । धि । त्वचा
१र १ २ ४ ५
२यि । एहिया२ । वृषमस्माभ्या३मा३ । भा२३४यिताः ।
१र १र १ २ २
ऐहा२यि । एहिया२ । समस्वरान्वा ३ ह ३ । वा ३
५
४ ५ यिदो ६ हा यि(३) ॥ १६ * ॥ [५]

---

* ऊ० गा० १५प्र० २ख० १६सा० ।

२र र २ १
॥ आन्धीगवम्॥ सोमाःपवन्तआ१यिन्दावाः। अ
र २ १ १र २१र १र
स्मभ्यम्। गातूर३वा। ऊम्मा२१ऽ२। तमामित्रास्खा
१र २र१३११११ १२ २ १ २
नाअरेपसा२३४५ः। सूवा३उवा। धीरयाः। स्व२३वाः।
१ २ ४५ २रररर २ १र
विदा। औ३होवा॥(१) तेपूतासोविपा१श्चायिताः। सो
र २ १ १ ररररर१
मासः। दधार३आ। ऊम्मा२१ऽ२। श्रिरःसूरासोन
२ १र३११११ १ २ २ १
दर्शतासा२३४५ः। जायिगा३उवा। त्वा२वो। धू२३
२ १ २ ४५ २ररर
वाः। घृता। औ३होवा॥(२) सुष्वाणासोविया१द्रा
२ १र र र २ १
यिभायिः। चितानाः। गोरा२३धा। ऊम्मा२१ऽ२।
१र २१ २ १३११११ १२ २ १
त्वचीषमस्मभ्यमभिता२३४५ः। सामा३उवा। स्वारा
२ १ २ ४५
न्। वा२३ह्व। विदा। औ३होवा। हो५ई।
डा(३)॥१७*॥[६]

२र र २ १ २
॥ निषेधम्॥ सोमाःपवन्ता३इन्दवाः। अस्माभ्य

* ऊ० गा० १५प्र० २ख० १७सा०।

ङ्गा । तुविक्तमा२ः । इहा३ । मायिचा३स्खानाः । हा
होर२३४हा । अरेपा२३साः । इहा३ । सूवा३धीयाः ।
हाहो२३४हा । सुवा३र्वा५यिदा६५६ः ॥(१) तेपूतासो
वा३यिपश्चिताः । सोमासोदा । धियाशिरा२ः । इहा
३ । हरा३सोना । हाहो२३४हा । दर्शता२३साः ।
इहा३ । जायिगा३त्नावाः । हाहो२३४हा । ध्रुवा३
घा५र्त्ती६५६यि ॥(२) सुषाणासोवा३यद्रिभायिः । चिता
नागोः । अधित्वचा२यि । इहा३ । आयिषा३मास्मा ।
हाहो२३४हा । भ्यमभा२३यिताः । इहा३ । सामा३स्व
रान् । हाहो२३४हा । वमूर्३वा५यिदा६४६ः । हे२३४
५(३) ॥ १८ * ॥ [७]

॥ क्रौञ्चाद्यम् ॥ सोमाःपवोहो । ताइन्दवाः । अस्म

* ऊ० आ० १५प्र० २ख० १८सा० ।

१ २ ४ २र १र र
भ्यङ्गा३ । तूवा३यिता५माई५६ः । मित्रास्त्वानौहो ।
२र१र २र १ २ ४
आरेपसाः । सुवाधिया३ः । सूवा३यिर्वा५यिदाई५६ः ॥(१)
२रर१र र २र १ २र र र १ २
तेपूतासौहो । वीपश्चिताः । सोमासोदा३ । धाआ३
४ २रर१र र २ १र २
आ५यिराई५६ः । सूरासोनौहो । दर्शतासाः । जिग
१ २ ४ २ र १र र
त्नवो३ । अ्नूवा३घा५त्तीं५६यि ॥(२) सुष्वाणासौहो ।
२र १ २ र र १ २ ४
वीयद्रिभायिः । चितानागो३ः । आधा३यित्वा५चाई५
२ १ र २र १ २ १
यि । इषमस्मौहो । भ्यामभिताः । समस्वरा३न् । वा
२ ४
सू३वा५यिदाई५६ः(३) ॥ १ * ॥ [८]

४र ३ ४ २ ४
॥ यज्ञायज्ञीयम् ॥ सोमाऽ५ःप । वा ३ न्ता ३ इन्दा
५ १ २१ २ २ १ १र
वाः । आस्मभ्यङ्गा । तूवायित्ता३माः । मित्रा २स्वा ।
र २ १ २ १ १र
नाआर२३रे । ऊम्मायि । पा३साः । सूवाधियःसुवा२
३ २ १ २ १रर र र र र
र्विदाउ ॥(१) दास्तायि । पूतासोविपश्चितःसोमासोदा ।

* ज० गा० १६प्र० १अ० १सा० ।

२ १ २ र १र १ २ १
धा३आआ३यिराः। सूरा२सः। नदा२३र्मा। ऊम्मा

२ २ १ र ३ २ १
यि। ता३साः। जायिगत्नवोधृवा२घृताउ ॥(२) तायि

२ १र र र र र २ १ २ २
सू। घ्राणासोव्यद्रिभिश्चितानागोः। आ३धायित्वा३चा

१ १ २ १ २ १
यि। इषा२म। स्वभ्या२३मा। ऊम्मायि। भा३यिताः।

१ ३ २ १ १ १
सामस्वरन्वसू२विदाउ। वा३४५(३) ॥ १४ * ॥ [९] २०

अथायापवेति-तृचात्मकं पञ्चमं सूक्तम्,

तत्र, प्रथमा।

३ २ ३ १ २ १र २र
अयापवापवस्वैनावसूनि

३ १ २ ३ १ २ ३ १ २
मा७श्चत्वइन्दोसरसिप्रधन्व।

३२ ३ २ ३ २ ३ २ ३ १
ब्रध्नश्चिद्यस्यवातोनजूतिं

२ ३ १ २ ३ १ २ ३ १ २
पुरुमेधाश्चित्तकवेनरन्धात् ॥ १ † ॥

हे सोम! "अया" अनया "पवा" पवमानया "धारया" "एना" एनानि "वसूनि" धनानि "पवस्व" क्षर [पवा—

* ऊ० गा० २२प्र० १ख० १४सा०।

† ऋ० स्रा० ६, १, ५, ९ (२भा० १४२ पृ०)=ऋ० वे० ७, ४, २१, १।

पूञ् पवने ( क्र्या० प० ) "अन्येभ्योऽपि दृश्यन्ते ( ३,२,१७८ )" —इति क्विप् प्रत्ययः, आर्द्धधातुक-लक्षणो गुणः, "साविकाच ( ६, १, १६८ )"—इति तृतीयाया उदात्तत्वम् ]। तथा हे "इन्दो!" त्वं "मांसत्वे" मन्यमानानां चातके "सरसि" उदके वसतीवर्याख्ये "प्रधन्व" प्रगच्छ। "यस्य" सोमस्य शोधने सति "ब्रह्मश्चित्" सर्वेषां प्रज्ञापको मूलभूतो वा आदित्योऽपि "वातः न" वायुरिव "जूतिं" वेगं प्राप्तः सन् किञ्च "पुरुमेध-श्चित्" बहुविध-यज्ञ इन्द्रोऽपि "तकवे" [ तकतिर्गति-कर्म्मसु पठितः ( निघ० २, १४, ६९ ), अस्मादौणादिक उन् प्रत्ययः ] सोमं गच्छत; मह्यं "नरं" कर्मनेतारं पुत्रं "धात्" ददातु प्रयच्छतु। स त्वं प्रधन्वेति पूर्वेण सम्बन्धः॥

"यस्य"-"अत्र"—इति पाठौ, "जूतिं"-"जूतः"—इति, "धात्"-"दात्"—इति च॥ १॥

अथ द्वितीया।

३ १२३१ २३१२३
उतनएनापवयापव

१ २३२३१ २ ३२
स्वाधिश्रुतेश्रवाय्यस्यतीर्थे।

३ २ ३१२ ३१र २र
षष्टिᳶ सहस्रानैगुतोवसूनि

३२उ ३ १ २ ३ १ २
वृक्षन्नपक्वन्धूनवद्रणाय॥ २*॥

* ऋ० वे० ७, ४, २१, ३।

हे सोम! "उत" अपिच "अवाय्यस्य" सर्वैः अवणीयस्य तव "श्रुते" प्रसिद्धे [ यद्वा, षष्ठ्यर्थे चतुर्थी श्रुत-शब्दस्य ] "तीर्थे" स्थाने "नः" अस्माकं स्वभूते यज्ञे "एना" अनया "पवया" पूयमानया "धारया" अधिकं "पवस्व" क्षर। "नैगुतः" नीचीनं गन्तवे* [ न-शब्दायन्त इति निगुतः शत्रवः, तेषां हन्तृत्वेन सम्बन्धी ] सोऽयं सोमः "षष्ठिं" षष्ठि-सङ्ख्याकानि "सहस्रा" सहस्राणि "वसूनि" धनानि "रणाय" शत्रूणां जयार्थं धनवत् अस्मानकम्पयत् प्रायच्छदिति यावत्। कथमिव? "वृक्षं न पक्वं" पक्व-फलं वृक्षं यथा कम्पयति फलार्थी, तद्वत् ॥२॥

अथ तृतीया।

२ ३ १ २ ३ २ ३ १ २ ३ १र
महीमे अस्य वृषनाम शूषे

२र ३ १ २ ३ २ १ २
माꣳश्चत्वे वा पृशने वा वधत्रे।

१ २ ३ १ २ ३ २ ३ २ ३
अस्वापयन्निगुतः स्नेहयच्चापा

२ ३ २ ३ १ २ ३ १ २
मित्राꣳ अपाचितो अचेतः ॥ ३ † ॥ २१

"मही" महते प्रभूते "वृषनाम" [सुपां सुलुगिति ( ७, १. ३९) सुपो लुक्] वृषनामनी वर्षण-नमने, शराणां वर्षणं, शत्रूणां नम-

* 'नैगुतः—निगुतानां नितरां गोपितानाम्'—इति वि०।

† ऋ० वे० ७, ४, २१, ४।

नम्, "इमे" एते द्वे कर्मणी "अस्य" सोमस्य "शूषे" सुखकरे* भवतः ; ये च कर्मणी "मांश्चत्वे" [अश्वनामैतत् (निघ० १,१४,१८)] अश्वैः क्रियमाणे युद्धे† तत्साध्यत्वाद् युद्धमिह गृह्यते ] "वा" अपिवा "पृशने" स्पर्शन-साध्ये बाहु-युद्धे "वधत्रे" शत्रूणां हिंसन-शीले भवतः। सोऽयं "निगुतः" नीचैः शब्दायमानान् शत्रून् "अस्वापयत्" असूषुपत् अवधीदित्यर्थः। किञ्च "स्नेहयत्" प्राद्रवयत् सङ्ग्रामाच्छत्रून्। अथ प्रत्यक्षः। हे सोम! स त्वम् "अमित्रान्" शत्रून् "अपाचित" अपगमय। तथाच "अपाचितः" अग्नि-चयन मकुर्वतः नास्तिकांश्च‡ "इतः" अस्मच्छकाशात् अपाचेत अपगमय [अञ्चतिर्गतिकर्मा (ब्रा० प०)] ॥ ३ ॥ २१

२र १ २     १ २     १र
॥ औष्टाद्यम् ॥ औहोवाथि। अयोवाथि। पवा

र र २१ २ ५ २ १ २ ५ १ र
वस्यैनावस्वर२३नी। औ३वोयि। इवा। ई३या। माॗ

१ र २१ २ ५ २ २ २ ५
अत्वइन्द्रोसरसिप्रधार२३न्वा। औ३वाथि। इवा। ई३

२ र १ र २१ १ ५ २
या। माॗस्वत्वइन्द्रोसरसिप्रधार२३न्वा। औ३वाथि।

---

* 'शूषे—स्वापयामः, अथवा शूषे शोषणाय'—इति वि०।

† 'मांश्चत्वे—मंश्चनीयत्वाय'—इति वि०।

‡ 'अपाचितः—पतिता चेतना भवन्ति'—इति वि०।

इहा। ई३या। ब्रह्मश्चिद्यस्यवातोनजू२३तीम्। औ३
होयि। इहा। ई३या। पुरुमेधाश्चित्तकवेनरा२३धा
त्। औ३होयि। इहा। ई२। या२३४। औहोवा॥(१)
औहोहायि। उतोहायि। नएनापवयापवा२३खा। औ
३होयि। इहा। ई३या। अधिश्रुतेश्रवायियस्यतार२प
यिर्थायि। औ३होयि। इहा। ई३या। षष्ठिꣳसह
स्रानैगुतोवह्व२३नी। औ३होयि। इहा। ई२या। वृ
त्तन्नपक्कन्धूनवद्रणा२३या। औ३होयि। इहा। ई२।
या२३४औहोवा॥(२) औहोहायि। महोहायि। मे
अस्यवृषनामशूर२३षायि। औ३हायि। इहा। ई३या ३
माꣳस्त्विवापृश्नेवावधा२३नायि। औ३हायि। इहा।
ई३या। अखापयन्निगुतस्नेहया२३खा। औ ३ होयि।

इहा। इ३या। अपामित्राꣳअपाचितोअचार२३यिताः। औ३होयि। इहा। इ२। या२३४। औहोवा। ए३। दौदिही१(३) ॥ १७ * ॥ [१]

॥ इहवद्वासिष्ठम् ॥ औहोवाहा३ होयि। इहा। अयापवा। पवस्वै। नावसूना। माꣳश्चत्वआयि। हो३स्र। सिप्रधन्वा। अभ्रश्चिदा। म्याइवा। तोनजू तीम्। पुरुमेधाः। चित्तक। वा३४३यि। ना३रा५न्धा६५६त् ॥(१) उतनए। ना३पव। यापवस्वा। अधिश्रुतायि। श्रवायि। यस्यतायिर्थायि। षष्टिꣳसहा। स्रा३नैगु। तोवेसूनी। बृहन्नपा। कधून। वा३४३त्। रा३णा५या६५६ ॥(२) महीमेआ। म्या३वृष। नाम अूषायि। माꣳश्चत्वेवा। पृश्ने। वावधनायि। अ

* ऊ० गा० ३प्र० २अ० १७सा०।

१र २ १ २ ३ ४ ५ १र २र ३र २ १
स्वापयात्। निगुतः। स्वेद्दयच्चा। औहोवाद्दा२द्दोयि।
३ २ १र २ १र २ २ ४
द्धा। अपामिवा३। अपाचि। तो३४३। आ२वा
५यिताई५६ः(३) ॥ १० * ॥ [२]

२ र १ १ २र र १
॥ वार्त्रतुरम् ॥ अयापवोवा पावस्वैना। वसू२३
२ १र र २ १ २ १ २ १
नी। मा३स्वत्वइन्दोसरसि। प्रधा२३न्वा। बधश्चिद
२ १ २ ३ ३ १ २ १
स्य। वा। तोनाजू२३४तीम्। पुरु। मायि। धाश्वि
१ ४ २ ५ २
नाका२३। वा२३यिना३। रा३४५धोई द्दायि ॥(१) उत
१ २ १ २र १ २ १ र र
नओवा। नापवया। पवा२३स्वा। अधिश्रुतेश्रवायि
२ १ २ १ २ १ २ र १ र २
य। स्यता२३यिर्थायि। षष्टि३सहस्रानै। गू। तोवा
३ ५ १ २ १ १ ४
सू२३४नी। वृत्राम्। ना। पाकन्धूना२३। वा२३द्रा
२ ५ २र १ २ १ २र
३। णा३४५योई द्दायि ॥(२) मद्दोमओवा। स्यान्तपना।
१ २ १र र र र र १ २
मप्यू२३षायि। मा३स्वत्वेवापृश्ननेवा। वधा२३त्रायि।

* ऋ० मा० ८प्र० २अ० १०सा०।

१ र २ १ २ १ २ ३ ५ १
अस्वापयन्निगुतः । स्ने । हायार२३४च्चा । अपा । मा
२ १ १ ४ २
यि । त्ना(ः) अपाचार२३यि । तो२३आ३ । चा३४५यितो
५
६हायि(३) ॥ १* ॥ [३] २१

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य सप्तमस्याध्यायस्य

षष्ठः खण्डः ॥ ६ ॥

---

अथ सप्तम-खण्डे—

प्रथमर्च्चे†, प्रथमा ।

२ ३ २ ३ १ २ ३ २ ३ २ ३ १ २ ३क २र
अग्ने त्वन्नो अन्तमउतत्राताशिवोभुवोवरूथ्यः ॥ १ ॥ ‡

हे "अग्ने !" "वरूथ्यः" वरणीयः सम्भजनीयः । यद्वा, वरूथैः परिधिभिर्वृतः त्वं "नः" अस्माकम् "अन्तमः" अन्तिकतमः "भुवः" भव । "उत" अपिच "त्राता" रक्षकः "शिवः" सुखकरश्च भव ॥

"भुवः"-"भव"—इति पाठौ ॥ १ ॥

---

* ऊ० गा० २३प्र० २ख० १सा० ।

† 'यज्ञायज्ञियमग्निष्टोमसाम'—इति वि० ।

‡ ऋ० आ० ५, २, २, २ (२भा० ८९८ पृ०)=ऋ० वे० ४, १, १६, १ ।

अथ द्वितीया।

१ २ ३ १र २र ३ १ २ ३ १ २ ३ १ २
वसुरग्निर्वसुश्रवा अच्छा नक्षि द्युमत्तमो रयिन्दाः ॥ २* ॥

"वसुः" वासकः "अग्निः" सर्व्वेषामग्रणीः "वसुश्रवाः" व्याप्तान्नस्त्वं† "अच्छ" आभिमुख्येन "नक्षि" अस्मान् व्याप्नुहि। "द्युमत्तमः" अतिशयेन दीप्तिमान् त्वं "रयिं" पश्वादि-लक्षणं धनं "दाः" अस्मभ्यं देहि‡॥

"द्युमत्तमः"-"द्युमत्तमम्"—इति पाठौ ॥ २ ॥

अथ तृतीया।

१ २ ३ १ २ ३ १ २ ३ १ २
तन्त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्यः ॥३¶॥ २२

हे "शोचिष्ठ" अतिशयेन शोचिष्मन्! "दीदिव" स्वतेजोभि-र्दीप्ताग्ने! "तं" "त्वा" त्वां "सुम्नाय" सुखाय [सुम्नमिति सुखनामैतत् (निघ० ३, ६, १७)] तदर्थं "सखिभ्यः" समान-ख्यातिभ्यः पुत्रेभ्य§ सुखार्थञ्च "नूनम्" "ईमहे" याचामहे ॥ ३ ॥ २२

---

* ऋ० वे० ४, १, १६, २।

† 'वसुश्रवाः—अन्नेन धनेन च सम्पन्नः'—इति वि०।

‡ 'रयिन्दाः—रयिं धनं ददातीति रयिन्दाः,—इति वि०।

¶ ऋ० वे० ४, १, १६, ४।

§ 'सखिभ्यः-ऋत्विग्भ्यः'—इति वि०।

१ २ १ १ १
॥ गूहम् ॥ ओग्नायि । त्वन्नोर२३आ । ऊम्मा २ ३ ।
५ १ १ २ १ १ र १ १ र १ ३ १ १ १ १ २ १र
तार३४माः । उतत्रातामिवोभुवा२३४५ः । शिवोभुवार
४ ५ ४ ५ १ २ १
३ः । वरोवा । था५योऽहायि ॥(१) वाहः । अ । ग्ना
२ १ ५ १ र २ १
यिर्वा२३सू । ऊम्मा२३ । आ२३४वाः । अच्छानक्षिद्युम
२३ १ १ १ १ २ १ ४ ५ ४
त्तमा२३४५ः । द्युमत्तमा२३ः । रयौवा । आ५यिन्दो
५ १ २ १र २ १
ऽहायि ॥(२) तान्वा । शो । चायिष्ठा२३दी । ऊम्मा
५ १ १र २र १ र २ २ १ १ १ १ २
२३यि । दी२३४वाः । सुम्नायनूनमीमहा२३४५यि । न
१र ४ ५ ४ ५
मीमहा२३यि । सखोवा । भा५योऽहायि(३) ॥१८*॥[१]

३ २ र ५
सत्रासाहीयम् ॥ अग्ना३४यि । त्वन्नोअन्तमः । ओ
५ २ १ १ १ २ १ ऽ
ईवा । उतत्रा२ता । शा२यिवो । भुर३वाः । वरौ
२र १र २ १ ५ ५ ३ १
३हो । वाहा३४३यि । था२३४योऽहायि ॥(१) वह्व३४ः ।
र ५ ५ २ १र १ १
अग्निर्वसुश्रवाः । ओईवा । अच्छाना२हायि । द्यू२मा ।

* ऊ० गा० ३प्र० २ख० १८गा० ।

२ १ ऽ २र २र २ १ ५
ता२३माः । रयौ३र्हो । वाहा३४३यि । आ२३४यिन्दो
५ ३ २ र र ५ र
६हायि ॥(२) तन्वा३४ । शोचिष्टदीदिवः । ओ६वा ।
२ १र १ १ २ १ ऽ २र
सुम्नाया२नू । ना२माथि । मा२३हायि । सखौ३र्हो ।
२र १
वाहा३४३यि६हायि(३) ॥ १५ * ॥ [२] २२

अथ द्वितीय-तृचे†—

प्रथमा ।

३ २उ २ १ २ ३ १ २ ३ १ २ ३ २
इमानुकम्भुवनासीषधेमेन्द्रश्चविश्वेचदेवाः ॥ १‡ ॥

"इमा" इमानि परिदृश्यमानानि भुवनानि "नु" क्षिप्रं "सीषधेम" साधयेम वशीकरवाम । "कम्"—इति पूरकः [यद्वा, इमानि सर्वाणि भूतजातानि अस्मभ्यं कं सुखं सीषधेम साधयन्तु ; पुरुषव्यत्ययः (३,१,८५) ]। "इन्द्रश्च" "विश्वे" सर्वे अन्ये "देवाः च" स्तुत्या प्रीत्या "इमम्" अर्थम् साधयन्तु ॥

"सीषधेम"-"सीषधाम"—इति पाठौ ॥ १ ॥

---

* ऊ० गा० १२प्र० २ख० १५सा० ।

† 'गौतमस्य भद्रम्'—इति वि० । सामैतदूह्यगानस्य ।

‡ ऋ० खा० ५, २, २, ६ (१भा० ९०२पृ०)=ऋ० वे० ८, ८, १५, १ ।

अथ द्वितीया ।

३ १ २ ३क २र ३ १ २ ३ १र २र ३ १ ०
यज्ञञ्चनस्तन्वञ्चप्रजाञ्चादित्यैरिन्द्रःसहसीषधातु ॥२*॥

"नः" अस्माकं "यज्ञं" ज्योतिष्टोमादिकञ्च यागं "तन्व" शरीरञ्च "प्रजां" पुत्रादिकाञ्च "आदित्यैः" अदिति-पुत्रैः अन्यै-र्देवैः सह वर्त्तमानः "इन्द्रः" "सीषधातु" साधयतु ॥

"सहसीषधातु"-"सहचीक्लपाति"—इति पाठौ ॥ २ ॥

अथ तृतीया ।

३ २उ ३ १ १ ३ १ २ ३ १ २ ३ १ २
आदित्यैरिन्द्रःसगणोमरुद्भिरस्मभ्यम्भेषजाकरत् ॥३†॥२३

"आदित्यैः" अदिति-पुत्रैः मित्रादिभिः "मरुद्भिः" च "सगणः" गण-सहितः "इन्द्रः" "अस्माकम्" अस्मभ्यम् "भेष-जानि" औषधानि "करत्" करोतु ॥

"भेषजाकरत्"-"भूत्ववितातनूनाम्"—इति पाठौ ॥३॥२३

---

* ऋ० वे० ८, ८, १५, २ ।

† ऋ० वे० ८, ८, १५, ३ ।

अथैकर्गात्मकं सूक्तं प्रवोर्चोपेति, चतुरक्षरात्मिका*
काचिदियमृग्रूपा ; यथा बह्वृचानां
"भद्रन्नोअपिवातयमनः"—इत्येक
एव पाद ऋगात्मकस्य
तद्वत् † ॥

१ २र
प्रवोर्चोप ॥ १ ॥ २४

हे ऋत्विग्यजमानाः ! "वः" यूयम् "उप" समीपे "प्रार्च" प्रकर्षेणेन्द्रं पूजयत ॥ १ ॥ २४

२१ र ७
॥ उद्वंशपुत्रम् ॥ प्रवाः । आयिन्द्रायवृत्रहान्तमा
२ १ र र २ २ १ १ २
२३या । वायिप्रायगाथङ्गा१या२ता । यान्नुजौवा३ ।
२ १ २ १
उप् । षाऽ२तोऽ२३५होयि ॥(१) अर्चा । ताअर्कम्मरु

---

* वस्तुतस्तु "प्रवोर्चोप"—इति नैषा चतुरक्षरात्मिका ऋक् प्रत्युत छन्दआर्चिक-श्रुतायाः "प्रवइन्द्रायवृत्रहन्तमाय (५, २, १० । १भा० ८९५पृ०)"—इत्यस्याः प्रतीकं "प्रवः"—इति, किञ्च "अर्चन्त्यर्कम्मरुतःस्वर्का (५,२,१,९ ।१भा० ८९४पृ०)"—इत्यस्याः प्रतीकम् "अर्च"—इति, तथैव "उपप्रक्षेमधुमतिक्षियन्तः (५, २, १, ८ । १भा० ८९३पृ०)"—इत्यस्याः प्रतीकम् "उप"—इति, एवमेव सम्पन्नं "प्रवोर्चोप"—इति, ऊहगान-तृतीयप्रपाठकान्तिमसुद्वंश पुत्रनाम (१००पृ०) सामैवात्र वर्त्तमान मन्यथा तस्य मूलीभूत-तृचस्यालाभ एव सर्वथा स्यात् । अन्यथाप्यदर्शनात् ।

† 'उद्वंशपुत्रोऽच्छावाकसाम । "प्रवइन्द्राय"—"अर्चन्त्यर्कम्"—"उपप्रक्षे"—एषत्तृचश्छन्दसिका-भाष्ये उक्तार्थः'—इति वि० ।

७ २ १ र २ २ १ १ ८
ताःसुवार२३र्का:। आस्तोभतिश्रुतो१यू३वा। सत्रा३उ
२ २ १ २ १
वा३। उप्। आ॓ऽ२यिन्द्रो३५हायि ॥(२) उपा। प्रा
र ७ २ १र २२ २
च्चेमधुमतायिच्चिया २ ३ न्ताः। पूष्येमरयिन्धा१इम्रा३हा
१ ८ २ २ १
यि। तत्रा ३ उवा ३। उप्। आ॓ऽ २ यिन्द्रो ३ ५
२
हायि(३) ॥ १९ * ॥ [१] २४

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य सप्तमस्याध्यायस्य
सप्तमः खण्डः † ॥ ७ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः ॥ ७ ॥

॥ इति चतुर्थस्यार्द्धः प्रपाठकः ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-श्रीवीर-
बुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणाचार्य्येण
विरचिते माधवीये सामवेदार्थ-प्रकाशे
उत्तराग्रन्थे सप्तमोऽध्यायः ‡ ॥ ७ ॥

---

* ऊ० गा० ३प्र० २अ० १९सा०।

† 'षष्ठखण्डः समाप्तः। इष्टव्रखण्डः समाप्तः'—इति वि०।

‡ 'इति चतुर्थप्रपाठकस्य प्रथमार्द्धः'—इति वि० पदकारादिमतग्रन्थसम्मतश्च।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्म्ममे तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ ८ ॥

## ॥ अथाष्टमाध्यायआरभ्यते* ॥

तत्र,

प्रकाव्यमिति प्रथमे खण्डे—

द्वादशर्चे† प्रथमे सूक्ते—

प्रथमा ।

१ २र ३ १ २ ३ २
प्रकाव्यमुशनेवब्रुवानो

३ २ ३ १ ३ १ २
देवोदेवानाञ्जनिमाविवक्ति ।

१ २ ३ १ २ ३ २
महिव्रतःशुचिबन्धुःपावकः

३ १ २ ३ २ ३र २र ३ १ २
पदावराहोअभ्येतिरेभन् ॥ १ ‡ ॥

"उशनेव" एतन्नामक ऋषिरिव "काव्यं" कवि-कर्म्म स्तोत्रं "ब्रुवाणः" उच्चारयन् "देवः" स्तोता "देवानाम्" इन्द्रादीनां "जनिमा" जन्मानि "प्र विवक्ति" प्रकर्षेण ब्रवीति [ वच परि-

---

* 'इदानीं छन्दोमा वक्तव्यः । ते च त्रयः व्यूढच्छन्दस्कानुष्टुभः प्रतिपदो भवन्ति त्रिष्टुभां लोकजगत्यः जगतीनां गायत्र्यः । ब्राह्मणेन ऋषय उक्ताः'—इति वि० ।

† 'प्रकाव्यमुशनेव ब्रुवाण इति द्वादशर्चो भवति । चतुर्विंशस्तोमिकश्चेदमहः' —इति वि० । द्वादशार्चः खण्ड इति यावत् ।

‡ छ० चा० ६, १, ४, २ ( १ भा० १०९४० )=ऋ० वे० ७, ४, १२, २ ।

भाषणे ( अदा० प० ) व्यत्ययेन विकरणस्य श्लुः ( ३, १, ३६ ), "बहुलञ्छन्दसि ( ७, ४, ७८ )"—इत्यभ्यासस्येत्वम् ], "महिव्रतः" प्रभूतकर्म्मा, "शुचिबन्धुः" [ बध्नन्ति शत्रूनिति बन्धूनि तेजांसि बलानि वा ] दीप्ततेजस्कः, "पावकः" पापानां शोधकः, "वराहः" वरञ्च तदहश्च वराहः [ "राजाहः सखिभ्यष्टच् ( ५, ४, ९१ )"—इति टच् समासान्तः ; तस्मिन्नहनि अभिषूयमाणत्वेन तद्वान् ; अर्श आदित्वान्मत्वर्थीयोऽच् ( ५, २, १२७ ) ] तादृशः सोमः "रेभन्" रेभनं शब्दं कुर्वन्, "पदा" पदानि पात्राणि "अभ्येति" अभिगच्छति ; यद्वा, यथा कश्चन वराहः पदा पादेन भूमिं विक्रममाणः शब्दं करोति तद्वत् ॥ १ ॥

अथ द्वितीया।

२ ३　२ ३ १ २ ३ २उ २
प्रदꣳसासस्तृपला*वग्नुमच्छा†
२उ २ १ २
मादस्त्वंवृषगणाअयासुः।
३　२ ३　१ २　३ १ २
अङ्गोषिण‡म्पवमानꣳसखायो
३ १ ० ३ १२ २२　३ २
दुर्मर्षंवाणम्प्रवदन्तिसाकम् ¶ ॥ २ § ॥

* "तृपलं"—इति
† "मन्युम्"—इति
‡ "आङ्गूष्य"—इति
¶ "साकं प्रवदन्ति वाणम्"—इति च
} ऋ०-पाठाः।

§ ऋ० वे० ७, ४, ११, २।

"हंसासः" शत्रुभिर्हन्यमाना हंसाइव आचरन्तो वा* "वृषगणाः" एतन्नामका ऋषयः† "अमात्" शत्रूणां बलात् त्रासिताः सन्तः "तृपला" तृपलं [ सुपां सुलुगिति सोराकारादेशः (७, १, ३९)। तृपल-शब्दः क्षिप्र-वाची, तदुक्तं यास्केन —"तृप्रप्रहारी क्षिप्रप्रहारी ( निरु० नै० ५, १२ )"—इति ] क्षिप्रं प्रहारिणं‡ "वग्नुम्" अभिषव-शब्दम्¶ "अच्छ" अभिलक्ष्य§ "अस्तं" यज्ञगृहं "प्रायासुः" प्रायासिषुः प्रगच्छन्ति। ततः "सखायः" स्तुत्य-स्तोतृत्व-लक्षणेन सम्बन्धेन सखिभूताः स्तोतारः "अङ्गोषिणं" सर्वैरभिगन्तव्यं‖ [ यद्वा, अङ्गोषिणं स्तोत्रार्हं ], "दुर्मर्षं" शत्रुभिः दुर्धरं दुःसहम्; एवंविधं "पवमानं" सोमम् उद्दिश्य "वाणं" वाद्यविशेषं** "साकं" सहैव "प्र वदन्ति" प्रवादयन्ति तदुपलक्षितं गानं कुर्वन्तीत्यर्थः॥ २॥

---

* 'हंसासः—आदित्य-रश्मयः'—इति वि०।

† 'वृषगणाः—सेक्तारः सङ्घाताः'—इति वि०।

‡ तृपला—लोक-त्रयस्य, पालकाः'—इति वि०। "सोमो वेन्द्रो वा"—इति निरु० नै० ५, १२।

¶ 'वग्नं—वल्गम्'—इति वि०।

§ 'अच्छ—आप्तुम्'—इति वि०।

‖ 'अङ्गोषिणम्—उष दाने दीप्तौ च * * * दीप्तं सोमं'—इति वि०।

** 'वाणं—वादित्र-विशेषम्, यथा वाणस्य शततन्त्रीकस्य जायते शब्दः तद्वत् सोमस्य जायमानस्य महान् शब्दः'—इति वि०।

अथ तृतीया ।

१ २ ३ १ २ ३ १उ
सयोजत*उरुगायस्यजूतिं

३ १ २ ३ १र २र
वृथाक्रीड़न्तम्मिमतेनगावः ।

३ १ २ ३ १ २ ३
परीणसङ्कृणुतेतिग्मशृङ्गो

१ ३ २ ३ १ २ ३ १ २ ३ २
दिवाहरिर्द्दहशेनक्तमृज्रः ॥ ३ † ॥

"सः" सोमः "उरुगायस्य" बहुभिः स्तुत्यस्य आत्मनः‡ "जूतिं" गतिं¶ "योजते" युनक्ति अन्तरिक्षे प्रेरयति । "वृथा क्रीडन्तम्" अनायासेन विहरन्तं गच्छन्तं सोमं "गावः" अन्यो गन्तारः "न मिमते" न परिच्छिदन्ति मातुं न शक्नुवन्तीत्यर्थः । किञ्च "तिग्मशृङ्गः" [ शृणवन्ति हिंसन्ति तमांसीति शृङ्गाणि तेजांसि ] तीक्ष्ण-तेजस्कः "परीणसं" [ बहुनामैतत् ( निघ० ३, १, ७ ) बहुविधं तेजः§ "कृणुते" करोतु अन्तरिक्षे वर्त्तमानो यः सोमः "दिवा" अहनि "हरिः" हरितवर्णः "ददृशे" दृश्यते

---

* "सरंहत"—इति ऋ० पाठः ।

† ऋ० वे० ७, ४, १२, ३ ।

‡ 'उरुगायस्य—बहुविधस्य गानस्य'—इति वि० ।

¶ 'जूतिं—प्रतिशब्दम्'—इति वि० ।

§ 'परीणसं—परि समन्ताद् गावो नीयन्ते परीणसः, तम्'—इति वि० ।

न प्रकाशत इत्यर्थः, "नक्तं" रात्रौ तु "ऋज्रः" ऋजुगामी* विस्पष्टः प्रकाशयुक्तो दृश्यते†॥ [ददृशे—दृशिः कर्मणि लिटि रूपम्॥ ३॥

अथ चतुर्थी।

२ ३ २ ३ १ १ ३ १ २ ३ १ २ ३ १ १
प्रस्वानासोरथाइवार्वन्तोनश्रवस्यवः।
१ २ ३ १ २
सोमासोरायेअक्रमुः॥ ४‡॥

"स्वानासः" अभिषव-वेलाया मुपरवेषु¶ शब्दं कुर्वन्तः "सोमासः" सोमाः "रथा इव" यथा शब्दं कुर्वन्तो रथाः तथा, "अर्वन्तो न" यथा शब्दं कुर्वन्तो अश्वाः तथा, "श्रवस्यवः" ग्रन्तुभ्यः सकाशादन्नमिच्छन्तो "राये" यजमानानां धनाय "प्राक्रमुः" प्रगच्छन्ति॥ ४॥

अथ पञ्चमी।

३ २ ३ १ २ ३ १र २र
हिन्वानासोरथाइवदधन्विरेगभस्त्योः।
१ २ ३ १ २
भरासःकारिणामिव॥ ५ §॥

* 'ऋज्रः—ऋ गतौ नक्ताङ्गो भवति'—इति वि०।

† 'एतदुक्तं भवति—दिवाभिषिक्तः सोमो रात्रिपर्यायेषु पुनर्निषिच्यते, योऽभिषवं करोति तस्यायं दोषः सम्पद्यते'—इति वि०।

‡ ऋ० वे० ६, ७, ३४।

¶ यूपस्य गर्त्ता उपरवा उच्यन्ते। तद्विधायकञ्चैतत् कात्यायन-सूत्रम्—"दक्षिणस्यानसोऽधः प्रउगं खनत्युपरवानश्रादि करोत्यवटवदिति (८, ४, २५)"। यथा यूपस्यावटः क्रियते तथात्राप्युपरवनामकांश्चतुरो गर्त्तानभिस्रीकार मारभ्य परिलेखन पूर्वकं कुर्यादिति च तदर्थः। § ऋ० वे० ६, ७, ३४।

"रथाइव" युद्धदेशं प्रति यथा रथाः तथा* "हिन्वानासः" यागदेशं प्रति गच्छन्तः† सोमाः ऋत्विजां "गभस्त्योः" बाह्वोः "दधन्विरे" धीयन्ते। तत्र दृष्टान्तः—"भरासः" भराः "कारिणामिव"‡ यथा भारवाहानां बाह्वोर्धीयन्ते तद्वत् ॥ ५ ॥

अथ षष्ठी।

१ २ ३ १र २र ३ १ २ ३ १ २
राजानोनप्रशस्तिभिःसोमासोगोभिरञ्जते।

३ २उ ३ २ ३ १ २
यज्ञोनसप्तधातृभिः ॥ ६ ¶ ॥

"सोमासः" सोमाः "प्रशस्तिभिः" प्रशस्ताभिः स्तुतिरूपाभिः वाग्भिः "राजानो न" यथा राजानः§ "सप्तधातृभिः"‖ सप्त-होतृभिः "यज्ञो न" यथा च यज्ञः तथा "गोभिः" गोविकारैः पयोभिः "अञ्जते" अज्यते संस्क्रियत इति ॥ ६ ॥

---

* 'रथाइव—गमन-स्वभावाः'—इति वि०।

† 'हिन्वानासः—पूयमानाः'—इति वि०।

‡ 'कारिणाम् इव—कारिणः रथ-वाहकाः अथवा भराः सङ्ग्रामाः सङ्ग्राम-कारिणः—इति वि०।

¶ ऋ० वे० ९, ७, ३४।

§ 'राजानो न—न शब्द उपमार्थीयः राजान इव, राजानो यथा प्रशस्तिभिः बध्यन्ते सेव्यन्ते तद्वत् सोमासः गोभिरिज्यते; उदकैः क्षीरैर्वा'—इति वि०।

‖ 'सप्तधातृभिः—सप्त वषट्कारिणो सप्त धातारः अथवा सप्त छन्दांसि सप्त धातारः'—इति वि०।

अथ सप्तमी ।

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ २
परिस्वानासइन्दवोमदायवर्हणागिरा ।
१ २ ३ १ २
मधोअर्षन्तिधारया ॥ ७ * ॥

"स्वानासः" सुवानाः अभिषूयमाणाः "इन्दवः" सोमाः "वर्हणा" महत्या "गिरा" स्तुति-रूपया वाचा युक्ताः सन्तः "मदाय" मदार्थं "मधोः" मधुर-रसस्य "धारया" "परि अर्षन्ति" परितो गच्छन्ति ॥

"परिस्वानासः"–"परिसुवानासः"—इति पाठौ, "मधोः" -"सुताः"—इति च ॥ ७ ॥

अथ अष्टमी ।

३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २
आपानासोविवस्वतोजिन्वन्तउषसोभगम् ।
२ ३ २ ३ १ २
सूराअण्वं वितन्वते ॥ ८ † ॥

"विवस्वतः" दीप्तिमतः इन्द्रस्य "आपानासः" आपानभूताः "उषसः" "भगं" शोभां "जिन्वन्तः" प्रेरयन्तः "सूराः" सरन्तः‡

---

* ऋ० वे० ९, ७, ३४ ।

† ऋ० वे० ९, ७, ३८ ।

‡ 'सूराः—सूर्याइव दीप्तिमन्तः'—इति वि० ।

सोमाः "अण्व वि तन्वते"* अभिषव-वेलाया सुपर्वसु शब्दं कुर्वन्ति ॥

"जिन्वन्तः"-"जनम्"—इति पाठौ ॥ ८ ॥

अथ नवमी।

२३१ २ ३ २ ३ १ २ ३ १ २
अपद्वारामतीनाम्प्रत्नाऋण्वन्तिकारवः।
२ ३ १ २ ३ १ २
वृष्णोहरसआयवः ॥ ९ † ॥

"मतीनां कारवः" स्तुतीनां कर्त्तारः "प्रत्नाः" पुराणाः "वृष्णः" सेचकस्य सोमस्य "हरसः"‡ आहर्त्तारः "आयवः" मनुष्याः ऋत्विजः "द्वारा" यज्ञस्य द्वाराणि "अप ऋण्वन्ति" विवृण्वन्ति ॥ ९ ॥

अथ दशमी।

३ १ २ ३ १ २ ३ १ २
समीचीनासआशतहोतारःसप्तजानयः।
३ १र २र ३ १ २
पदमेकस्यपिप्रतः ॥ १० ¶ ॥

---

* 'अण्वं वितन्वते—सूक्ष्मं वितानं कुर्वन्ति'—इति वि०।

† ऋ० वे० ६, ७, ३५।

‡ "हरसः"—इति तु ऋग्वेदीयच्छेदः, सामवेदीयस्तु "हरसे"—इति, पद-ग्रन्थे तथैव दर्शनात्, व्याख्यातञ्चैवमेव विवरणकृतापि—'हरसे दीप्त्यै'—इति।

¶ ऋ० वे० ६, ७, ३५।

"समीचीनासः" समीचीनाः* "जानयः" जाति-सदृशाः "एकस्य" सोमस्य "पदं" स्थानं "पिप्रतः" पूरयन्तः "सप्त होतारः"† यज्ञे "आशत" व्याप्नुवन्ति ॥

"आशत"-"आसत"—इति पाठौ, 'जानयः"-"जामयः" —इति च ॥ १० ॥

अथैकादशी ।

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ २
नाभानाभिन्नआददे चक्षुषा सूर्य्यन्दृशे ।
३ १र २ ३ १ २
कवेरपत्यमादुहे ॥ ११ ‡ ॥

"नाभिं" यज्ञस्य नाभिभूतं सोमं "नः" अस्माकं "नाभा" नाभौ अहम् "आददे" सोमं पीत्वा नाभि-स्थाने करोमीत्यर्थः । किमर्थम्? "चक्षुषा" "सूर्यं" "दृशे" द्रष्टुम् । किञ्च, "कवेः" क्रान्त-कर्म्मणः सोमस्य "अपत्यम्" अंशुम् "आ दुहे" आ पूरयामि¶ ॥

"चक्षुषासूर्यन्दृशे"—"चक्षुश्चित्सूर्यंसचा"—इति पाठौ ॥ ११ ॥

---

* 'समीचीनासः—समीचीन-गुणाः सोमाः'—इति वि० ।

† 'होतारः—देवानामाह्वातारः । सप्त जानयः—सप्त जनाः, 'वषट्कारिणः— होता, मैत्रावरुणः, ब्राह्मणाच्छंसी, पोता, नेष्टा, अच्छावाकः, आग्नीध्र इति' —इति वि० ।

‡ ऋ० वे० ६, ७, ३५ ।

¶ 'कवेः अपत्यम् आदुहे—कविर्मेधावी ब्राह्मणः तस्यापत्यत्वं गच्छति सोमः, तेन निष्पादितत्वात् । आदुहे दुहते दशापवित्रात् सोमम्'—इति वि० ।

अथ द्वादशी।

३ २ ३ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ २
अभिप्रियन्दिवस्पदमध्वर्युभिर्गुहाहितम्।

१ २ ३ १ २
सूरःपश्यतिचक्षसा॥ १२ *॥ १

"सूरः" सुवीर्यः इन्द्रः "चक्षसा" चक्षुषा "दिवः" दीप्तस्य आत्मनः "प्रियं पदम्" अध्वर्युभिः "गुहा" गुहायां हृदये "हितं" निहितं पीतं सोमम्† "अभि पश्यति"॥

"प्रियम्"-"प्रिया"—इति पाठौ‡॥ १२॥

२ २ २ र १ २ १
॥पार्थम्॥ औ३हो३होयि। प्रकावियाम्। उश्न

र २३४ ५ २र र१र २ १ २ ३४
ने। वब्रुवाणाः। देवोदेवा। ना३ञ्जनि। माविव

५ २ १ २ १ २३४५ २र १
क्ती। मह्विव्रताः। शुचिव। धूःपवाकाः। पदावरा।

२ १ २ २ ४
हो३अभि। आ३४३यि। ती३रा५ यिभा६५६न्॥(१)

२ १र २१र २३४५ २र १
प्रहꣳसासः। तृपला। वग्नुमच्छा। अमादस्ताम्।

२१ २ ३ ४ ५ २र १ २१र
वृषग। णाअयासूः। अङ्गोषिणाम्। पवमा। नꣳ

* ऋ० वे० ६, ७, ३५।

† 'गुहायां द्रोणकलशे हितं सोमाख्यं पदम्'—इति वि०।

‡ "चक्षसा"—"चक्षुषा"—इति च बोध्यम्।

३ ४ ५ २ १ २ १ २ २ ४
सखायाः । दुर्मर्षिंवा । णा३म्प्रव । दा३४३ । ती३सा

२ र १ २ १ र १ २ ३ ४ ५
५काई५६म् ॥(२) सयोजनायि । उरुगा । यस्यजूतीम् ।

२ र १र २ १ २ ३ ४ ५ २ र १
वृथाक्रीडा । जा ३ म्निम । तेनगावाः । परीणसाम् ।

२ १ र २ ३ ४ ५ २ २ २ र १
कृणुते । तिग्मशृङ्गाः । ओ३हो३होयि । दिवाहरा

२ १ र २ १ ४
यिः । ददृशे । ना३४३ । क्ता३मा५ऽर्ऽर्ई५६ः(३) ॥५*॥ [१]

२र र १ २ १र
॥ वाराहम ॥ हाउहाउ । ऊप । प्रकावियाम ।

१ १ र २ ३ ४ ५ २ र१रर २ १ २
उशने । वज्रुवाणाः । देवोदेवा । ना३ञ्जनि । मा

३ ४ ५ २ १ २ २ ३ ४ ५ १ २र
विवक्ती । महिव्रताः । शुचिबा३ । धूःपवाकाः । पदा

२ १ २ २ ४
वरा । हो ३ अभि । आ ३ ४ ३ यि । ती३रा५यिभा६

२ १ र २ १ र २ ३ ४ ५ २
४ ६न ॥(१) प्रहꣳसासाः । तृपला । वग्नुमच्छा । अ

१र २ १ २ ३ ४ ५ २ १र
मादस्ताम् । वृषग । णाअयासूः । अङ्गोषिणाम् ।

२ २ ३ ४ ५ २ १ २ ० १ २
पवमा । नꣳसखायाः । दुर्म्मर्षिंवा । णा३ंप्रव । दा

* ऊ० गा० ६प्र० २अ० ५सा० ।

२ ४ २ १र ११
३४३ । तोइसा५काा६५६म् ॥(२) सयोजतायि । उक्
र २ ३ ४ ५ २ १र र २ १ २ ३
गा । यस्युजूतीम् । वृथाक्रीडा । ताइम्मिम । तेन
४ ५ २१र २ १ र २ ३ ४ ५ २र
गादाः । परीणसाम् । कृणुते । तिग्मशृङ्गाः । हाउ
र १ २१र २१ र २ २
हाउ । ऊप् । दिवाहरायिः । दहशोनाइ४३ । क्ता
४
इमा५र्त्रा६५६ः(३) ॥ १८ * ॥ [२]

२ र १ २ १र
॥ प्रवद्भार्गवम् ॥ प्रकावियाम् । उशनेवा । ब्रू
१र २र र १र २र १ १
२वाणाः । देवोदेवा । नाज्जनिमा । वा२यिवक्तायि ।
२ १ २ १ १र २ र १
महिव्रताः । शुचिबन्धुः । पा२वाकाः । पदावरा ।
२र १ १र १ २ १र
होअभियायि । तो२रेभाइनाउ ॥(१) प्रहं९सासाः ।
२ १ र १ २ र १ २ १
तृपलावा । ग्न२मच्छा । अमादस्ताम् । वृषगणाः ।
१र २ र १ २ १ र १र
आ२यासूः । अङ्गोषिणाम् । पवमानाम् । सा२खा
२ १ २ १ १र २ १
याः । दुर्मर्षंवा । णांप्रवदाः । तो२साकाइमाउ ॥(२)

* ऊ० गा० १६प्र० २अ० १८सा० ।

२ र १ ११ र १र १र १र
सयोजतायि। उरुगाया। स्या २जूतीम्। वृथाक्रीडा।
२ १ १र २र १ २ १र
तम्मिमते। ना २गावाः। परीणसाम्। कृणुतेतायि।
१ २ र १ ११ र १ २
ग्मा २श्टगाः। दिवाहरायिः। दहशेना। क्ता २मृत्रा
११११
३१उ। वा२३४५:(३) ॥ २ * ॥[३]

३ ५ ३ २ ४ ५
॥ कुत्ससारथीयम् ॥ होऽवा। उङ्वा३। होवा।
२१र २ १ ११ र १ ३ ४ ५ २र१र २र २
प्रकावियाम्। उशने। वब्रुवाणाः। देवोदेवा। ना
१ २ ३ ४ ५ २ २ १ २ १ २ ३
३ञ्जनि। माविवक्की। मह्विब्रताः। शुचिव। धूःप
४ ५ २१र २१ २ १ २ ३ ४ ५ २
बाकाः। पदावरा। हो३अभि। ऐतिरेभान्॥(१) प्र
१ २र १ २ १ र २ ३ ४ ५ २१र २ १ २ १
हँसासाः। तृपला। वग्नुमच्छा। अमादस्ताम्। वृष
२ ३ ४ ५ २१र २१ २ १ र २ ३ ४
ग। णायआसूः। अङ्गोषिणाम्। पवमा। नँसखा
५ २ १ २ १ २ १ २ ३ ४ ५ २
याः। दुम्मर्षँवा। णा३प्रव। दन्तिसाकाम्॥(२) स
१ २ १ २ १ र २ ३ ४ ५ २१र२र १ २
योजतायि। उरुगा। यस्यजूतीम्। वृथाक्रीडा। ता

* ऊ० गा० २३म० २ख० १सा०।

१ २ ३ ४ ५ २१र२१ ११र २ ३
इम्मिम। तेनगावाः। परीणसाम्। कृणुते। तिग्म

४ ५ २१र२१ २१र २३४५ ३
शृङ्गाः। दिवाहरायिः। दहशे। नक्तमृत्राः। हो४

५ ३ २ ४ ५ ५
वा। उऊवा३। होवा६हाउवा(३) ॥ ६ * ॥ [४] १

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य अष्टमस्याध्यायस्य

प्रथमः खण्डः ॥ १ ॥

---

अथ द्वितीयखण्डे—

असृग्रमिति द्वादशर्चं† प्रथमं सूक्तम्;

तत्र, प्रथमा ।

१ २ ३ १ २ ३१र २र३ १ २ ३ १ २
असृग्रमिन्दवःपथाधर्मन्नृतस्यसुश्रियः।

३ १ २ ३ १ २
विदानाअस्ययोजना ॥ १ ‡ ॥

"अस्य" अनेन यजमानेन कृतान् "योजना" तद्देवता-योग्यान् सम्बन्धान् "विदानाः" जानन्तः "सुश्रियः" शोभन-श्रयणाः "असृग्रम्" हविर्द्धानात् सृज्यन्ते ॥

"योजना"-"योजनम्"—इति पाठौ ॥ १ ॥

---

* ऊ० गा० २३प्र० २अ० ६सा० ।

† 'द्वितीयो द्वादशर्चः'—इति वि० खण्डः-इति यावत् ।

‡ ऋ० वे० ६, ७, २८ ।

अथ द्वितीया।

२उ ३ १ २ ३ २ ३ १ २ ३ १र २र
प्रधारामधोअग्रियोमहीरपोविगाहते।
३ २ ३ १ २ ३ १ २
हविर्हविःषुवन्द्यः॥ २ †॥

"हविःषु" हविषां मध्ये "वन्द्यः" स्तुत्यः "हविः" हवि-रात्मकः यः सोमः "महीः" महतीः "अपः" वसतीवरीः "वि-गाहते", तस्य "मधोः" सोमस्य "अग्रियः" मुख्या धाराः प्रपत-न्तीत्यर्थः॥

"मधोः"--"मध्वः"—इति पाठौ॥ २॥

अथ तृतीया।

२ ३ १ २ ३ २ २ ३ १र २र ३ १ २
प्रयुजावाचोअग्रियोवृषोअचिक्रदद्वने।
२ ३ २ ३ १ २ ३ २
सद्माभिसत्योअध्वरः॥ ३ ‡॥

"अग्रियः" हविषां मध्ये मुख्यः सोमः "युजाः" युक्ताः "वाचः" प्रकरोतीत्यर्थः। एतदेव दर्शयति—"वृषः"¶ कामानां वर्षकः "सत्यः" सत्यभूतः "अध्वरः" हिंसा-वर्जितः सोमः

* "हविष्षु"—इति ख० ग० पु०-पाठः।

† ऋ० वे० ६, ७, २८।

‡ ऋ० वे० ६, ७, २८।

¶ "वृषोअचिक्रदत्"—इति मूलस्य "वृषः", "अचिक्रदत्"—इति छेदमवलम्ब्य व्याचष्टे सायणः, परमेष पदग्रन्थ-विरुद्धः तत्र "वृषा", "उ", "अचिक्रदत्"—इति छेद-दर्शनात्; अतएव विवरणकार आह—'वृषा सेक्ता, उ इति पदपूरणः'—इति।

"सद्म" यज्ञगृहं "अभि" प्रति "वने" उदके अचिक्रदत् शब्दं करोतीत्यर्थः ॥

"वृषोअचिक्रदत्"—"वृषावचक्रदत्"—इति पाठौ ॥ ३ ॥

अथ चतुर्थी।

२ ३ १र २र ३ २ ३ १ २ ३ १र २र
परियत्काव्याकविर्नृम्णापुनानोअर्षति।
१र२ १ २
स्वर्वाजीसिषासति ॥ ४ * ॥

"कविः" क्रान्तकर्मा सोमः "नृम्णा" नृम्णानि बलानि† "पुनानः" शोधयन् "काव्या" काव्यानि कवि-कर्माणि स्तोत्राणि "यद्" यदा "परि अर्षति" परिगच्छति, तदा "स्वः" स्वर्गं "वाजी" बलवान् अन्नवान्विन्द्रः‡ "सिषासति" यागं प्रत्यागन्तुं स्वकीयं बलं सम्भक्तुमिच्छति ॥

"पुनानः"-"वसानः"—इति पाठौ ॥ ४ ॥

अथ पञ्चमी।

१ २ ३ २उ ३ २ ३ १ २
पवमानोअभिस्पृधोविशोराजेवसीदति।
१ २ ३ १ २ ३ १ २
यदीमृण्वन्तिवेधसः ॥ ५ ¶ ॥

---

* ऋ० वे० ६, ७, २८।

† 'नृम्णा धनेन'—इति वि०।

‡ 'वाजी—वेगवान्, अथवा चरुपुरोडाशादि-लक्षणेनान्नेनान्नवान् स्वर्गलोकं यजमानस्य साधयति'—इति वि०।

¶ ऋ० वे० ६, ७, २९।

"यद्" यदा "ईम्" एनं* सोमं "वेधसः" कर्म्मणां कर्त्तारः ऋत्विजः† "ऋण्वन्ति" प्रेरयन्ति, तदा "पवमानः" चरन्नेष सोमः "स्पृधः" स्पर्द्धमानान् याग-विघ्नकारिणः राक्षसादीन् "अभि सीदति" नाशयितुमभिगच्छति। तत्र दृष्टान्तः—"विशः राजा इव" यथा राजा विशः स्पर्द्धमानान् मनुष्यान् नाशयितुमभिगच्छति तद्वत् ॥ ५ ॥

अथ षष्ठी।

२ ३ २३१ २ ३१उ ३ १ २
अव्यावारेपरिप्रियोहरिर्वनेषुसीदति।
३ १ २ ३ २
रेभोवनुष्यतेमती ॥ ६ ¶ ॥

"हरिः" हरितवर्णः "प्रियः" देवानां प्रियतम एव सोमः "वनेषु" उदकेषु§ सम्पृक्तः "अव्याः" अवेः "वारे" वाले "परि सीदति" किञ्च "रेभः" अभिषव-वेलायाम् उपरवेषु शब्दं कुर्वन् "मती" मत्या स्तुत्या‖ "वनुष्यते" सेव्यते ॥ ६ ॥

---

* 'ईम्—इति पदपूरणः'—इति वि०।

† "वेधाः"—इति मेधावि-नामसु निघण्टौ दृश्यते (३, १५)

‡ "अव्यो"—इति ऋ०-पाठः।

¶ ऋ० वे० ६, ७, २९।

§ 'वनेषु उदकेषु सीदति, अथवा वनेषु काष्ठमयेषु द्रोणकलशेषु पञ्चमसादिषु सीदति'—इति वि०।

‖ 'मती—बुद्ध्या ऋत्विग्यजमानानाम्'—इति वि०।

अथ सप्तमी।

२ ३ १र २र ३ १ २ ३ १र २र
सवायुमिन्द्रमश्विनासाकम्मदेनगच्छति।

२ ३ १ २ ३ १ २
रणायोअस्यधर्मणा* ॥ ७ † ॥

"यः" यजमानः "अस्य" सोमस्य "धर्मभिः"‡ कर्मभिः क्रयणाभिषवादिभिः "रण"¶ रमते, "सः" यजमानः "वायुम्," इ,, न्द्रम्," "अश्विना" अश्विनौ च "मदेन" "साकं" सह "गच्छति" प्राप्नोति ॥ ७ ॥

अथाष्टमी।

२ ३ १र २र ३ १ ३ १ २ ३ १ २
आमित्रेवरुणेभगेमधोःपवन्तऊर्मयः§ ।

३ १ २ ३ १ २
विदानाअस्यशक्मभिः ॥ ८ ‖ ॥

---

* "धर्मभिः"—इति ऋ०-पाठः।

† ऋ० वे० ६, ७, २९।

‡ धर्मभिरिति ऋग्वेदीयपाठमवलम्ब्यैवेदं प्रतीक-ग्रहणं व्याख्यानञ्च ; विवरण-कृद्व्याख्यातन्तु सामवेदीयम् तथाहि—'धर्मणा कर्मणा'—इति।

¶ "रणाः" दीर्घान्तश्रुतिः "द्व्यचोऽतस्तिङः (६, ३, १३५)"—इति तत्र दीर्घः।

§ "मित्रावरुणाभगमध्वः"—इति ऋ०-पाठः।

‖ ऋ० वे० ६, ७, १९।

येषां यजमानानां "मधोः" सोमस्य "ऊर्मयः" तरङ्गाः "मित्रावरुणा"* मित्रावरुणौ देवौ "भग"† भगाख्यं देवञ्च प्रति "पवन्ते" चरन्ति, ते यजमानाः "अस्य" सोमस्य इदं सोमं "विदानाः" जानन्तः "शक्मभिः" सुखैः‡ सङ्गच्छन्तइति शेषः ॥ ८ ॥

अथ नवमी ।

३ १ २ ३ २उ ३ १ २ ३ १२
अस्मभ्यꣳरोदसीरयिम्मध्वोवाजस्यसातये ।
२ ३१२ ३ १ २
श्रवोवसूनिसञ्जितम् ॥ ९ ¶ ॥

हे "रोदसी" द्यावापृथिव्यौ ! युवां "मध्वः" देवानां मादयितुः "वाजस्य" सोमात्मकस्यान्नस्य "सातये" लाभाय§ "अस्मभ्यं" "रयिं" धनं "श्रवः" अन्नञ्च‖ "वसूनि" वासकान्यन्यान्यपि पश्वादीनि "सञ्जितं" सञ्जयन्तं** प्रयच्छतमित्यर्थः ॥ ९ ॥

---

*, † ऋग्वेदीयपाठानुसारेणेदं प्रतीकग्रहणम् । विवरणकृता तु सुष्ठूच्यते—'मित्रे, वरुणे, भगे-सप्तम्येकवचनं चतुर्थ्येकवचनस्य स्थाने द्रष्टव्यम्, मित्राय, वरुणाय, भगाय'—इति ।

‡ 'शक्माभिः—शक्तैः कर्मभिः'—इति वि० ।

¶ ऋ० वे० ६, ७, १९ ।

§ 'सातये—दानार्थम्'—इति वि० ।

‖ श्रवः—अन्नं यशो बलं वा'—इति वि० ।

** 'संयतं—सम्यक् यतम्'—इति वि० ।

अथ दशमी।

२ ३१२ ३ २ ३१ २ ३१ २
आ ते दक्षं मयोभुवं वह्निमद्या वृणीमहे।
२ ३१२३ १ २
पान्तमा पुरुस्पृहम्॥ १० *॥

हे सोम! यष्टारो वयं "ते" तव स्वभूतं "दक्षं" बलम् "अद्य"† अस्मिन् यागदिने "आ" आभिमुख्येन "वृणीमहे" सम्भजामहे। कीदृशम्? "मयोभुवं" सुखस्य भावकम् "वह्निं" धनादीनां प्रापकम् "पान्तं" शत्रुभ्यो रक्षकम् "पुरुस्पृहं" बहुभिः स्पृहणीयं कामानाम्॥ १०॥

अथैकादशी।

२ ३ १र १र ३ २उ ३ १ २ ३ १ २
आ मन्द्रमा वरेण्यमा विप्रमा मनीषिणम्।
२ ३ १ २३१ २
पान्तमा पुरुस्पृहम्॥ ११ ‡॥

हे सोम! "मन्द्रं" मदकरं स्तुत्यं वा त्वाम् "आ वृणीमहे" "वरेण्यं" सर्वैर्वरणीयं सम्भजनीयञ्च; किञ्च "विप्रं" मेधाविनं त्वां तथा "मनीषिणं" मनसईषा मनीषा तद्वन्तं स्तुतिमन्तं वा त्वामावृणीमहे [प्रत्येकं विशेषणापेक्षया आ इत्युपसर्गः

---

* ऋ० आ० ६, १, २, १ (२ भा० ५६ पृ०) = ऋ० वे० ७, २, ६, ३।

† मूले तु "निपातस्य च (६, ३, १३६)"—इति दीर्घान्तः "अद्या"—इति।

‡ ऋ० वे० ७, २, ६, ४।

क्रत:* ; किञ्च "पान्तं" सर्वेषां रक्षकम् "पुरुस्पृहं" बहुभिः स्पृहणीयं च त्वां सम्भजामहे ॥ ११ ॥

अथ द्वादशी ।

२ ३ १र २र ३ २ ३ १ २ ३ २
आरयिमासुचेतुनमासुक्रतोतनूष्वा ।
२ ३ १ २ ३ १ २
पान्तमापुरुस्पृहम् ॥ १२ † ॥ २

हे "सुक्रतो" शोभन-प्रज्ञ सोम ! त्वदीयं "रयिं" धनम् वयम् "आ"‡ वृणीमहे । किञ्च, "सु चेतुनम्" [ चिती सञ्ज्ञाने ( भ्वा० प० ) भावे औणादिक उन प्रत्ययः ] सुज्ञानञ्च । किञ्च "तनूषु" अस्मत्पुत्रेषु च धनं सुज्ञानञ्च त्वम् "आ" विधेहि यद्वा पुत्रार्थं वयमावृणीमहे । तथा "पान्त" सर्वस्य रक्षकं "पुरुस्पृहं" बहुभिर्यष्टृभिः काम्यमानं त्वां सम्भजामहे ॥ १२ ॥ २

इति सामवेदार्थ-प्रकाशे उत्तराग्रन्थस्य अष्टमस्याध्यायस्य द्वितीयः खण्डः ¶ ॥ २ ॥

---

* विवरणकारस्त्वन्यथैव व्याचष्टे—'आमन्द्रम्—आनुपूर्व्येण मन्द्रं बलम्'—इति, 'आवरेण्यम्—आभिमुख्येन वरेण्यं तत्'—इति, 'आविप्रम्—अतिशयेन विपश्चितम्'—इत्यादि च ।

† ऋ० वे० ७, २, ६, ५ ।

‡ अत्राप्यन्यथा व्याख्यातं विवरणकृता—'आरयिम्—आभिमुख्येन धनवन्तम्'—इत्यादि ।

¶ 'उक्तं बहिष्पवमानम्'—इति वि० ।

अथ तृतीय-खण्डे,*प्रथम-तृचे—

प्रथमा।

२ १ २ ३ १ २ ३ १ २ ३ १
मूर्द्धानन्दिवोअरतिम्पृथिव्या
२ ३ २ ३ २उ ३ २ ३ २
वैश्वानरमृतआजातमग्निम्।
३ २ ३ २ ३ १ २ ३ १ २
कविꣳसम्राजमतिथिञ्जनाना
३ १ ३ १ २ ३ २
मासन्नःपात्रञ्जनयन्तदेवाः॥ १ †॥

"मूर्द्धानं" शिरोभूतं, कस्य? "दिवः" द्युलोकस्य, "पृथिव्याः" प्रथितायाः भूमेः "अरतिं" गन्तारम् [यद्वा, गन्तव्यं स्वामिनं], "वैश्वानरं विश्वेषां नराणां सम्बन्धिनम्, "ऋते" [ऋतमिति सत्यस्य यज्ञस्य वा नाम (निघ० ३,१०,६)। निमित्त-सप्तम्येषा (२,३,३६ वा०)] ऋतनिमित्तम् "आ" आभिमुख्येन जातं सृष्ट्या-दावुत्पन्नं "कविं" क्रान्तदर्शिनं "सम्राजं" सम्यग्राजमानं "जनानां" यजमानानाम् "अतिथिं" हविर्वहनाय सततं गन्तारं [यद्वा, अतिथिवत् पूज्यम् "आसन्" आसनि [द्वितीयार्थे सप्तमी (२,१,८५), अग्नि-लक्षणेनास्येन हि देवा हवींषि भुञ्जते] "नः" अस्माकं "पात्रं" पातारं रक्षकं वैश्वानरमग्निं

* 'इदानीमाज्यानि'—इति वि०।

† छ० आ० १, २, २, ५ (१ भा० २०४ पृ०) = य० वे० ७, २४ = ऋ० वे० ४, ५, ९, १।

"देवाः" स्तोतारः ऋत्विजः देवा एव वा "आ जनयन्त" यज्ञाभिमुख्येन अजीजनन् अरण्योः सकाशात् उदपादयन्॥

"आसन्नःपात्रम्"-"आसन्नापात्रम्"—इति पाठौ ॥ १ ॥

अथ द्वितीया।

१र २र ३ १ २ ३
त्वांविश्वेअमृतजायमानꣳ

२ ३ २ ३ २ ३ १र २र
शिशुन्नदेवाअभिसन्नवन्ते।

२ ३ १ २ ३ १ २ ३
तवक्रतुभिरमृतत्वमायन्

१र २ ३ २ ३ १र २र
वैश्वानरयत्पित्रोरदीदेः ॥ २ * ॥

हे "अमृत" मरण-रहिताग्ने! "विश्वे देवाः" स्तोतारः "जायमानम्" अरण्योः सकाशात् उत्पद्यमानं त्वां "शिशुं न" पुत्रमिव "अभि सं नवन्ते" अभिसंस्तुवन्ति [ यद्वा, दीव्यन्तीति देवा रश्मयः ते सर्वे जायमानं त्वामभिसन्नवन्ते अभिगच्छन्ति, यथा पितरः पुत्रमभि गच्छन्ति ], अपि च हे वैश्वानर अग्ने! "यद्" यदा "पित्रोः" पालयित्र्योः द्यावा-पृथिव्योर्मध्ये "अदीदेः" दीप्यसे, तदानीं "तव" त्वदीयैः "क्रतुभिः" कर्मभिः ज्योतिष्टोमादिभिर्यागैः "अमृतत्वम्" देवत्वम् "आयन्" यजमानाः प्राप्नुवन्ति ॥ २ ॥

---

* ऋ० वे० ४, ५, ९, ४।

अथ तृतीया।

१ २ ३ २ ३ १२ ३ २
नाभिंयज्ञानाꣳसदनꣳरयीणां

३ १ २ ३ २ ३ १र २र
महामाहावमभिसन्नवन्त।

३ २ क २र ३ १ २
वैश्वानरꣳरथ्यमध्वराणां

३ १ २ ३ १ २ ३ २
यज्ञस्यकेतुञ्जनयन्तदेवाः ॥ २ * ॥ ३

"नाभिं यज्ञानां"†, "सदनं रयीणां" धनानां स्थानमेक-निलयं, "महां" महान्तम् "आहावम" आह्वयन्ते अस्मिन्नाहुतय इत्याहावः तादृशं [यद्वा, वृष्ट्युदक-धाराणामाहाव-स्थानीय मेव-भूतम्] अग्निम् "अभि सं नवन्त" स्तोतारः सम्यक् स्तुवन्ति। तथा "वैश्वानरं" विश्वेषां नराणां सम्बन्धिनम् अध्वराणां यज्ञानां "रथ्यं" रथिनं, यथा रथी स्व-रथं नयति तद्वन्नेतारं रंहितारं गमयितारं‡ "यज्ञस्य" "केतुं" प्रज्ञापकम्¶ एवं-विधमग्निं "देवाः" स्तोतार ऋत्विजो देवा एव वा§ "जन-यन्त" जनयन्ति मन्थनेनोत्पादयन्ति ॥ ३ ॥ ३

---

* ऋ० वे० ४, ५, ६, २।

† 'नाभिं यज्ञानां—प्रधानभूतं सदनम्'—इति वि०।

‡ 'रथ्यं—रथभूतं रंहणीयं वा'—इति वि०।

¶ 'केतुं—ध्वजम्'—इति वि०।

§ 'देवाः—दानवन्त ऋत्विजः'—इति वि०।



अथ द्वितीय-तृचे—

प्रथमा ।

१ २ ३ १ २ ३ १ २ ३ २ ३ १
प्रवोमित्रायगायतवरुणायविपागिरा ।
१ २ ३ २ ३ २
महित्क्षत्रावृतम्बृहत् ॥ १ * ॥

हे मदीया ऋत्विजः ! "वः" यूयमित्यर्थः । "मित्राय" "वरुणाय" "विपा" व्याप्तया "गिरा" स्तुत्या "गायत" स्तुतिं कुरुत [स्तुत्या स्तुतेत्येतत् पाकं पचतीतिवत् ]। हे "महित्क्षत्रौ" प्रभूत-बलौ युवाम् "ऋतं" यज्ञं † "बृहत्" महत् अपि प्रशस्तं स्तुत्यर्थमागच्छतमिति शेषः [ अथवा "महत्" प्रभूतम् "ऋतं" स्तोत्रं शृणुतमिति शेषः ॥ १ ॥

अथ द्वितीया ।

३ २ ३ २ ३ १ २ ३ २ ३ १र २र
सम्राजायाघृतयोनीमित्रश्चोभावरुणश्च ।
३ २ ३ १ २ ३ २
देवादेवेषुप्रशस्ता ॥ २ ‡ ॥

"या" यौ "मित्रश्च" "वरुणश्च" [ परस्परापेक्षया च-शब्दः ] "उभा" उभौ "सम्राजा" सम्राजानौ सर्वस्य स्वामिनौ "घृतयोनी"

---

* ऋ० वे० ४, ४, ६, १ ।

† 'ऋतं सत्यम्'—इति वि० ।

‡ ऋ० वे० ४, ४, ६, २ ।

उदकस्योत्पादकौ "देवा" द्योतमानौ "देवेषु" मध्ये "प्रशस्ता" प्रकर्षेण स्तुत्यौ तौ स्तुत्या गायतेति पूर्वत्रान्वयः ॥ २ ॥

अथ तृतीया ।

१ २  ३ १ २  १ २ ३ २ ३ १ २
तानःशक्तम्पार्थिवस्यमहोरायोदिव्यस्य ।
१ २  ३ २ ३ १ २
महिवाङ्क्षत्रन्देवेषु ॥ ३ * ॥ ४

"ता" तौ देवौ "नः" अस्मदर्थं "पार्थिवस्य" पृथिवी-सम्बन्धस्य "दिव्यस्य" दिविभवस्य च "महः" महतः "रायः" धनस्य "शक्त" समर्थम्, भवतं दातुमिति शेषः । हे देवौ ! "वां" युवयोः "महि" महत् पूज्यं "क्षत्र" बलं देवेषु प्रसिद्धं, स्तुम इति शेषः ॥ ३ ॥ ४

अथ तृतीय-तृचे—

प्रथमा ॥

१र  २र  ३ २ ३ २ ३  १ २
इन्द्रायाहिचित्रभानोसुताइमेत्वायवः ।
१ २  ३ १ २ ३ १ २
अण्वीभिस्तनापूतासः ॥ १ † ॥

"चित्रभानो" हे विचित्र-दीप्ते "इन्द्र !" अस्मिन् कर्म्मणि "आयाहि" आगच्छ । "सुताः" अभिषुताः "इमे" सोमाः

* अत्रैव पुनः ६, ३, ११, १=ऋ० वे० ४, ४, ६, ३ ।

† य० वे० २१, २=ऋ० वे० १, १, ५, ४ ।

"त्वायवः" त्वां कामयमाना वर्त्तन्ते। "अण्वीभिः"* [अङ्गुलि-नामैतत् (निघ० २, ५, २)] ऋत्विजां मङ्गुलिभिः सुता इत्यन्वयः। किञ्च, ते सोमाः "तना" नित्यं "पूतासः" शुद्धाः ऊर्णा-पवित्रेण शोधितत्वात्॥ १॥

अथ द्वितीया।

१र २र ३ २ ३ १र २र ३ १ २
इन्द्रायाहिधियेषितोविप्रजूतःसुतावतः।
२ ३१ २ ३ १२
उपब्रह्माणिवाघतः॥ २ * ॥

हे "इन्द्र!" त्वम् "आयाहि" अस्मिन् कर्म्मणि आगच्छ। किमर्थम्? "वाघतः" [ऋत्विङ्नामैतत् (निघ० ३, १८, ३)] ऋत्विजः "ब्रह्माणि" वेद-रूपाणि स्तोत्राणि "उप" एतुम्। कीदृशस्त्वम्? "धिया" अस्मदीयया प्रज्ञया "इषितः" प्राप्तः, अस्मद्भक्त्या प्रेरित इत्यर्थः। "विप्रजूतः" यथा यजमान-भक्त्या प्रेरितः तथान्यैरपि विप्रैः मेधाविभिः ऋत्विग्भिः प्रेरितः। कीदृशस्य? "वाघतः?" "सुतावतः" अभिषुत-सोम युक्तस्य॥२॥

अथ तृतीया।

१र २र ३ १ २ ३ २ ३ १ २
इन्द्रायाहितूतुजानउपब्रह्माणिहरिवः।
३ १ २ ३ १ २
सुतेदधिष्वनश्चनः॥ ३ ‡ ॥ ५

---

* 'अणवीभिः—सूक्ष्माभिः वीथिभिः'—इति वि०।

† ऋ० वे० १, १, ५, ५।

‡ ऋ० वे० १, १, ५, ६।

[हरि-शब्दः इन्द्र-सम्बन्धिनोरश्वयोर्नामधेयम् "हरी इन्द्रस्य, लोहितोऽग्नेः (नि० १,१५,१-२)"—इति तदीयाश्व-नामत्वेन पठितत्वात्] हे "हरिवः" अश्व-युक्तेन्द्र! त्वं "ब्रह्माणि" आनेतुम् "आ याहि"। कीदृशस्त्वम्? "तूतुजानः" त्वरमाणः। आगत्य च अस्मिन् "सुते" सोमाभिषव-युक्ते कर्म्मणि "नः" अस्मदीयं "चनः" [अन्न-नामैतत् (निरु० नै० ६,१६)] हविर्लक्षणमन्नं "दधिष्व" धारय स्वीकुर्व्वन्त्वित्यर्थः ॥ ३ ॥ ५

अथ चतुर्थ-तृचे—

प्रथमा ।

१ २   ३ १ ३ २ ३ २ ३ १ २   ३ १ २
तमीडिष्वयोअर्चिषावनाविश्वापरिष्वजत् ।
३ १ ३ १ २ ३ १ २
कृष्णाकृणोतिजिह्वया ॥ १ * ॥

हे स्तोतः! "तम्" अग्निम् "ईड़िष्व" स्तुहि, "यः" अग्निः "अर्चिषा" ज्वाला-रूपेण तेजसा "विश्वा" सर्व्वाणि "वना" वनान्यरण्यानि "परिष्वजत्" परिष्वजति परितो वेष्टयति, यश्च तानि वनानि "जिह्वया" ज्वालया दग्ध्वा "कृष्णा" कृष्णवर्णानि "कृणोति", तमीड़िष्वेति सम्बन्धः ॥ १ ॥

---

* ऋ० वे० ४, ८, २८, ५।

अथ द्वितीया ।

२ ३ २ ३ १ २ २ १ २ २ २ ३ १ २
यइद्ध्वआविवासतिसुम्नमिन्द्रस्यमर्त्त्यः ।
३ १ २ ३ १ २ ३ २
द्युम्नायसुतराअपः ॥ २ * ॥

"यः" "मर्त्त्यः" मनुष्यः "इद्धे" दीप्ते अग्नौ "सुम्नं" सुखकरं हविः "इन्द्रस्य" [ चतुर्थ्यर्थे षष्ठी ( २, ३, ६२ ) ] इन्द्राय "आविवासति" परिचरति प्रयच्छति, तस्य मर्त्तस्य "सुम्नाय" द्योतमानायान्नाय तदर्थं "सुतराः" सुखेन तरणीयाः "अपः" उदकानि वृष्ट्यात्मकानि, इन्द्रः करोत्विति शेषः ॥ २ ॥

अथ तृतीया ।

२ ३ १ २ ३ १ २ ३ १ १ ३ १ २
तानोवाजवतीरिषआशून्पिपृतमर्वतः ।
१ २ ३ २ ३ १ २
एन्द्रमग्निश्चवोढवे ॥ ३ † ॥ ६

हे इन्द्राग्नी ! "ता" तौ युवां "वाजवतीः" अन्नवतीः "इषः" इष्यमाणा "वृष्टीः" [ यद्वा, वाजो बलं तद्वतीः इषः अन्नानि ] "आशून्" शीघ्रगाम् "अर्व्वतः" अश्वांश्च "नः" अस्मभ्यं "पिपृतम्

* ऋ० वे० ४, ८, २९, १ ।

† ऋ० वे० ४, ८, २९, २ ।

पूरयतम् प्रयच्छतम् । किमर्थम् ? "इन्द्रम्" "अग्निञ्च" "आ वोढवे" आ समन्तात् वोढुं हविर्भिः प्रापयन्तु ॥ ३ ॥६

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य अष्टमस्याध्यायस्य तृतीयः खण्डः * ॥ ३ ॥

---

अथ चतुर्थ-खण्डे,† प्रथम-तृचे—

प्रथमा ।

१ २ ३ २ ३ १ २ ३ २उ
प्रो अयासीदिन्दुरिन्द्रस्य निष्कृतꣳ
२ २ ३ २र २र ३ १ २
सखा सख्युर्न प्रमिनाति सङ्गिरम् ।
१ २ ३ २ ३ १ २ ३
मर्य इव युवतिभिः समर्षति
१ २ ३ १ २ ३ १ २ ३ २
सोमः कलशे शतयाम्ना पथा ॥ १ ‡ ॥

"इन्दुः" सोमः "इन्द्रस्य" "निष्कृतं" संस्कृतं स्थानं सुहृदं "प्रो अयासीत्" प्रैव गच्छति ; गत्वा च "सखा" सखिभूतः "सख्युः"

---

* 'उक्तं प्रातःसवनं चतुर्विंशस्तोमिकम्'—इति वि० ।

† 'इदानीं माध्यन्दिनं सवनम् । इषायवप्रधारयेति सन्नानि-प्रभृतीनि सामानि ब्राह्मणेनोक्तार्थानि, पुनानः सोमधारयेति कण्व-रथन्तर-प्रभृतीनि सामानि बार्हस्पत्यानि'—इति वि० ।

‡ ऋ० आ० ६, २, २, ४ (२भा० १७९पृ० )=ऋ० वे० ७, ३, ११, १ ।

इन्द्रस्य "सज्जिरं" सम्यग् गिरणाधारभूतम् उदरं "न" "प्रमिनाति" हिनस्ति, किञ्च "मर्य इव युवतिभिः" मर्त्तो यथा तरुणीभिः स्त्रीभिः सह सङ्गतो भवति तद्वदयमपि सोमो युवतिभिर्मिश्रण-शीलादिभिर्वसतीवरीभिरद्भिः सह "समर्षते" सङ्गच्छते अभिषव-काल-पश्चात् सोमः "शतयामना" अनेक-यामन-साधन-वित्तोपेतेन "पथा" मार्गेण दशापवित्र-सम्बन्धिना "कलशे" द्रोणकलशे गच्छतीति शेषः यद्वैकमेव वाक्यम्—यथा मर्यो मर्त्तो युवतिभिः सह सङ्गच्छते एवं कलशे शत-यामना पथा सङ्गच्छते॥

"शतयामना"—"शतयाम्ना"——इति पाठौ॥ १ ॥

अथ द्वितीया।

२३ १२ ३१२ ३१२
प्रबोधियोमन्द्रयुवोविपन्युवः

३१२३१२
मनस्युवःसंवरणेष्वक्रमुः।

२३१ २३ क२र ३२३
हरिंक्रीडन्तमभ्यनूषतस्तुभो

२ ३२३ २३१२
भिधेनवःपयसेदभिश्रयुः॥ २ * ॥

हे सोमाः "वः" युष्माकं "धियः" ध्यातारः† "मन्द्रयुवः" मदकरं शब्दं कामयमानाः "मनस्युवः" स्तुतिं कामयमानाः

* ऋ० वे० ७, ३, १५, २ ।

† 'धियः—बुद्धयः'—इति वि०।

"विपन्यवः" [—स्तोतृ-नामैतत्*) स्तोतारः "संवरेषु" तृण-कटा-वरणोपेतेषु याग-गृहेषु "प्राक्रमुः" प्रक्रमन्ते। तदेवाह—"स्तुभः" स्तोतारः† "हरिं" हरितवर्णं "क्रीड़न्तं" क्रीड़न-शीलं सोमम् "अभ्यनूषत" अभिष्टुवन्ति "धेनवः" अपि "पयसा" स्वीयेन क्षीरेणैव "इत्" इमं सोमम् अभिलक्ष्य "अशिश्रयुः" अधिकं श्रीणन्ति॥

"संवरणेषु"-"संवसनेषु"—इति पाठौ, "हरिङ्क्रीड़न्तं"-"सोमम्मनीषां"—इति च, "पयसेदशिश्रयुः"-"पयसेमशिश्रयुः"—इति च॥ २॥

अथ तृतीया।

१ २    ३१ १ ३ १ ३ १ ३
आनःसोमसंयतम्पिप्युषीमिष

१ ३ १२ ३ १ २  ३ १ २
मिन्दोपवस्वपवमानऊर्मिणा।

२ ३ १ २ ३ २उ ३ १ २
यानोदोहतेत्रिरहन्नसश्चुषी

३१र १र३ १ २ ३ १ २
क्षुमद्वाजवन्मधुमत्सुवीर्य्यम्॥ ३ ‡॥ ७

* "विपन्यवः"—इति निखण्टौ मेधावि-नामसु सप्तदशं पदम् (३, १५)।

† 'स्तुभः—स्तोभवत्यः'—इति वि०।

‡ ऋ० वे० ७, ३, १५, ३।

हे "इन्दो" दीप्त! "सोम!" "पवमानः" त्वं "नः" अस्माकं "संयतं" सङ्गृहीतं "पिप्युषीं" प्रवृद्धम्* "इषम्" अन्नम् "ऊर्मिणा" प्रवाह-रूपेण तदीयेन रसेन "पवस्व" प्रयच्छेत्यर्थः। "या" इट् "नः" अस्माकम् "अहन्" अहनि अह्नः "त्रिः" त्रिषु सवनेषु "असश्चुषी" अप्रतिबन्धेन† "दोहते"। किम्? "द्युमत्" शब्दोपेतं सर्व्वत्र श्रूयमाणं "वाजवत्" बलवत् "मधुमत्" माधुर्य्योपेतं "सुवीर्य्यं" शोभन-सामर्थ्यं पुत्रं दोहते। तामिषं पवस्वेति समन्वयः॥

"ऊर्मिणा"-"अग्नियम्"—इति पाठौ॥ ३॥ ७

२र १र २ १
॥ प्रवद्भार्गवम्॥ प्रोअयासायित्। इन्दुरिन्द्रा। स्या
१ २ र १ २ १ १
२निष्कृताम्। सखासख्यूः। नप्रमिना। ता२यिस
२ १ २ १ १
ङ्गिराम्। मर्य्यइवा। युवतिभायिः। सा२मर्षतायि।
२र १ २र १ १र २ १र
सोमःकला। शशतया। मा२नापथा३१उ॥(१) प्रवो
१ २ १ १ २ १
धियो। मन्द्रयुवो। वा२यिपन्युवाः। पनस्युवाः।
२ १ १ २ १र २ १
संवरणायि। पू२वक्रमूः। हरिक्रीडा। तमभ्यनू। षा

---

* 'पिप्युषीं'—पानेच्छाम्'—इति वि०।

† 'असश्चुषी—आनुपूर्व्येण'—इति वि०।

१ २ १र २ १ १
२तस्तुभाः। अभिधेना। वःपयसायित्। आ २श्रिश्र
२ १ २र १र २ १ १र
यू३राउ ॥(२) आनःसोमा। संयतम्यायि। प्यू २षीमि
१ र १ २ १ १र २र र
षाम्। इन्दोपवा। स्वपवमा। ना २ऊर्म्मिणा। यानो
१र २र १ १ २ १र
दोत्ता। तेत्रिरत्तान्। आ २सस्नुषायि। त्नुमद्वाजाः।
२ १ १र २ १ १ १ १ १
वन्मधुमात्। सू २वीरियाश्माउ। वा२३४५(३) ॥७*॥ [१]

॥ कावम् ॥ प्रवो। अयासीदिन्दुरिन्द्रा। स्यनि
१ १र २ १
ष्कार्त्ता २म्। सखासख्युर्नप्रमिना। निसङ्गायिरा २म्।
१ २ १ १ २ ४ ५
मर्यइवयुवतिभायिः। समर्षाता२३यि। सोमा३ःकाला।
२र १ १ २ ४ २ १
शेप्पताया२३। माना३पा५था६५६ ॥(१) प्रवोवा। धि
र २ १ १ २
योमन्द्रयुवो। विपन्यूवा २ः। पनस्युवःसंवरणायि। षु
१ १ र २ १ १
वक्काम् २ः। हरिंक्रीडन्तमभ्यनू। षतस्त्वभा२३ः। आ
२ ४५ २ १ १ २ ४
भी३धेना। वःपयासा२३यित्। आशा ३ यिश्रा ५ यू ६

* ऊ० गा० ४प्र० १अ० ७सा० ।

२र १ र २ र १
५ ६ ॥(२) आनोवा। सोमसंयतम्पायि। प्युषीमायि
१ र २ र १ १र र
षा२म्। इन्दोपवस्वपवमा। नऊर्म्मायिणा२। यानो
र र २ १ १२ ४ ५ २
दोहतेत्रिरहान्। असश्रूषा२३यि। च्चूमा३द्वाजा। व
१ १२ ४
न्मधूमा२३त्। सूवा३यिरापूयाय५६म(३) ॥ १० *॥ [२]

३र २ ३र ५र १
॥ लौशाद्यम् ॥ प्रोअयासीत्। इन्दुरिन्द्रा २ ३।
४ २ १५ ३२र ३ ५ १ ४ २
स्या३निष्कृतम्। सखासख्यु:। नप्रमिना२३। तौ३स
३ ५ २ २ ३४ १ ४ २ ३ ५
ङ्गिरम्। मर्य्यइव। युवतिभा२३यि:। सा३मर्षति।
३र २ २ ५ १र २ ४
सोम:कला। श्शतया २ ३। मना३पा५था६५६ ॥(१)
३१र ३ ५ १ ४ २ ३ ५ ३ १ ३ ५
प्रवोधिय:। मद्रयुवो२३। वा३यिपन्युव:। पनस्युव:।
१ ४ २ २ ५ ३ २ ३र ५ १
सवरणा२३यि। षू३वक्रमु:। हरिक्रीड। तमभ्यनू२३।
४ २ ३ ५ ३ २३र ५ १ २
षा३तस्तुभ:। अभिधेना। व:पयसा२३यित्। अशा
४ ३र २ ३र ५ १
३यिआ५यू६५६: ॥(२) आन:सोम। संयतपा २ ३ यि।

---

* ऊ० गा० ६प्र० १अ० १०सा०।

४ १र ३५ ३१र ३५ १ ४ १र ३
प्यू३षीमिषम्। इन्द्रोपव। स्वक्षमा २ ३। ना३ऊर्म्मि
५र ३र २र३र ५ १र ४ र३५र ३२
णा। यानोदोह्व। तन्निरह्वा२२न्। आ३सश्चुषी। त्तुर्म
३र ५ १ २ ४
द्वाजा। वन्मधुमा २ ३ त्। सुवा ३ यिरा ५ या ६ ५
६ म् (३) ॥ ११ * ॥ [३]

॥ यज्ञसारथिम् ॥ ३र २ ३ ५ २ २
प्रोश्वाया२३४सीत्। इन्दूरा२३
५ १ २ १ २ १ २ २ २
४यिन्द्रा। स्यानिष्कृता३म्। ह्वोयि। सखासा२३४
५ १ ३ ५ १ २ १ २ १
ख्युः। नप्रामी२३४ना। तायिसङ्गिरा३म्। ह्वोयि।
३ २ ३ ५ २ ३ ५ १ २ १ २
मर्य्याइ२३४वा। युवाती२३४भायिः। सामर्षता३यि।
१ ३र २ ३ ५ २र ३ ५ १ २र
ह्वोयि। सोमाःका२३४ला। श्रेशाना२३४या। माना
१ २ १ ३ २ ३ ५ २ ३
पथा३। ह्वो२३४५ई ॥(१) प्रवोधी२३४यो। मन्द्रायू२
५ १ २ १ २ १ ३ २ ३ ५
३४वो। वायिपन्युवा३ः। ह्वोयि। पनास्यू२३४वाः।
२ ३ ५ १ २ १ २ १ ३ २ ३
संवारा२३४णायि। पूवक्रमू३ः। ह्वोयि। क्वरायिक्षा

* ऊ० गा० ७प्र० २अ० ११सा०।

५ २ ३ ५ १ २ १ २ १
२३४यिडा । तमाभ्या२३४नू । षातस्तुभा३ः । होयि ।
२१ ३ ५ २ ३ ५ १ २१२
अभायिधे२३४ना । वःपाया२३४सायित् । आग्निश्रयू३ः ।
१ २र २ ३ ५ २ ३ ५
होर३४५ई ॥(२) आनाःसो२३४मा । संयाता२३४म्पो ।
१२र १ २ १ २ १ ३ ५ २ ३
प्यूषीमिषा३म् । होयि । इन्दोपा२३४वा । स्वपावा२३
५ १ २र १ २ १ ३र २ ३ ५
४मा । नाऊर्म्मिणा३ । होयि । यानोदो२३४हा ।
२र ५ १ २ १ २ १ ३ २ ३
तेन्वीरा२३४हान् । आसत्रुषा३यि । होयि । त्नुमादा
५ २ ५ ५ १२र १ २ १
२३४जा । वन्माधू२३४मात् । सुवीरिया३म् । हो२३
४५ई । डा(३) ॥ ५ ॥ [४]

२र २ १ २र १र
॥ वाराहम्† ॥ हाउहाउ । ऊप् । प्रोअयासायित् ।
२ १ २ ३ ४ ५ २ १र २१
इन्दुरि । द्रस्यनिष्कृताम् । सखासख्यूः । नप्रमि ।
२र ३ ४ ५ २ १ २ १ २ ३ ४ ५
नातिसङ्गिराम् । मर्य्यइवा । युवति । भिःसमर्षता
२र १ २र १ २र ३ २ ४
यि । सोमःकला । शेष्वत । या । मनाइपा५या ६ ५

* ऊ० गा० १०प्र० १ख० ५सा० ।

† "जगतीवाराहम्"—इति ख० पु०-पाठः ।

२ १र   २ १   २र ३ ४   ५   २ १
६ ॥(१) प्रवोधियो। मन्द्रयु। वोविपन्युवाः। पनस्यु

२ १   २र ३ ४ ५   २ १ र   २ १
वाः। संवर। णेष्ववक्रमूः। न्हरिङ्क्रोडा। तमभ्य।

२र ३ ४ ५   २ १र   ३ १   २र   ३ २
नूषतस्तुभाः। अभिधेना। वःपय। सेत्। अप्पाइयि

४   २र १ र   २ १   २ ३ ४र
आपुयू६५६ः ॥(२) आनःसोमा। संयतम्। पिप्युषी

५   २ १र   २ १   २र ३ ४र   ५   २र
मिषाम्। इन्दोपवा। स्वपत्र। मानऊर्म्मिणा। या

१र र   २र १   २ ३ ४ ५   २र र
नोदोहा। तेन्निर। हन्नसश्चुषायि। हाउहाउ।

१   २ १ र   २ १   २   ३ २   ४
ऊप्। क्षुमद्वाजा। वन्मधु। मत्। सुवाइरापुया६५

६म्(३) ॥ १५ * ॥ [५]

२र १   २र र   ४   २
॥ अपामीवम् ॥ प्रोआ। यासीदिन्दुरिन्द्राइस्याइनि

२ ५   २ १   २   ४ २ ३ ५   २
ष्कृतम्। सखा। सख्युर्न्नप्रमिनाइतीइसङ्गिरम्। म

१   २   ४ २ ३ ५   २र १   २
र्य्याः। इवयुवतिभाइयिःसाइमर्षति। सोमाः। कल

र   ३ २ ४   २ १   २ र
शेशतया। मनाइपापुयाई५६ ॥(१) प्रवो। धियोमन्द्र

---

* ऊ० गा० १३प्र० २अ० १५सा०।

४ २ ३ ५ २ १ २ ४ २ ३ ५
युवोऽवाऽयिपन्युवः। पना। स्तुवःसंवरणाऽयिषूऽवक्रमुः।
२ १ २र ४ २ ३ ५ २ १ २र
ह्वरायिम्। क्रीडन्तमभ्यनूऽषाऽतस्तुभः। अभायि। धे
र २ २ ४ २र १ २र
नवःपयसेत्। अशाऽयिआपूयूइ५इः॥(२) आनाः। सो
४ २र ३ ५ २ १ २ ४
मसंयतम्पाऽयिप्यूऽषीमिषम्। इन्दो। पवस्वपवमाऽना
२र ३ ५र २र १ २र र ४ २ ३ ५
ऽऊर्म्मिणा। यानो। दोहते। त्रिरह्वाऽनाऽसश्चुषी।
२ १ २र ३ २ ४
क्षुमात्। वाजवन्मधुमत्। सुवाऽयिरा५या६५
६म्(३)॥१८*॥[६] ७

अथ नकिरिति प्रगाथरूपे द्वितीयसूक्ते†—

प्रथमा।

२ ३१र २र २ २ ३ १ २ ३ १ २
नकिष्टङ्कर्मणानशद्यश्चकारसदावृधम्।
२ ३ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ १र २र
इन्द्रन्नयज्ञैर्विश्वगूर्त्तमृभ्वसमधृष्टन्धृष्णुमोजसा॥ १ ‡॥

---

* क० गा० २३प्र० २अ० १८गा०।

† 'उक्तो माध्यन्दिनः पवमानः। बृहत्पृष्ठं वामदेव्यं मैत्रावरुणं साम अभि-निधनं काण्वं ब्रह्मसाम वैखानसमच्छावाकसाम'—इति वि०।

‡ छ० आ० ३, २, १, १ (१भा० ५०२पृ०)=ऋ० वे० ६, ५, ८, ३।

"तं" जनम् अन्यो मर्षको जनः "कर्मणा" हननादि-व्यापारेण "नकिः नशत्" नैव व्याप्नोति, "यः" "इन्द्रं चकार" इन्द्रमेवानुकूलं यज्ञैः साधनैश्चकार। कीदृश-मिन्द्रम्? "सदावृधं" सर्व्वदा वर्द्धकं, "विश्वगूर्त्तं" सर्व्वैस्तुत्यम्, "ऋभ्वसं" महान्तम् "ओजसा" स्वीयेन बलेन "अधृष्ट" शत्रुभिरनभिभूतम् "धृष्णुं" शत्रूणामभिभवनशीलम्॥

"धृष्णुमोजसा"—"धृष्णवोजसम्"—इति पाठौ॥ १॥

अथ द्वितीया।

१ २ ३ १र २र ३ १र २र ३ १ २ ३ १ २
अषाढमुग्रम्पृतनासुसासहिंयस्मिन्महीरुरुज्रयः।

२ ३ २ ३ १ २ ३ २ ३ १ २
सन्धेनवोजायमानेअनोनवुर्द्यावक्षामीरनोनवुः॥ २ *॥ ८

"अषाढ़म्" असोढ़म् "उग्रम्" उद्गूर्णबलं "पृतनासु" शत्रुसेनासु "सासहिम्" अभिभवितारमिन्द्रं† स्तौमीत्यर्थः, "यस्मिन्" इन्द्रे "जायमाने" "महीः" महिम्यः "उरुज्रयः" बहु-वेगाः "धेनवः" हविरादिना प्रीणयित्र्यः अजा गाव एव वा‡ "समनोनवुः" समस्तुवन्। न केवलं धेनव एव अपि तु "द्यावः" द्युलोकाः "क्षामीः" पृथिव्यश्च ¶ समनोनवुः, तन्नत्याः सर्व्वे

---

* ऋ० दे० ६, ५, ८, ४।

† 'सासहिं—साधन-स्वभावम्'—इति वि०।

‡ 'धेनवः—गावः, आपः आदित्यरश्मयो वा'—इति वि०।

¶ 'क्षामीः—द्युलोकात् क्षेपणसमर्थाः आदित्य-रश्मयः'—इति वि०।

प्राणिनो नमन्त इत्यर्थः "त्रिवृतो लोकाः"—इति श्रुतेः बहुवचनम् ॥

"धामोः"—"धामः"—इति पाठौ ॥ २ ॥ ८

५ २ ४ ५ ४र ५ २ १ २र
॥ वैखानसम् ॥ नकिष्टा३ङ्कर्मणानशात् । यश्चाका
१ २ ३र २ १ २ ३र २ १ २ १ ३
रा । सदावृधार३म् । सदावृधाम् । इन्द्रान्नया । ज्यौ
३ २ १ १ १ २ ३ २ १ २
विश्वग् । तमा२भ्वैतार३म् । तमृभ्वसाम् । अधाष्टे
१ २ ३र २ १ २ ३र २ ५ २
न्धा । धृष्णुमाजसा२३ । धृष्णुमोजसा३४३ ॥(१) अधृष्टा२
४ ५ ४र ५ १ १ २ १ २ ३र २ १ २ ३र
न्धृष्णुमोजसा । अधाष्टेन्धा । धृष्णुमोजसा२३ । धृष्णुमो
२ १ २ १ २ ३ २ २ ७ १
जसा । अषाढम् । अम्पृतना । तुसा२सहा२३यिम् ।
२ ३र २ १ २ १ २ ३ १ १ १ ३
तुसासहीम् । यस्मायिन्महायिः । उरुज्रया२३ः । उरु
२ ५ २ ४ र ५ ४ ५ २ १ २
ज्रया३४३ः ॥(२) यस्मिन्मा३हीरुरुज्रयाः । यस्मायिन्म
१ २ ३ २ १ १३ २ १ २ १
हायिः । उरुजया२३ः । उरुज्रयाः । सन्धायिनवो ।
१र ३ १र १ ७ १ १ २र २ र १ २र १
जायमाने । अनो२नवू२३ः । अनोनवूः । द्यावाद्यामा

१ २र २ १　　　१ २र २　　　१
यिः। आनोनवू२३ः। अनोनवू३४३ः। ओर ३ ४ ५ई।

डा(३) ॥ ८ * ॥ [१] ८

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य अष्टमस्याध्यायस्य
चतुर्थः खण्डः † ॥ ४ ॥

---

अथ पञ्चम खण्डे‡, प्रथम तृचे—

प्रथमा।

१ २ ३ १र　२र　३ २ ३ १ २
सखायआनिषीदतपुनानायप्रगायत।

२ ३ २ ३ १र　२र　३ २
शिशुन्नयज्ञैःपरिभूषतश्रिये ॥ १ ¶ ॥

हे "सखायः" सखीभूताः स्तोतार ऋत्विजः! "आ निषीदत" स्तोतुमुपविशत। अथ "पुनानाय" पूयमानाय सोमाय "प्रगायत" प्रकर्षेण गायत तमभिष्टुत। ततः अभिष्टुतं सोमं "यज्ञैः" यजमानीयैः हविर्भिर्भिश्रणैश्च "श्रिये" शोभार्थं "परि भूषत" परितोऽलङ्कुरुत। तत्र दृष्टान्तः—"शिशुं न" यथा शिशुं बालं पुत्रं पितर आभरणैरलङ्कुर्व्वन्ति तद्वत् ॥ १ ॥

---

* उ० गा० ४प्र० १अ० ९सा०।

† 'उक्तानि छन्दांसि'—इति वि०।

‡ 'इन्द्रानौमार्भवः पवमानः'—इति वि०।

¶ छ० आ० ६, २, ३, २ (२भा० २०६पृ०) = ऋ० वे० ७, ५, ७, १।

अथ द्वितीया।

१ २ ३ २उ ३ १ २ ३ १ २ ३ १ २
समीवत्सन्नमातृभिःसृजतागयसाधनम्।
३ २ १ २ ३ १र २र
देवाव्यां३मदमभिद्विशवसम्॥ २ *॥

हे ऋत्विजः! "गय-साधनं" गृहस्य साधनभूतम्† "ईम्" एनं‡ सोमं "मातृभिः" मातृभूताभिः वसतीवरीभिः "संसृजत" सम्मिश्रयत, कथमिव? "वत्सन्न" यथा वत्सं मातृभिः गोभिः संयोजयन्ति तद्वत्। कीदृशम्? "देवाव्यं" देवानां रक्षकं "मदं" मदन-हेतुं "द्विशवसं" द्विगुण-वेगम् अतिशयित-बलं वा यद्वा द्वयोर्लोकयोस्तत्र स्थिता देवमनुष्या इत्यर्थः, तेषां हविर्द्दान-प्रदानेन प्रवर्द्धयितारं तं सोमम् "अभि" सं सृजत॥ २॥

अथ तृतीया।

३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २
पुनाताद्क्षसाधनंयथाशर्द्धायवीतये।
१ २ ३ २ ३ १२ ३ १ २
यथामित्रायवरुणायशन्तमम्॥ ३ ¶॥ ९

* ऋ० वे० ७, ५, ७, २।

† "गयः"—इति निघण्टौ गृहनामसूक्त्यं पदम् (३, ४)। विवरणकृता त्वेवं व्याख्यातम्—'गयः प्राणाः, देवानां प्राण-साधनार्थं मिश्रणं सोमस्य'—इति।

‡ "ईम्"—इति ऋग्वेदीय-पाठमवलम्ब्यैव व्याख्या सामवेदीयपाठस्तु "ई"—इति

¶ ऋ० वे० ७, ५, ७, ३।

"दक्षसाधनं" बलस्य साधनं* धनानां वृद्धेर्वा साधकं सोमं "पुनाता" पवित्रेण पुनीत [ पूञ् पवने ( उ० ) क्र्यादिः ; तस्माल्लोटि "तप्तनप्तनथनाश्च ( ७, १, ४५ )"—इति तस्य तबादेशः, पित्त्वाद्दीत्वाभावः "अर्वाय" वेगार्थं† "वीतये" देवानां पानार्थं यथा भवति तथा "मित्राय" "वरुणाय" च "शन्तमम्" अतिशयेन सुखं यथा भवति तथा पुनीतेत्यर्थः ॥

"शन्तमं"-"शन्तमः"—इति पाठौ ॥ ३ ॥ ९

॥ प्रवम‡ ॥ हाऽ। वो३हा। वो३हा३। हा। ओ२३४वा। हायि। साखाया२३४आ। नीषीदा२३४ता। पूनाना२३४या। प्रा२३४गा। या२३४ता। शायिप्रुन्ना२३४या। ग्रैःपारा२३४यिभू। षा२३४त। आ२३४यायि॥(१) सामीवा२३४त्साम्। नामातृ२३३भायिः। साज्जाता२३४गा। या२३४सा। धा२३४नाम्। दायिवीवा२३४याम्। मादामा२३४भी। द्वा२३४यिशा॥(२) वा२३४

---

* 'दक्षसाधनं—शीघ्र-कर्म-कर्त्तारम्'—इति वि०।

† 'अर्वाय—बलाय'—इति वि०।

‡ "प्लवः"—इति ख० पु० पाठः।

५ २ ३ ५ २ ३ ५ २
साम्। पूनाता२३४दा। व्रासाधा२३४नाम्। याथा
३ ५ ३ ५ ३ ५ २ ३
दा२३४र्द्धी। या२३४वी। ता२३४यायि। यथामा२३४
५ २ ३ ५ ३ ५ ३ ५
यित्रा। यावाह्र२३४णा। या२३४म्रा। ता२३४माम्।
२ २ २ २ ३ ५ २
हाऽ। वो३हा। वो३हा३। हा। ओ२३४वा। हा
५र र २ १ २ १२र १र २र ३ १ १
३४। औहोवा। ए३। अतिविश्वानिदुरितातरेमा२३
१ १
४५(३) ॥ १२ * ॥ [१]

२ र र १ २र १
॥ सुज्ञानम् ॥ सखायआ। निषीदता। पुनाना
२ १ २ १ र १
या२। प्रगायता। शिशुन्नाया२। ज्ञैःप। रारयि
३ ५र र १ २ २ र
भू२३४औहोवा। षतश्रियए३ ॥(२) समीवत्साम्। न
र १ २ १ र १ २र र १
मातृभायि। स्रुजतागा२। यसाधनाम्। देवावाया२
१ ३ ५र र १ २ ६
म्। मदम्। आ२भा२३४औहोवा। द्विशवसमे३ ॥(१)
२र र र १ २र १ र १
पुनातादा। दक्षसाधनाम्। यथाशार्द्धा२। यवीतया

* ऊ० गा० ४प्र० १ख० १२गा० ।

यि । यथामायित्रा २ । यव । हरणा२३४औहोवा । य

शन्तममे३उपार३४५(३) ॥ १८ * ॥ [२]

॥ दैवोदासम् ॥ सखा३१ । यआ३१२३४ । निषी ।

दा३ता । पुना३१ । नाया३१२३४ । प्रगा । या३ता ।

शिशू३१म् । नया३१२३४ । ज्ञैःप । रा३यिभूं । षता

३१ । श्रिया३ । औ३४वा ॥(१) समौ३१ । वत्सा३१२

४म् । नमा । तूइ३भायिः । हजा३१२३४ । यसा ।

सा३नाम् । देवा३१ । विया३१२३४म् । मदम् । आ

३भायि । हिशा ३ १ । वसा३म् । औ२३४वा ॥(१)

पुना३१ । तादा३१२३४ । दसा । धा३नाम् । यथा

३१मर्द्धा३१२३४ । यवी । ता३याथि । यथा३ । मित्रा

---

* ऊ॰ गा॰ ७प्र॰ १ अ॰ १८ खा॰ ।

५ २ २ ३ ७ ३ २ १
३१२३४। यव। ह्र३णा। यश्रा३१। तमा३म्। श्रो

५ ३ ५
२३४वा। ऊ२३४पा(३)॥ १९ *॥ [३]

२ १र २ ४ ५ २ ३ ५
॥ पौष्कलम्॥ सखाया३श्रानि। षीदा२ ३ ४ता।

२ १ २र १ २ ३ ५ २ १ ७ र
पुनानाया। प्रागायार३४ता। शिशूनया। ग्रौःपार

३ २ १ ३ १ १ १ १ २ १र २ ४ ५
रा२३४५यिभूद्द५६। षतश्रिये२३४५॥(१) समीवा३त्सन्न।

२ ३ ५ २ १ २र १ २ ३ ५
मातृ२३४भायिः। हजातागा। यासाधा २ ३ ४नाम्।

२र १ ७ ३ २ १ ३ १
देवावियाम्। मदार्मा२३४५भाद्द५६यि। द्विशवसार

१ १ १ २ १र २ ३ ५ २ ३ ५ २ १
३४५म्॥(२) पुनाता३दक्ष। साधा२३४नाम्। यथा

२ १ २ ३ ५ २ १ ७ ३
शर्द्धो। पावीता२३४यायि। यथामित्रा। यवार्ह्व२३

२ १ ३ १ १ १ १
४५णाद्द५६। यशन्तमा२३४५म्(३)॥ १८ †॥ [४]

५ र ३२ ३ ५ २ १
॥ शौक्तम्॥ सखा। यश्राश्रो२३४वा। निषायि।

---

* ऊ० गा० ७प्र० १श्च० १९सा०।

† ऊ० गा० ९प्र० १श्च० १८सा०।

२ ३ ५ १ २ १ २ ३ १ १ १ १ १
दाताओ२३४वा । पुनानायप्रगा२यता२३४५ । शायि

२ ३ ५ १ २ ३ १ १ १ १ १ १ २ ३
यिम्राओ२३४वा । नयज्ञैःपरिभू२३४५ । षाताओ२३४

५ २ ५ २ ३ २ ३ ५ २ १
वा । श्रियेऽ१ ॥(१) समी । वत्साओ२३४वा । नमा ।

२ ३ ५ २ १२ २ १२ ३ १ १ १ १ १ १
तृभाओ२३४वा । इजतागयसाधना२३४५म् । दायिवा

३ ५ १ ३२ २ ३ ५
ओ२३४वा । वियमृदमभाऽ१यि । दायिम्राओ२३४वा ।

२ ५ २ ३ २ २ ३ ५ ३ १ २
वसाऽ१म् ॥(२) पुना । तादाओ२३४वा । चमा । धाना ।

३ ५ १ २२ १ २ २ २ १ ३ १ १ १ १ १ २ ३
ओ२३४वा । यथाशर्द्धायवीतया२३४५यि । याथाओ२३

५ २ १२ ३ १ ३ १ १ १ १ १ २ ३ ५ २
४वा । मित्रायवरुणा२३४५ । याम्राओ२३४वा । तमा

१म्(३) ॥ १५ ॥ [५] ९

अथ प्रवाजीति तृचात्मकं द्वैपदं द्वितीयं सूक्तं —

तत्र प्रथमा ।

२ ३क २र २ १ २ २ २ ३ २ ३ २उ ३ १ २
प्रवाज्यचाः सहस्रधारस्तिरः पवित्रं विवारमव्यम् ॥ १ † ॥

---

* ऊ० गा० १४प्र० २अ० १५सा० ।

† ऋ० वे० ७, ५, ११, ५ ।

"वाजी" बलवान् वेगवान् वा "सहस्रधारः" बहुधारायुक्तः सोमः "अव्यम्" अविभवं "वारं" वालं पवित्रं "तिरः" व्यवधायकं कुर्व्वन् "प्राचाः" विविधं प्रचरति [चरतेर्लुङि रूपम्]॥

"प्रवाजी"-"प्रसुवानः"—इति पाठौ॥ १॥

अथ द्वितीया।

२ ३क २र ३ १ २ ३ १ २ ३ १र २र ३ २
सवाज्यचाःसहस्ररेताअद्भिर्मृजानोगोभिःश्रीणानः॥२*॥

"सः" सोमः "अचाः" चरति। कीदृशः ? "सहस्ररेतः" बहु-रेतस्कः "बहूदकः" "अद्भिः" वसतीवरीभिः "मृजानः" मृज्यमानः "गोभिः" गाविकारैः चीरादिभिः "श्रीणानः" श्रियमाणः॥ २॥

अथ तृतीया।

१ २ ३ १ २ ३ १र २र ३ १र २र ३ २
प्रसोमयाहीन्द्रस्यकुचानृभिर्येमाणोअद्रिभिःसुतः॥३†॥१०

हे "सोम !" "नृभिः" ऋत्विग्भिः "येमानः" नियम्यमानः‡ "अद्रिभिः" ग्रावभिः "सुतः" अभिषुतः "इन्द्रस्य" "कुचा" [सप्तम्या डादेशः (३, ४, ३९)] कुचौ उदरभूते कलशे वा "प्रयाहि" प्रकर्षेण गच्छ [संहितायां येमान इत्यत्र णत्वम्] ॥ ३॥ १०

---

* ऋ० वे० ७, ५, २१, ६।

† ऋ० वे० ७, ५, २१, ७।

‡ 'येमानः—स्तूयमानः'—इति वि०।

१ २र १ २ १   १ १ र   २
॥ सोहविषम् ॥ प्रवाजियन्ताः। सहस्रधारास्ता१यि

५   २ १   २ १र   ५
रा२३४ः। हायि। पविन्नाम्। विवारा२३४ऽहायि।

३ ५ ५   १ २र १ २ १   २ १ र ७
आ२३४व्योई्हायि ॥(१) सवाजियक्षाः। सहस्ररेताअ

५   २ १र   २र १
ह्ना२३४यिः। हायि। मृजानाः। गोभायिश्रा२३४यि

५   १   ५ ५   १र २ २
हायि। णा२३४नोई्हायि ॥(२) प्रसोमयाक्षी। इन्द्र

७   ५   २र१र   २ १
स्यकुक्षानृभा२३४यिः। हायि। येमानाः। अद्रिभार

५   १   ५ ५
३४। यिर्हायि। सू२३४तोई्हायि(३) ॥ १५ * ॥ [१]

२ र   १ २   १   २ १
॥ जराबोधीयम् ॥ प्रवाजियोवा। न्ताः। सहार

२   र १   २   ४ ५
३स्रा। धारस्तायिराः। पवायिन्ना१वा२३यिवा। रम्।

२ २   २ र   १ २   १   २ १
अव्यो३४५ई। डा। सवाजियोवा। क्षाः। सहार

२   र र १   २   ४ ६   ५र
३स्रा। रेताअह्नायिः। मृजाना१गो२३भायिः। श्री।

१र १   २ र   १ २   १   २ १
णानो३४५ई। डा। प्रसोमयोवा। हायि। इन्द्रास्या

---

* ऊ० गा० ४प्र० १ख० १५सा०।

१ २ १ २ २ ४५ ५
२३कू। क्षानुभायिः। येमानो१आ२३द्रायि। भिः।
१ २
सुतो३४५ई। डा(३)॥१*॥[२]१०

अथ येसोमाःइति तृचात्मकं तृतीयं सूक्तम्,†

तत्र प्रथमा।

१२ १२ ३ २ ३१ २३१२ ३१
येसोमासःपरावतियेअर्वावतिसुन्विरे।
२३१ १२१२
येवादःशर्य्यणावति॥१‡॥

एतदादिभ्यामृग्भ्यामिन्द्रार्थं सर्वत्र सोमाभिषवोऽस्तीत्याह— "ये" "सोमासः" "परावति" विप्रकृष्टेऽतिदूरे¶ देशे "ये" वा "अर्वावति" अन्तिके देशे§ "सुन्विरे" अभिषूयन्ते "ये वा" "शर्य्यणावति"॥ [कुरुक्षेत्रस्य जघनार्द्धे शर्य्यणावत्संज्ञाकं मधुर-रस-युक्तं सोमवत् सरोऽस्ति] "अदः" अस्मिन् सरसि सुरसा ये सोमा इन्द्रायाभिषूयन्ते। ते अस्माकमभिमत-फलं ददात्विति वक्ष्यमाणेन सम्बन्धः॥१॥

---

* ऊ० गा० २३प्र० ३ख० १सा०।

† 'यज्ञायज्ञीयमग्निष्टोमसाम'—इति।

‡ ऋ० वे० ७, १, ५, १।

¶ "परावतः"—इति निघण्टौ दूर-नामसु पञ्चमं पदम् (३, २६)।

§ "अर्वाके"—इति निघण्टावन्तिक-नामसु षष्टमं पदम् (१, १६)।

|| 'शर्य्यणावति—भूमौ'—इति वि०।

अथ द्वितीया।

१ २ ३ २ ३१ २ ३१र २र क १ २र
यआर्जीकेषुकृत्वसुयेमध्येपस्त्यानाम्।
२ ३ १ २ ३ १ २
येवाजनेषुपञ्चसु ॥ २ * ॥

"ये" वा सोमाः "आर्जीकेषु" ऋजीकानामदूरभवाः आर्जीकादेशास्तेषु† तथा "कृत्वसु" कृत्वानइति देशाभिधानम्, तेषु‡ कर्मवत्सु देशेषु च; किञ्च "पस्त्यानां" सरस्वत्यादीनां नदीनां¶ "मध्ये" समीपे च ये सोमा अभिषूयन्ते [ "ऋषयो वै सरस्वत्यां सत्रमासतेत्यादिषु§ नदीतीरे यज्ञकरणस्य श्रवणात् ; किञ्च "जनेषु पञ्चसु" निषाद-पञ्चमाश्चत्वारो वर्णा पञ्चजनास्तेषु ‖ च "ये वा" सोमा अभिषुताः। ते सोमा अस्माकमभिमत-फलं ददात्वित्युत्तरेण सम्बन्धः ॥ २ ॥

---

* ऋ० वे० ७, १, ५, ३।

† 'आर्जीकेषु—ऋजुषु'—इति वि०।

‡ 'कृत्वसु—कृतेषु स्थानेषु'—इति वि०।

¶ 'पस्त्यानां—गृहाणाम्'—इति वि०। "पस्त्यम—इति निघण्टौ गृह-नामसु अष्टं पदम् ( ३, ४, )।

§ "ऋषयो वै सरस्वत्यां सत्रमासत। ते कवषमैलूषं सोमादनयन् दास्याः पुत्रः कितवोऽब्राह्मणः कथं नो मध्ये दीक्षिष्टेति। तं बहिर्धन्वोदवहन्नत्रैनं पिपासा हन्तु, सरस्वत्या उदकं मा पादिति"—इति ऐत० ब्रा०।

‖ जनेषु पञ्चसु—'पञ्चजनाः, यजमानश्चत्वारश्चर्त्विजः'—इति वि०।

अथ तृतीया।

१ २ ३ २ ३२८ ३१२ १ २ ३१ १
तेनोवृष्टिन्दिवस्परिपवन्तामासुवीर्यम्।

२ २३ १ ३ १ २
स्वानादेवासइन्दवः॥ ३ *॥ ११

"स्वानाः" सुवानाः तत्र चात्र अभिषूयमाणा "देवासः" देवाः दीपन-शीलाः स्तुत्या वा "इन्दवः" "ग्रहेषु" चमसेषु चरन्तः, "ते" सोमाः "नः" अस्माकं "दिवस्परि" परि-शब्दः पञ्चमी-द्योतकः, अन्तरिक्षादादित्याद्वा "वृष्टिम्" ["अग्नौ प्रास्ताहुतिः सम्यगादित्य मुपतिष्ठते। आदित्याज्जायते वृष्टिः (म० १अ०)"—इति वृष्टि-कारणत्वात्] किञ्च "सुवीर्यम्" शोभन-वीर्योपेतम् पुत्रञ्च धनादिकं वा "आ पवन्ताम्" प्रापयन्तु। यजमानः सोमेनाभिमत-फलानि प्राप्नोति खलु॥

"स्वानाः"-"सुवानाः"—इति पाठौ॥ ३॥ ११

२र र र १ १ १ र २ १
॥ जराबोधीयम्॥ येसोमासोवा। पारावतायि।

२र १ १ १ र २ ४
येआर्वा२३वा। तिसुन्वायिरायि। येवादा१:शा२३र्य्यां।

५र ३ २ २ र र १ २ १ २१
णा। वतो३४५ई। डा॥(१) यआर्ज्जीकोवा। पूक्षत्वमू।

२र १ २ १ र २ ४
यँमाध्या२३यिपा। स्तियानाम्। येवाजा१ना२३यिषू।

* ऋ० वे० ७, २, ५, ४।

५ २१ २र२१ २ १ २१
प। चतो३४५ई। तेनोवृष्टोवा। दायिवस्पराथि।

१ २ र१ र २ ४
पवान्ता२३मा। सुवीरायाम्। स्वानादा१यिवा२३सा:।

५ २२
इ। दवो३४५ई। डा(३)॥ १६ *॥ [१ ११

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य अष्टमस्याध्यायस्य
पञ्चमः खण्डः ॥ ५ ॥

---

अथ षष्ठे खण्डे—

आतेवत्सइति तृचात्मकं प्रथमं सूक्तम्,—

तत्र प्रथमा।

१ १२३१र २र ३१ २ ११२
आतेवत्सोमनोयमत्परमाच्चित्सधस्थात्।

२ ३ १ २ ३२
अग्नेत्वाङ्कामयेगिरा॥ १ †॥

हे "अग्ने!" "वत्सः" ऋषिः "ते" तव "मनः" "परमाच्चित्" उत्कृष्टादपि "सधस्थात्" द्युलोकात् "आ यमत्" आयमन्ति आगमयन्ति। केन साधनेन? "त्वां" "कामये"

---

* ऊ० गा० ४प्र० १ख० १६सा०।

† छ० आ० १, १, १, ८ (१भा० १०५४पृ०)=ऋ० वे० ११, ११५=ऋ० वे० ५, ८, ११, १।

कामया अभिलषन्त्या "गिरा" स्तुत्या [ "कामये"—इत्यत्रापि शे आदेशः पूर्ववत् । यद्वा त्वां कामये अभिलषामि] ॥

"कामये"-"कामया"—इति पाठौ ॥ १ ॥

अथ द्वितीया ।

२ २उ १२३ ३ २ ३ २ ३ १ १ १ २
पुरुत्राहिसदृङ्ङसिदिशोविश्वाअनुप्रभुः ।

३ १ २
समत्सुत्वाहवामहे ॥ २ * ॥

हे अग्ने ! "पुरुत्रा हि" बहुषु हि देशेषु त्वं "सदृङ् असि" समान-द्रष्टा भवसि अतएव "विश्वाः" सर्वा दिश "अनु" लक्ष्य "प्रभुः" ईश्वरो भवसि । ईदृशं "त्वा" त्वां "समत्सु" सङ्ग्रामेषु रक्षणार्थं "हवामहे" आह्वयामहे ॥

"दिशः"-"विदिशः"—इति पाठौ ॥ २ ॥

अथ तृतीया ।

३ २ ३ १२ २२ ३ १ २
समत्स्वग्निमवसेवाजयन्तोहवामहे ।

१ २ ३ १ २
वाजेषुचित्रराधसम् ॥ ३ † ॥ १२

"समत्सु" समदेषु सङ्ग्रामेषु "वाजयन्तः" बलमिच्छन्तो वयम् "अवसे" रक्षणार्थम् "अग्निं हवामहे"। कीदृशम् ? "वाजेषु" सङ्ग्रामेषु "चित्रराधसम्" याचनीय-धनम् ॥ ३ ॥१२

* ऋ० वे० ५, ८, २६, ३ ।

† ऋ० वे० ५, ८, २६, ४ ।

५र २    १ २ १    १ १र
॥ वात्सम् ॥ आतेवत्साः । मनोयमत् । परमात् ।

१ २    १ २ २    ४ ५    ४
चित्सधार२३स्थात् । अग्नायित्वा२ङ्का३ । मयोवा । गा

५    २ र    १ २    १ र
५यिरोईहायि ॥(१) पुरुत्राहो । सद्दङ्ङसि । दिश्गो

२ र    १ २    १ २ २    ४ ५
विश्वाः । अनुप्रा२३भूः । समात्सु२३त्वा३ । हवोवा ।

४ ५    २    १ २ र    १र २
मा५हीर्ई हायि ॥(२) समत्सूवा । ग्निमव ते । वाजयन्तः

र    २    १र    २ २    ४ ५    ४
हवामा२३हायि । वाजायिषू२३वा३यि । न्नरोवा । धा

५
५सोईहायि(३) ॥ १७ ॥ [१] १२

अथ द्वितीय-तृचे—

प्रथमा ।

१ २ ३ १ १ ३ १ २ ३ १ २
त्वन्नइन्द्राभरओजोनृम्णंशतक्रतोविचर्षणे ।

१ ३ १ २ ३ १ २
आवीरम्पृतनासहम् ॥ १ † ॥

---

* ऊ० गा० ४प्र० १ख० १७सा० ।

† छ० था० ५, १, २, ७ ( १भा० ८२४पृ० ) = ऋ० वे० ४, २, १०, १ ।

हे "शतक्रतो" बहुकर्मन् ! "विचर्षणे" विद्रष्टः इन्द्र ! त्वं "नः" अस्मभ्यम् "ओजः" बलं "नृम्णं" धनं च "आ भर" आहर। "वीरं" वीर्य्योपेतम् "पृतनासहं" सेनानामभिभवितारं त्वाम् "आ" याचामह इति शेषः ॥

"आभरओजः"-आवृतामोजः"—इति पाठौ ॥ १ ॥

अथ द्वितीया ।

१र २र ३१ २३ २३ १ २ ३ १ २
त्वꣳह्निनःपितावसोत्वम्मातामतक्रतोबभूविथ ।

१ २ ३ १ २
अथातेसुम्नमीमहे ॥ २ * ॥

हे "वसो" वासयितः ! "शतक्रतो" बहुकर्म्मन्निन्द्र ! त्वं "नः" अस्माकं "पिता" पितृवत् पालको "बभूविथ" भव "त्वं" "माता" मातृवद्धारकश्च बभूविथ। अथ च वयं "ते" तव स्वभूतं "सुम्नं" सुखम् "ईमहे" याचामहे ॥ २ ॥

अथ तृतीया।

१ २ ३ १२ १२
त्वाꣳशुष्मिन्पुरुहूतवाजयन्तमुपब्रुवेसहस्कृत ।

१२ ३ १ २
सनोरास्वसुवीर्य्यम् ॥ ३ † ॥ १३

---

* ऋ० व० ४, १, १०, १।

† ऋ० वे० ४, १, १०, ३।

[ सहसा बलेन स्तोतृभिर्युक्तः कृतः सहस्कृतः ] हे "सह-स्कृत" इन्द्र ! [स्तुत्या हि देवताया बलं वर्द्धते, तस्य सम्बोधनम्] —"शुष्मिन्" अतएव बलवन् ! "पुरुहुत" पुरुभिर्बहुभिर्यजमानै राहुतेन्द्र ! "वाजयन्तं" बलमिच्छयन्तं त्वाम "उपब्रुवे" उप स्तौमि। "सः" त्वं "नः" अस्मभ्यं सुवीर्यं धनं "रास्व" देहि॥

"सहस्कृत"-"शतक्रतो"—इति पाठौ ॥ ३ ॥ १३

५ २ ४ ५र १र र
॥ औपगवाद्यम्॥ तुवन्नाश्इन्द्रआभरा। ओजोनृ

र २र १
म्णाꣳशतक्रतोविचर्षणायि। आवौ२। हौ२। ऊवा

२ ५ १र १ २ ५ २ ४
२३यि। रा३४पा। जनासाह्याम्॥(१) तुवꣳह्यश्यिन्नः

५र १ र र र र २
पितावसाउ। त्वम्माताशतक्रतोबभूविथा। अयौ२।

१ २ ५ २र १ २
हौ२। ऊवा२३यि। ता३४यिमू। म्नमीमाह्यायि॥(२)

५ र १ ४ ५ र १र र १
तुवाꣳशू३ष्मिन्पुरुहूता। वाजयन्तमुपब्रुवेसहस्कृता। स

१ २ ५ २ र १ २
नौ२। हौ२। ऊवा२३यि। रा३४स्वा। सुवीरायाम्।

र १ २ ५र र २ १२ १
ए। हा२ए२३। हिया३४औहोवा। ए३। उपा३१२

१११
३४५(३) ॥ १८ * ॥ [१] १३

---

* ऊ० गा० ४प्र० १ख० १८गा०।

अथ तृतीय-तृचे—

प्रथमा ॥

१ २ ३ १२ उ ३ १ २
यदिन्द्र चित्रमेहनास्ति त्वादातमद्रिवः ।
२ ३ १ २ ३ १ २
राधस्तन्नो विदद्वस उभयाहस्त्याभर ॥ १ * ॥

हे "अद्रिवः" वज्रवन् ! "चित्र" चायनीयेन्द्र ! "त्वादातं" त्वया दातव्यं यद्धनं "मे" मम "इह" अस्मिंल्लोके "नास्ति", हे "विदद्वसो" लब्धधनेन्द्र ! "नः" अस्मभ्यम् "उभया हस्ती" उभाभ्यां हस्ताभ्यां तद् "राधः" "आभर" आहर ॥

"मइह"–"मेहना"—इति छन्दोगानां बह्वृचानां पाठौ ॥१॥

अथ द्वितीया ।

१र २र ३ १ २ ३ १ २ ३ १र २र
यन्मन्यसे वरेण्यमिन्द्र द्युक्षं तदाभर ।
३ २ ३ १ २ ३ १र २र ३ १ २
विद्याम तस्य ते वयमकूपारस्य दावनः ॥ २ † ॥

हे इन्द्र ! "यत्" "द्युक्षम्" अन्नं "वरेण्यं" वरणीयं "मन्यसे" "तत्" द्युक्षम् "आभर" अस्मभ्यम् । "ते" तव सम्बन्धिनो "वयं"

---

* छ० आ० ४, २, १, ४ ( १भा० ३०४पृ० ) = ऋ० वे० ४, ६, १०, १ ।

† ऋ० वे० ४, २, १०, १ ।

"तस्य" तादृशस्योक्तलक्षणस्य "अकूपारस्य" [ अकुत्सितः पारो अन्तो यस्य तादृशस्यानस्य "दावनः" दानस्य "विद्याम" स्याम ॥

"दावनः"-"दावने"—इति पाठौ ॥

अथ तृतीया ।

१ २ ३ २ ३ २ ३ २ ३ १ २ ३ २ ३ १
यत्तेदित्सुप्राराध्यम्मनोअस्तिश्रुतम्बृहत् ।
१ २ ३ १ २ ३ १र २र ३ १ २
तेनदृढाचिदद्रिवआवाजन्दर्षिसातये ॥ ३* ॥ १४

॥ इति चतुर्थः प्रपाठकः ॥

हे इन्द्र ! "ते" तव "दित्सु" "प्रराध्य" प्रकर्षेण स्तुत्य "श्रुतं" "बृहत्" महत् यत् "मनः" "अस्ति", "तेन" मनसा हे "अद्रिवः" वज्रवन्निन्द्र ! "दृढाचित्" दृढमपि "वाजम्" अन्नम् "आ दर्षि" आदारयसि, "सातये" अस्मत्सम्भजनाय लाभाय वा ॥

"दित्सु"-"दित्सु"—इति पाठौ ॥ ३ ॥ १४

३ ४ ५ ३ २ ४ ५
॥ वौङ्कम् ॥ यदिद्रचित्तमइ । ह्नाइ । आस्ती ।
१र २ २ २ १ १
त्वादातमद्रिवः । राधस्ताऽ२३न्नाः । वीवीऽ२ । ददसा
२ १ १ २
उ । उभयाऽ२३हा । स्तायाऽ२३ । भाऽ२३राऽ३४३ ॥(१)

* ऋ० वे० ४, २, १०, ३ ।

२ ४ ५र र २ २ ४ ५ १ र
यन्मन्यसेवरे। णियाऽ३म्। आयिन्द्रा। द्युक्षन्तदाभ
र २ १ १र र
र। विद्यामा२३ता। स्यास्या२। तेवयाम्। अकूपा
२ १ १ १ २ ४र ५
२३रा। स्यादा२३। वा२३ना३४३ः॥(२) यत्तेदित्सुप्र
र २ २ ४ ५ १ र
रा। धियाऽ३म्। मामाः। अस्तिश्रुतम्बृहत्। तेनदा
२ १ १ र र २
२३र्ढी। चायिवा२यित्। अद्रिवाः। आवाजा२३दा।
२ १ २ १
षायिसा२३। ता२३या३४३यि। ओ२३४५ई।
डा(३)॥१८*॥[१]

२ १ ४ ५ ४
॥ वसिष्ठप्रियम्॥ यदिन्द्रा२३। चित्रमइह। ना
५ २र ऽर १ ७ र १ २ १
स्ती। त्वादा३तामद्रायिवो२। राधास्तन्नो३। विदा
३ ५ १ २ ३ ५ १ २ ३ ५
२द्वा२३४साउ। ऊभाओ२३४वा। स्वाहाओ२३४वा।
५ २ १ ४र ५र ४ ५
स्तियापूभरा॥(१) यन्मन्या२३। सेवरेणिम्। आयिन्द्रा।
२ १ २ १ २ १ ३
द्युक्षा३न्तादा१भारा२। विद्यामता३। स्यता२यिवा२३

* ऊ० गा० ४प्र० १अ० १९सा०।

५ १ २ ३ ५ १ २ ३ ५ ४
४याम् । आकाओ२३४वा । पाराओ२३४वा । स्वदा

२ १र ४ ५र ४ ५
५नाः ॥(२) यत्तेदी२३ । सुप्रराधियम् । मानाः ।

२ १ ० र १ २ १ २
अस्ती३भूतम्वृद्दा२त् । तेनाहढा३ । चिदा२द्रा२३४यि

५ १ २ ३ ५ १ २ ३ ५ ४
वाः । आवाओ२३४वा । जान्दाओ२३४वा । षिसा५त

याथि । हो५ई । डा(३) ॥ १९ * ॥ [२] १४

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य अष्टमस्याध्यायस्य

षष्ठः खण्डः † ॥ ६ ॥

वेदार्थस्य प्रकाशेन तमो हार्द्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः ॥ ८ ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-श्रीवीर-
बुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणाचार्य्येण
विरचिते माधवीये सामवेदार्थ-प्रकाशे
उत्तराग्रन्थे अष्टमोऽध्यायः ‡ ॥ ८ ॥

---

* ज० गा० २३प्र० २ख० १९वा० ।

† 'समाप्तश्चैतत्प्रथमसहः'—इति वि० ।

‡ 'चतुर्थः प्रपाठकः परिसमाप्तः'—इति वि० मूलपुस्तकादिसम्मतश्चेतिशम् ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्म्ममे तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ ९ ॥

## ॥ अथ नवमोऽध्याय आरभ्यते * ॥

तत्र,

शिशुञ्जज्ञानमिति प्रथम-खण्डे† तृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा ।

१ २ ३ १ २ ३ १ २
शिशुञ्जज्ञानꣳहर्यतम्मृजन्ति
३ २ ३ १२ ३१२ ३ १२
शुम्भन्तिविप्रम्मरुतोगणेन ।
३ २ ३ १र २ ३ १र
कविर्गीर्भिष्काव्येन‡कविःसंसत्
२र ३ २३ १२ ३ १ २
सोमःपवित्रमत्येतिरेभन् ॥ १¶ ॥

"शिशुम्" इदानीमुत्पन्नत्वाच्छिशुवत्तिष्ठन्तम्§ [यद्वा, पापान्वित मकुर्व्वन्तं विनाशयन्तम्] "जज्ञानम्" प्रादुर्भूतम्‖ अतएव

---

* 'इदानीमष्टममहस्त्वारिंश मुच्यते'—इति वि०।

† "गायत्र-प्रभृति-साम्नां ब्राह्मणेनार्षेयमुक्तम्'—इति वि०।

‡ "गोभिः काव्येन"—इति विसर्गमध्यपाठः ख० मु० पु०।

¶ ऋ० वे० ७, ४, ९, २।

§ 'शिशुं—शंसनीयम्'—इति वि०।

‖ 'जज्ञानं—जायमानम्'—इति वि०।

"हर्य्यतं" [हर्य्य गतिकान्त्योः (भ्वा० प०)]। भृमृदृशी-त्यादिना अतच्। सर्वैः काम्यमानं सोमं "मृजन्ति" मरुतः* शोधयन्ति किञ्च "विप्र" मेधाविनं सोमं "गणेन" आत्मीयेन† सप्तसङ्ख्याकेन "शुम्भन्ति" अलङ्कुर्वन्ति‡। ततः "कविः" क्रान्तप्रज्ञः सोमः "काव्येन" कवि-कर्म्मणैव "कविः" शब्दयितव्यः सन् शब्दायमानः "गीर्भिः" स्तुतिभिः सह "पवित्रम्" "अत्येति" अतीत्य गच्छति॥

"विप्रम्"—इति छन्दोगाः, "वह्निम्"—इति बह्वृचाः पठन्ति॥१॥

अथ द्वितीया।

१ २ ३ १ २ ३ २ ३ २
ऋषिमनायऋषिकृत्स्वर्षाः

३ १ २ ३१ २ ३ २
सहस्रनीथःपदवीष्कवीनाम्¶।

३ १ ३ १ २ ३ १र २र ३
तृतीयन्धाममहिषस्सिषास

१ २ ३ २ ३ १ २ ३ १
न्त्सोमोविराजमनुराजतिष्टुप्॥ २ §॥

"ऋषिमनाः" सर्व्वदर्शनशीलमनस्कः, अतएव "ऋषिकृत्" सर्वस्य दर्शनकर्त्ता प्रकाशनस्य कर्त्ता "स्वर्षाः" सर्वस्य सूर्य्यस्य वा

---

* 'मरुतः—आदित्यरश्मयः'—इति वि०।

† 'गणेन—सम्पातेन'—इति वि०।

‡ 'शुम्भन्ति—पावयन्ति'—इति वि०।

¶ "पदवीः कवीनाम्"—इति विसर्गमध्यपाठः ख० मु० पाठः।

§ ऋ० वे० ७, ४, ६, ३।

सम्भक्ता: "सहस्रनीथ:" [ नीथा स्तुति: ] बहुविध-स्तुतिकः "कवीनां" क्रान्त-प्रज्ञानां मध्ये "पदवी:" स्खलितानां पदानां साधुत्वेन संयोजयिता य: सोमो विद्यते स "महिष:" महान् पूज्यो वा सोम: "तृतीयं धाम" द्युलोकं "सिषासन्" सम्भक्तुमिच्छन् "स्तुप्" स्तूयमान: सन् "विराजं" विशेषेण राजन्तं दीप्यमान मिन्द्रम् "अनुराजति" प्रकाशयति ॥ २ ॥

अथ तृतीया।

३ २३ १ २३२ ३ १ २
चमूषच्छ्येनः शकुनोविभृत्वा

३२ ३१र २र ३ १ २
गोविन्दुर्द्रप्सआयुधानिबिभ्रत्।

३२ ३ १र २र ३ २
अपामूर्मिꣳसचमानःसमुद्र

३ २ ३ १ २ ३ १ २
न्तुरीयन्धाममहिषोविवक्ति ॥ ३ * ॥ १

"चमूषत्" चमन्ति भक्षयन्त्यनेति चम्वश्चमसास्तेषु सीदन्† यद्वा, चम्वौ अधिषवणफलके तयोवर्त्तमान: "श्येन:" शंसनीय: "शकुन:" शक्त: सामर्थ्यकारी "बिभृत्वा" [ हरतेरातोमनिन्नित्यादिना (३, २, ७४) क्वनिप् ] पात्रेषु विहरणशील:

* ऋ० वे० ७, ४, ९, ४।

† 'चमूषत्— * * *। अथवा चमूम्, सेनासु सीदति'—इति वि०।

"गोविन्दुः" यजमामानां गवां लम्भकः* [विन्दुरिच्छुरिति उ-प्रत्ययान्तत्वेन निपातितः] "द्रप्सः" धारयन्† "अपाम्" उदकानाम् "ऊर्मिं" प्रेरकं "समुद्रम्" [अन्तरिक्षनामैतत् (निघ० १, ३)] अन्तरिक्षं "सचमानः" सेवमानः "महिषः" महान् य एवं विधः सोमः स "तुरीयं" चतुर्थं धाम चान्द्रमसं स्थानं‡ "विवक्ति" सेवते सूर्य्यलोकस्योपरि चन्द्रमलोको विद्यत इति यमः पृथिव्या अधिपतिः समावत्वित्यादिभिश्चन्द्रमानक्षत्राणामधिपतिः सद्यमत्वदैचित्यन्तेर्मन्त्रैर्ज्ञायते ॥ ३ ॥ १

२ २ २ १ २
॥ पार्थम् ॥ ओ३हो३होयि। भिप्रुञ्जञ्जा। ना३ऽ
१ २ ३ ४ ५ ३ १ २ १ २
हुर्यं। तम्मृजन्तायि। प्रुभन्तिवायि। प्रां३मरु। तो
३ ४ ५ २ १र २ १ र २ ३ ४ ५
गणेना। कविगीर्भायिः। का३विये। नाकविस्सान्।
२र १ २ १ २ २ ४
सोमःपवायि। चा३मति। आ३४३यि। ती३रापुयि
२ १ २ १ २ ३ ४ ५
भा६५६न् ॥(१) ऋषिमनाः। या३ऋषि। कृत्सुवर्षाः।
२ १ २ १ २ ३ ४ ५ २ र १
सहस्रनायि। या३ःपद। वीःकवीनाम्। तृतीयन्धा।

---

* 'गोविन्दः—गावः उदकं वाक् पृथिवी आदित्यरश्मयो वा। एतानि यो विन्दति स गोवित्। विदज्ञाने विदल्लाभे विदसत्तायाम्'—इति वि०।

† 'द्रप्सः—उदकसम्मिश्रः'—इति वि०।

‡ 'तुरीयं धाम— * * * द्रोणकलशम्'—इति वि०।

२ १ २ ३ ४ ५ २र १र १ २ १
मा३महि। षःसिषासान्। सोमोबिरा। जा३मनु।
२ २ ४ २ र१ २
रा३४३। जा३तापूयिष्टई५ई॥(२) चिमूषच्छायि। ना
१ २ ३ ४ ५ २र १ २ १र
३ःप्रकु। नोविभृत्वा। गोविन्दुद्रा। प्र्सा३आयु।
१र१ ४ ५ २ १र१र २ १ र २ ३ ४ ५
धानिविम्रात्। अपामूर्मीयिम्। सचमा। नःसमुद्रा
१ र १ र १ २ २
म्। ओ३हो३होयि। तुरीयन्धा। मा३महि। षो३
२ ४
४३। वा३यिवा५क्का६५६यि(३)॥ १२ *॥ [१]

२ ४ २
॥ महावामदेव्यम्॥ प्राऽ५यिप्रुम्। यज्ञा३ना३ऌं
४ ५ १ र र
ह्य्यताम्। मा। जन्तिप्रुम्भन्तिविप्रम्मरुतोगणेनकवि
र र र र र २ १ १ र र १
गीर्भिःकाव्येनाकविःसन्सोमः। पा। औ३होहायि।
२ ३र र १ १ १
विन्ना२३मतायि। एत्य। हो३। ऊम्मा२। राऽ२यि
५ ७ ४ २ ४ ५
भो ३ ५ हायि॥(१) आऽ५षिं। मना३या३ऋषिकृत्।
१ र र र र र र र
सू। वर्षाःसहस्रनीथःपदवीःकवीनांस्तृतीयन्धाममहिषः

---

* ऊ० गा० ९प्र० १अ० १२सा०।

सिषासन्त्सोमः। वा। औ३होहायि। राजा२३मनू।
राजौहो३। ऊम्मा२। ता५२यिष्टो३५हायि ॥(२) चा
५मू। पक्ष्वा३यिना३ःशकुनाः। वायि। भृत्वागोवि
न्दुर्द्रप्सश्चायुधानिबिभ्रदपामूर्म्मिꣳसचमानःसमुद्रन्तुरी।
या। औ२होहायि। धामा२३महायि। पोवौहो३।
ऊम्मा२। वा५२क्तो३५हायि(३) ॥ ७ * ॥ [२]

॥ हाउउऊवायिवासिष्ठम् ॥ हायि। उऊवायि।
शिश्मा३४औहोवा। जज्ञा। ना३ꣳहर्य्यं। तम्मृजन्त।
यि। शुम्भा३४औहोवा। तिवायि। वा३ह्निम्मरु। तौ
गणेना। कवा३४औहोवा। गीर्भायिः। का३विये।
नाकविःसान्। सोमा३४औहोवा। पवायि। त्रा३
मति। आ३४३यि। ती३रा५यिभा६५६न् ॥(१) कषा

* ऊ० गा० १०प्र० १अ० ७खा०।

३र ४र ५ १ २ १ २ ३ ४ ५ २
३४औहोवा । मनाः । या२ऋषि । कृत्सुवर्षाः । स

३ ३र ४र ५ १ २ १ २ ३ ४ ५
हा३४औहोवा । स्वनायि । था२:पद । वीःकवीनाम् ।

३ २ ३र ४र ५ १ २ १ २ ३ ४ ५
तृता३४औहोवा । यन्या । मा२महि । षःसिषासान् ।

३र २ ३र ४र ५ १ २ १ २ २
सोमा३४औहोवा । विरा । जा२मनु । रा३४३ । जा

४ ३ २ ३र ४र ५ १
३ताप्र्यिष्टू ६५६प् ॥(२) चमू३४औहोवा । षच्छ्रायि ।

२ १ २ ३ ४ ५ ३र २ ३र ४र ५ १
ना२:शकु । नोविभूत्वा । गोवा३४औहोवा । दुद्रीं ।

२ १र १र २ ५ ३ २ ३र ४र ५ १
प्सा२आयु । धानिविश्वात् । अपा३४औहोवा । ऊ

२ १ र २ ३ ४ ५ २
र्मायिम् । सचमा । नःसमुद्राम् । ह्वायि । उद्भ्रवा

३ २ ३र ४र ५ १ २ १ २
यि । तुरा३४औहोवा । यन्धा । मा२महि । षो३४

२ ४
३ । वा३यिवा५क्ता६५६यि(३) ॥ ७ * ॥ [३]

२ २ ३ २ ३र
॥ उद्भ्रवायिवासिष्ठम् ॥ उद्भ्रवायि । प्रिशा३४औ

४र ५ १ २ १ २ ३ ४ ५ ३ २
होवा । जज्ञा । ना२ऽहर्य्य । तंमृजन्तायि । प्रभा

---

* ऊ० गा० १७प्र० १ख० ७सा० ।

३र ४र ५ १ २ १ २ ३ ४ ५ ३
३४औहोवा। तिवायि। प्रा३म्मरु। तोगणेना। क

२ ३र ४र ५ १र २ १र २ ३ ४ ५
वा३४औहोवा। गीर्भायिः। का३वियै। नाकविःसा

३र २ ३र ४र ५ १ २ १ २
न। सोमा३४औहोवा। पवायि। त्रा३मति। अ

२ ४ २ २ ३र ४र ५
३४३यि। ती३रा५यिभा६५६न्॥(१) ऋषा३४औहोवा।

१ २ १ २ ३ ४ ५ २ २ ३र ४र ५
मनाः। या३ऋषि। कृत्स्वर्षाः। सहा३४औहोवा।

१ २ १ २ ३ ४ ५ ३ २ ३र ४र
स्रनायि। था३ःपद। वीःकवीनाम्। तृता३४औहो

५ १ १ २ ३ ४ ५ ३र २
वा। यन्धा। मा३महि। षःसिषासान्। सोमा ३ ४

३र ४र ५ १ २ १ २ २ ४
औहोवा। विरा। जा३मनु। रा३४३। जा३ता५

२ २ ३र ४र ५ १ २
यिष्टू६५६प्॥(२) चमू३४औहोवा। षक्मायि। ना

१ २ ३ ४ ५ ३र २ ३र ४र ५ १
३ःप्रकु। नोविभृत्वाम्। गावा३४औहोवा। दुद्री।

२ १र २र ३ ४ ५ ३ २ ३र ४र ५ १र
प्सा३आयु। धानिबिभ्रात्। अपा३४औहोवा। ज

२ १ र २ ३ ४ ५ ३ २ ३
ग्मीयिम्। सचमा। नःसमुद्राम्। उक्षवायि। तु

२ ३र४र ५ १ २ १ २ २
रा३४औहोवा। यन्वा। मा३महि। षो३४३। वा
४
इयिवा५क्ताई५६यि(३) ॥ १८ * ॥ [४]

१ १ १ १
॥ उद्वद्भार्गवम् ॥ शिशूऽञ्जाज्ञा२३। नऽंहर्य्यंता
२ २ ३ १ २ १
२३म्। मृजन्तायि। शुऽम्भन्तायिवा२३यि। वह्निम्मरुतो
२ १र २ १ २र १
२३। गणेना। कविर्गीयिर्भी२३यिः। काविर्येना२३ः।
२ १ २र १ २ १ २
कविःसान्। सोमःपावा२३यि। त्रमतायियि२३। ति
१र २ १ २ १ ३ १
रेभा३नाउ ॥(१) ऋषिमाना२३। ओयऋषीकृ२३त्।
२ १ २ १ १ १ २ १र
स्ववर्षाः। सहस्रानी२३यि। थःपदावा२३यिः। कवी
२र १ २ १ २ १र
नाम्। तृतीयान्धा२३। ममहायिषा२३ः। सिषासा
२र र १ २ १ २ १ २
न्। सोमोवायिरा२३। जमनूरा२३। जतिष्ठा३१उ ॥(२)
२र १ २ १ २ १ २र
चमूषाच्छ्ना२३यि। नःशकूनो२३। विभृत्वा। गोवि
१ २ र १ २ १ २ र १
न्दूर्द्रा२३। प्सआयूधा२३। निबिभ्रात्। अपामूर्म्मी

* ऊ० गा० १७प्र० १ख० १८सा०।

२ १ २ १ २र १
२३यिम्। सचमाना२३ः। समुद्राम्। तुरीयान्धा२३।
ममहायिषो२३। विवक्ता३१उवा२३४५(३)॥ ४ *॥ [५]

२र र २
॥ वैश्वज्योतिराद्यम्॥ हाउहोवा३हायि। शिशुञ्ज

र १ ७ १११ १ १
ज्ञानांऌहर्य्यो३तांमृजन्ता२३४५यि। शुम्भन्तिविप्रम्मरु

१७र ११११ २ र र १ ७ ११११
३तोगणेना२३४५। कविगीर्भिःकाव्ये३नाकविःसा२३४५

२र १ ७र ११११ २
न्। सोमःपवित्रमती३यायितिरेभा२३४५न्॥(१) ऋषि

र १ ७ २ र १
मनायऋषी३कृत्स्वर्षा२३४५ः। सहस्रनीथःपदा३वायिः

७र ११११ २ र १ ७र ११११
कवीना२३४५म्। तृतीयन्धाममहो३षाःसिषासा२३४५

२र र र १ ७ ११११ २र र
न्। सोमोविराजमनू३राजतिष्टू२३४५प्॥(२) चमूषच्छ्ये

१ ७ ११११ २र र १ ७
नःशकुनोविभृत्वा२३४५। गोविन्दूर्द्रप्सआयू३धानिबि

११११ २ र र ऽर१ ७ ११११
भ्रा२३४५त्। अपामूर्म्मिंऌसचमा३नाःसमुद्राम्३४५म्।

---

* ऊ० गा० २३प्र० २अ० ४सा०।

२र र ३र १ ७ १११२ २र र २
तुरीयन्धाममम्होऽषोविवक्ता२३४५यि। हाउहोवा३हायि।
१११
वा३४५(३) ॥ ७ ॥ * [६] १

एतेसोमा इति नवर्चं द्वितीयं सूक्तं,

तत्र प्रथमा।

३१र २र३ २३१र २र३ १ २
एतेसोमाअभिप्रियमिन्द्रस्यकाममक्षरन्।
१२ ३ २क २र
वर्द्धन्तोअस्यवीर्यम् ॥ १ † ॥

"एते" अभिषुता इमे सोमाः "अस्य" इन्द्रस्य "वीर्य्यं" शक्तिं "वर्द्धन्तः" वर्द्धयन्तः "इन्द्रस्य" "कामं" काम्यं "प्रियं" प्रीतिकरं "समभ्यक्षरन्" अभ्यवर्षन् अभिपवन्ते ॥ १ ॥

अथ द्वितीया।

३ १२ ३१ ३१२ ३२३ १ २
पुनानासश्चमूषदोगच्छन्तोवायुमश्विना।
१२ ३१२
तेनोधत्तसुवीर्यम् ॥ २ ‡ ॥

हे सोमाः! "पुनानासः" पुनाना अभिषूयमाणाः "चमूषदः" ¶ चमसेषु सीदन्तः गच्छन्तः "वायुम्" "अश्विना" अश्विनौ च

---

* ऊ० गा० २३प्र० २अ० ७सा०।

† ऋ० वे० ६, ७, ३०, १। ‡ ऋ० वे० ६, ७, ३०, २।

¶ 'चमूषदः—भक्षणीयेषु सीदन्ति अथवा अधिषवणफलकचर्मणि उपरि सीदन्ति चमूषदः'—इति वि०।

"गच्छन्तः" प्राप्नुवन्तः ते यूयं "नः" अस्मभ्यं "सुवीर्य्यं" शोभन-वीर्य्यं "धत्त" प्रयच्छत ॥

"धत्त"-"धान्तु"—इति पाठौ ॥ २ ॥

अथ तृतीया ।

१ २   ३ १ २   ३ १र   २र

इन्द्रस्यसोमराधसेपुनानोहार्दिचोदय ।

३ २ ३ १ २ ३ १ २

देवानांयोनिमासदम् ॥ ३* ॥

हे सोम ! "पुनानः" पूयमानस्त्वं "राधसे इन्द्रस्य" इन्द्रस्य संराधनाय "हार्दि"—इति हृदय-सम्बन्धि स्थानं† "चोदय" प्रेरय । अहमपि "देवानाम्" इन्द्रादीनां "योनिं" स्वर्गाख्यं स्थानम् "आसदं" प्राप्तवान् [यद्वा, देवानां यजन-साधनं यज्ञाख्यं स्थानं प्राप्तवानस्मि ॥

"देवानाम्"-"ऋतस्य"—इति पाठौ ॥ ३ ॥

अथ चतुर्थी ।

३ १ २ ३ २ ३ १ २ ३ १ २ ३२ ३ १ २

मृजन्तित्वादशक्षिपोहिन्वन्तिसप्तधीतयः ।

२ ३ १ २

अनुविप्राअमादिषुः ॥ ४ ‡ ॥

---

* ऋ० वे० ६, ७, ३०, ३ ।

† 'हार्दि—हृदये'—इति वि० ।

‡ ऋ० वे० ६, ७, ३०, ४ ।

हे सोम! "त्वा" त्वां "दश" दशसङ्ख्याकाः ["क्षिपः अङ्गुलिनामैतत् (२, ५, २,)] अङ्गुलयः "मृजन्ति" शोधयन्ति। ततः "सप्त" सप्तसङ्ख्याकाः* "धीतयः" होत्रकाश्च त्वां "हिन्वन्ति" स्व-स्व-व्यापारैः प्रीणयन्ति। तथा "विप्राः" मेधाविनः स्तोतारश्च त्वाम् "अनु अमादिषुः" अनुमादयन्ति ॥४॥

अथ पञ्चमी।

२ १ १ २ १ १ ३ १ २ ३ १ २र २क २र
देवेभ्यस्त्वामदायकꣳसृजानमतिमेष्यः।
१र २र
सङ्गोभिर्वासयामसि ॥ ५ † ॥

हे सोम! "कं" सुखभूतं "त्वा" त्वां "देवेभ्यः" देवानां "मदाय" मदार्थं "गोभिः" गोविकारैः पयोभिः "संवासयामः" संस्थापयामः। कीदृशम्? "मेष्यः" अवेर्लोमानि दशापवित्र रूपेण "अति सृजानम्" अत्यन्तं सृजन्तं दशापवित्ररूपेषु अवेर्लोमसु वर्त्तमानमित्यर्थः ॥ ५ ॥

अथ षष्ठी।

३ १ ३ २ ३ १र २र ३ १र २र
पुनानःकलशेष्वावस्त्राण्यरुषोहरिः।
२ ३ १ २
परिगव्यान्यव्यत ॥ ६ ‡ ॥

---

* 'सप्तधीतयः—बुद्धियुक्ताः सप्तर्त्विजः; धीतयः स्थापनकराः'—इति वि०।

† ऋ० वे० ९, ७, ३०, ५।

‡ ऋ० वे० ९, ७, ३०, ६।

"पुनानः" पूयमानः "कलशेषु" द्रोणकलशेषु* आसिच्यमानः "अरुषः" आरोचमानः "हरिः" हरितवर्णः सोमः "गव्यानि" गो-सम्बन्धीनि पयःप्रभृतीनि "वस्त्राणि" वासांसि "परि अव्यत" पर्य्याच्छादयति† ॥ ६ ॥

अथ सप्तमी ।

२ ३ ३ १ २ ३ २उ ३ २ ३ १ २
मघोनआपवस्वनोजहिविश्वाअपद्विषः ।
२ ३ १ २ ३ १ २
इन्दोसखायमाविश ॥ ७ ‡ ॥

हे "इन्दो" सोम ! "मघोनः" धनवतः "नः" अस्मान् "आ" आभिमुख्येन "पवस्व" क्षर "विश्वा" विश्वान् "द्विषः" द्वेष्टॄन् "अप जहि" मारय च "सखायं" मित्रभूतमिन्द्रम् "आविश" प्राप्नुहि ॥ ७ ॥

अथाष्टमी ।

३ १ २ ३ १र २र ३ १ २
नूचत्वसन्त्वावयमिन्द्रपीतꣳस्वर्विदम् ।
३ १ २ ३१र २
भक्षीमहिप्रजामिषम् ॥ ८ ¶ ॥

---

* 'कलशेषु कलशसम्बन्धिषु ग्रहचमसादिषु'—इति वि० ।

† 'अव्यत—गमय'—इति वि० ।

‡ ऋ० वे० ६, ७, ३१, १ ।

¶ ऋ० वे० ६, ७, ३१, २ ।

हे सोम! "नृचक्षसं" नृणां द्रष्टारं "स्वर्विदं" सर्वज्ञम्* "इन्द्रपीतं" त्वां सेवमाना वयं "प्रजां" पुत्रादिकाम् "इषम्" अन्नञ्च "भक्षीमहि" भजेम ॥ ८ ॥

अथ नवमी।

२ २ ३ १र २र ३ १ २ ३ १र २र
वृष्टिन्दिवःपरिस्रवद्युम्नम्पृथिव्याअधि।
१ २ ३ १ २
सह्नोनःसोमपृत्सुधाः॥ ९ † ॥ २

हे "सोम!" त्वं "दिवः" द्युलोकाद् "वृष्टिं" वर्षं "परिस्रव" परितो वर्ष, "पृथिव्या अधि" [ अधीति सप्तम्यर्थानुवादी] "द्युम्नम्" अन्नञ्च उत्पादयेति शेषः। "नः" अस्माकं‡ "सहः" बलं "पृत्सु" सङ्ग्रामेषु "धाः" धेहि ॥ ९ ॥ २

इति सामवेदार्थ प्रकाशे उत्तराग्रन्थस्य नवमस्याध्यायस्य
प्रथमः खण्डः ॥ १ ॥

---

* 'स्वर्विदं—स्वर्गस्य वेत्तारम्'—इति वि०।

† ऋ० वे० ६, ७, ३१, ३।

‡ 'नः—अस्मभ्यम्'—इति वि०।

अथ द्वितीये खण्डे—

सोमः पुनान इति नवर्चं सूक्तम्,

तत्र प्रथमा ।

१ २   ३ १ २   ३ १ २   ३ १ २
सोमःपुनानोअर्षतिसहस्रधारोअत्यविः ।
३ १र   २र   ३ २
वायोरिन्द्रस्यनिष्कृतम् ॥ १ * ॥

अयं "पुनानः" पावकः "सोमः" अर्षति" गच्छति । कीदृशोऽयम् ? "सहस्रधारः" अपरिमितधारः "अत्यविः" अवि-शब्देन तल्लोमान्युच्यन्ते ; अवेर्लोमभिर्निष्पादितं दशापवित्र मित्यर्थः, तदतिक्रम्य गच्छतीत्यत्यविः । किमर्थम् ? "वायोः" "इन्द्रस्य" च पानायेति शेषः । किम्प्रति ? "निष्कृतम्" [ निरित्येषः समित्येतस्मिन्नर्थे ] संस्कृतं पात्रं प्रति ॥ १ ॥

अथ द्वितीया ।

१ २   ३ १ २ ३ १र २र
पवमानमवस्यवोविप्रमभिप्रगायत ।
३   २ ३ १ २
सुष्वाणन्देववीतये ॥ २ † ॥

हे "अवस्यवः" रक्षण-कामाः ! उद्गात्रादयो यूयं "पवमानं" शोधकं "विप्रं" विशेषेण देवानां प्रीणयितारं विप्रवद्बुद्धं वा

* ऋ० वे० ९, ८, १, १ ।

† ऋ० वे० ९, ८, १, २ ।

[अथवा विप्रइति मेधावि नामसु (निघ०३,१५,१) मेधाविनम्] "देववीतये" देवपानाय* "सुष्वाणम्" अभिषूयमाणं सोमम् "अभि" आभिमुख्येन "प्रगायत" प्रकर्षेण स्तुत ॥ २॥

अथ तृतीया।

१ २ ३ १ २ ३ १ २र ३ १ २
पवन्तेवाजसातयेसोमाःसहस्रपाजसः ।

३ २ ३ १ २
गृणानादेववीतये ॥ ३ † ॥

"पवन्ते" क्षरन्ति "सोमाः"। किमर्थम्? "वाजसातये" अन्नस्य लाभाय। कीदृशाः? "सहस्रपाजसः" बहुबलाः नृणां बलप्रदा इत्यर्थः‡ "गृणानाः" [कर्मणि कर्त्तृप्रत्ययः (३,१,८५)] स्तूयमानाः। पुनः किमर्थम्? "देववीतये" [देवानां वीतिर्गतिः प्राप्तिलक्षणं वा यस्मिन् स देववीतिः] यज्ञः, तदर्थम् [यज्ञसिद्धिः साक्षात् प्रयोजनं तद्द्वारा वाज-लाभइति ॥ ३ ॥

अथ चतुर्थी।

३ २ ३ १ २ ३ १ २ ३ १२ २र
उतनोवाजसातयेपवस्वबृहतीरिषः।

३ १ २ ३ १ २
द्युमदिन्दोसुवीर्यम् ॥ ४ ¶ ॥

---

* 'देववीतये—देवानां भक्षणाय'—इति वि०।

† ऋ० वे० ६, ८, १, ३।

‡ 'सहस्रपाजसः—सहस्र-पान-समर्थाः'—इति वि०।

¶ ऋ० वे० ६, ८, २, १।

हे "इन्दो" "द्युमत्" दीप्तिमत् "सुवीर्य्यं" शोभन-वीर्य्यं सामर्थ्यञ्च "पवस्व" क्षर, शोभन-सामर्थ्योपेता धाराः पवस्वेत्यर्थः। "उत्" अथवा "नः" अस्माकं"* "वाजसातये" सङ्ग्रामाय† "बृहतीः" "इषः" द्युमत् सुवीर्यं सम्पादयितुं पवस्वेति योज्यम् ॥ ४ ॥

अथ पञ्चमी।

१ २ ३ २उ ३ २ ३ १ २ ३ १ २
अत्याहियानान्हेतृभिरसृग्रं वाजसातये।
२उ ३ १ २ ३ १ २
विवारमव्यमाशवः ॥ ५ ‡ ॥

"वाजसातये" सङ्ग्रामाय "हियानाः" प्रेर्य्यमाणाः आशवः शीघ्रं धावन्ति तद्वत् "हेतृभिः" प्रेरकैः प्रेर्यमाणाः "आशवः" शीघ्रगामिनः सोमाः "वाजाय" अन्नलाभाय "अव्यं" "वारं" वालं दशापवित्रं "व्यत्यसृग्रम्" व्यतिसृजन्ते¶ ॥ ५ ॥

---

* 'नः—अस्मभ्यम्'—इति वि०।

† 'वाजसातये अन्नदानार्थम्'—इति वि०।

‡ ऋ० वे० ६, ८, २, २।

¶ "व्यत्यसृग्रम्"—इत्यत्र ऋगादिपादाद् "अति"—इत्युपसर्गः, एकत्वतीयपादाद् "वि"—इत्युपसर्गश्च सङ्गृहीतः, "व्यत्या"—इति श्रुतावापदस्यानर्थकमपि स्वीकृतमाचार्य्येण। विवरणकृता त्वहिनाम दानवइत्यादिना व्याख्यातम्। परन्तूभयविधमेव व्याख्यानं पदग्रन्थविरुद्धत्वादुपेक्षणीयम्, तत्र हि—"अत्याः, हियानाः"—इति पाठ-दर्शनात्।

अथ षष्ठी।

१ २ ३ १ २ ३ १र २र ३ २ ३ १ २

तेनःसहस्रिणꣳरयिम्पवन्तामासुवीर्यम्।

३ २ ३ २ ३ १ ०

स्वानादेवासइन्दवः॥ ६ *॥

"ते" "इन्दवः" सोमाः "नः" अस्माकं "सहस्रिणं" सहस्र-सङ्ख्या-युक्तं "रयिं" धनं "सुवीर्यं" च "आ पवन्ताम्"†। कीदृशास्ते? "स्वानाः" सुवानाः स्तूयमाना "देवासः" द्योतनादि-गुणकाः॥

"स्वानाः"-"सुवानाः"—इति पाठौ॥ ६॥

अथ सप्तमी।

२ १ २ ३ १ २ ३ २ ३ २उ ३ १ २

वाश्राअर्षन्तीन्दवोभिवत्सन्नमातरः।

३ १र १र

दधन्विरेगभस्त्योः॥ ७ ‡॥

"वाश्राः" शब्दयन्तः¶ "इन्दवः" सोमाः "अभ्यर्षन्ति" पात्रंप्रति वाश्राः शब्दकारिण्यो "मातरः" मातृभूता गावः

---

* ऋ० वे० ६, ८, २, ३।

† 'आ—आनुपूर्व्येण'—इति वि०।

‡ ऋ० वे० ६, ८, २, ४।

¶ 'वाश्राः—वासनशीलाः'—इति वि०।

"वत्सं न" वत्सं यथा प्रत्यागच्छन्ति तद्वत् तएव "गभस्त्योः" बाह्वोः "दधन्विरे" ध्रियन्ते च॥

"मातरः"-"धेनवः"—इति पाठौ॥ ७॥

अथाष्टमी।

२ ३ १ २ ३ १र २र ३ १ २
जुष्टइन्द्रायमत्सरःपवमानःकनिक्रदत्।

२ ३ २ ३ १ २
विश्वाअपद्विषोजहि॥ ८ *॥

"इन्द्राय" "जुष्टः" पर्याप्तः सोमो भवतीति शेषः "मत्सरः" सोमः [ "मन्दतेस्तृप्ति-कर्म्मणः"—इति निरुक्तम् ] "पवमानः" पूयमानः तादृशः सोमः "कनिक्रदत्" "विश्वाः द्विषः" सर्व्वान-स्माकं द्वेष्टृन् "अप जहि"॥

"पवमानः"-"पवमाना"—इति पाठौ॥ ८॥

अथ नवमी।

३ २ ३ १ २ ३ १ २ ३ १ २
अपघ्नन्तोअराव्णःपवमानाःस्वर्दृशः।

१ २ ३ १ २
योनावृतस्यसीदत॥ ९ †॥ ३

---

* ऋ० वे० ६, ८, २, १।

† ऋ० वे० ६, ८, १, २।

हे "पवमानाः!" "अराव्णः" अदानान् यजमानान् "अप घ्नन्तः" हिंसन्तः "स्वर्दृशः" सर्वस्य द्रष्टारश्च* यूयम् "ऋतस्य योनौ" यज्ञस्य† स्थाने "सीदत"। अथ सोम-पानार्थमुक्तलक्षणा देवा ऋतस्य योनौ सीदतेति योज्यम् ॥ ९॥ ३

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य नवमस्याध्यायस्य द्वितीयः खण्डः॥ २॥

---

अथ तृतीय-खण्डे—

सोमा असृग्रमिति नवर्चं विद्यमानमेकं सूक्तम्,

तत्र प्रथमा।

१ २ २ १ २ ३ २ ३ २ ३ १ २
सोमा असृग्रमिन्दवः सुता ऋतस्य धारया।
१ २ ३ १ २
इन्द्राय मधुमत्तमाः ॥ १ ‡ ॥

"ऋतस्य" यज्ञार्थं "सुताः" अभिषुताः "मधुमत्तमाः" अतिशयेन माधुर्योपेताः "इन्दवः" सोमाः "इन्द्राय" इन्द्रार्थं "धारया" "असृग्रम्" सृज्यन्ते ॥

"धारया"-"सादने"—इति पाठौ ॥ १ ॥

---

* 'स्वर्दृशः—स्वर्गस्य लोकस्य दर्शितारः'—इति वि०।

† 'ऋतस्य—सत्यस्य यज्ञस्यान्नस्य वा'—इति वि०।

‡ ऋ० वे० ६, ७, ३८, १।

अथ द्वितीया।

३ १र २र ३१ २ ३२उ ३ १ २
अभिविप्राअनूषतगावोवत्सन्नधेनवः।
१ २ १ १ ३ १ २
इन्द्रꣳसोमस्यपीतये ॥ २ * ॥

"विप्राः" मेधाविनः† "सोमस्य" "पीतये" पानाय "इन्द्रम्" "अभि अनूषत" अभिष्टुवन्ति। तत्र दृष्टान्तः— "धेनवः" प्रीणयित्र्यो गावः "वत्सं न" वत्सं यथा पयः-पानाय अभिमब्दयन्ति तद्वत् ॥

"धेनवः"-"मातरः"—इति पाठौ ॥ २ ॥

अथ तृतीया।

३ १ १ ३ १ २ ३ १ २ ३ १ १ ३ २
मदच्युत्क्षेतिसादनेसिन्धोरूर्मावि‍पश्चित्।
१ २ ३ १र २र ३ २
सोमोगौरीअधिश्रितः ॥ ३ ‡ ॥

"मदच्युत्" मदकरस्य रसस्य च्यावयिता सोमः "सदने" यज्ञस्य स्थाने "क्षेति" निवसति। एतदेव विवृणोति—"सिन्धोः" नद्याः "ऊर्मा" ऊर्मौ तरङ्गे "विपश्चित्" विद्वान् सोमः "गौरी

* 'विप्राः—ऋत्विजः'—इति वि०।

† ऋ० वे० ६, ७, ३८, २।

‡ ऋ० वे० ६, ७, ३८, ४।

अधि"* गौर्यामधि [ अधीति सप्तम्यर्थानुवादः, माध्यमिकायां वाचि गौरी गान्धर्वीति वाङ्नामैतत् ( निघ॰ १,११,५-६ ) ] "श्रित:" निवसति ॥ ३ ॥

अथ चतुर्थी ।

३ १र २र २ २ ३ १ ३
दिवोनाभाविचक्षणोव्यावारे†महीयते ।
२ ३ २ ३ १ २ ३ २
सोमोयःसुक्रतुःकविः ॥ ४ ‡ ॥

"यः" "सुक्रतुः" सुप्रज्ञः "कविः" क्रान्त-कर्मा "विचक्षणः" विद्रष्टा स "सोमः" "दिवः" अन्तरिक्षस्य¶ "नाभा" नाभौ नाभिभूते "अव्याः" अवेः "वारे" वाले "महीयते" पूज्यते ॥४॥

अथ पञ्चमी ।

१र २र ३ २ ३ २ ३ २ ३ २ ३ १ २
यःसोमःकलशेष्वा§अन्तःपवित्रआहितः ।
२उ ३ १ २
तमिन्दुःपरिषस्वजे ॥ ५ ‖ ॥

---

* "इद्नौ च सप्तम्यर्थे ( १, १, १९ )"—इति प्रगृह्यभावः ।

† "व्योवारे"—इति ऋ॰-पाठः ।

‡ ऋ० वे० ६, ७, २८, ३ ।

¶ 'दिवः—द्युलोकस्य'—इति वि० ।

§ "कलशेष्वां"—इति ऋ०.पाठः ।

‖ ऋ॰ वे० ६, ७, २८, ५ ।

"यः" सोमः "कलशेषु" कुम्भेषु आस्ते, यश्च "पवित्रे" पवित्रस्य "अन्तः" मध्ये "आ हितः" निहितः, "तं" त्वामंशभूतं सोमम् "इन्दुः" तदभिमानी सो देवः "परिषस्वजे" प्रविशति ॥ ५ ॥

अथ षष्ठी।

१उ २ १ २ ३१र २र३ १ २
प्रवाचमिन्दुरिष्यतिसमुद्रस्याधिविष्टपि।
१ २ १ २ ३ १ २
जिन्वन्कोशम्मधुश्चुतम् ॥ ६ * ॥

"इन्दुः" सामः [ उन्दी क्लेदने (रु० प०)—इत्यस्य रूपम् क्लेदनवांश्च "मधुश्चुतं" मधुनश्चावकं द्रोण-कलशं "जिन्वन्" प्रीणयन् पूरयन्नित्यर्थः। समुद्रस्यान्तरिक्षस्य "अधिविष्टपि" विष्टब्धे स्थाने "वाचं" "प्रेष्यति" प्रेरयति; पवित्रे पूयमानः शब्दं करोतीत्यर्थः ॥ ६ ॥

अथ सप्तमी।

१ २ ३ १ ३ १ १ ३ २ ३ १ २ ३ १ २
नित्यस्तोत्रोवनस्पतिर्धीनामन्तःसबर्दुघाम्।
३ १र २र ३ २
हिन्वानोमानुषायुजा ॥ ७ † ॥

"नित्यस्तोत्रः" सन्ततस्तोत्रः "वनस्पतिः" वनानां स्वामी, सोमः "मानुषा" मानुषाणि "युजा" युग्मानि‡ अहीनैकाहा-

* ऋ० वे० ६, ७, १८, ६।

† ऋ० वे० ६, ७, १९, १।

‡ "युजा—योगेन"—इति वि०।

त्मकानि* "हिन्वानः" प्रीणयन् "सबर्दुघाम्" अमृतसदृशाति-प्रियवचनानि दोग्ध्रीम्† "अन्तः" स्तोतृणां मध्ये स्थितां "धेनां" स्तुतिरूपां वाचं‡ गच्छातिति शेषः ॥

'धेनामन्तसबर्दुघाम्'-"धीनामन्तस्सबर्दुघस्सः"—इति पाठौ ॥ ७ ॥

अथाष्टमी ।

१ २ ३ २ ३ १ २
आपवमानधारयरयिꣳसहस्रवर्चसम् ।

२ १ १ २ १ २
अस्मेइन्दोस्वाभुवम् ॥ ८ ¶ ॥

हे "पवमान" पूयमान ! पुनान ! वा "इन्दो" सोम ! त्वं "सहस्रवर्चसं" बहुदीप्तिं "स्वाभुवम्" शोभन-भवनं "रयिं" धनम् "अस्मे" अस्मासु "धारय" प्रक्षिपेत्यर्थः ॥ ८ ॥

अथ नवमी ।

३ १ ३ २ ३ २ ३ २उ ३ १र २र १ १
अभिप्रियादिवःकविर्विप्रःसधारयासुतः ।

१ २ ३ १ २
सोमोहिन्वेपरावति ॥ ९ § ॥ ४

---

* दिनैकसम्पाद्यमेकाहम्, द्वादशदिनातिरिक्तसम्पाद्यं सत्रम्, अहीनमन्यत् यागकर्म ।

† 'सबर्दुघां—सुखदोह्यां'—इति वि० ।

‡ 'धेनां—धेनूनाम्'—इति वि० । "धेना"—इति निघण्टौ वाङ्नामसु चत्वारिंशत्तमं पदम् (१, ११) ।

¶ ऋ० व० ६, ७, २९, १ ।

§ ऋ० वे० ६, ७, २९, २ ।

"कविः" क्रान्तकर्म्मा, "सुतः" अभिषुतः, सोमः "परावति" विप्रकृष्टे देशे स्थितः सन् "विप्रः" मेधावी "सधारया" स्वस्य धारया "दिवः" द्युलोकस्य "प्रिया" प्रियाणि स्थानानि "अभि" लक्ष्य "हिन्वे" प्रेरयति॥

"दिवःकविः"-"दिवस्पतिः"—इति पाठौ, "हिन्वेपरावति"-"हिन्वेपरानोअर्षति"—इति च,"सुतः"-"कविः"—इति च ॥ ८ ॥ ९

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य नवमस्याध्यायस्य

तृतीयः खण्डः॥ ३॥

---

अथ उत्तेशुष्मासइति चतुर्थे खण्डे—

विद्यमानं पञ्चर्चं सूक्तं,

तत्र प्रथमा।

२ ३ १ २    ३ १ २ ३ १ २ ३ २
उत्तेशुष्मासईरतेसिन्धोरूर्मेरिवस्वनः।
३ १ २    ३ २
वाणस्यचोदयापविम्॥ १ *॥

हे सोम! "ते" तव "शुष्मासः" शुष्मा वेगाः "उत् ईरते" उद्गच्छन्ति। तत्र दृष्टान्तः—"सिन्धोः" समुद्रस्य "ऊर्मेरिव"

---

* ऋ० वे० ७, १, ७, १।

यथा तरङ्गात् "स्वनः" ध्वनिः उद्गच्छति तद्वत्*। स त्वं "वाणस्य" विस्तृष्टस्य नालस्य शततन्त्रीकस्य वीणा-विशेषस्य† "पविं" [शब्द-नामैतत् (निघ० १, ११)] शब्दं "चोदय" प्रेरय, वेगेन स्यन्दमानस्त्वं विसृष्ट-वाण-शब्द-सदृशं शब्दं कुर्व्वित्यर्थः॥ १॥

अथ द्वितीया।

२ १२ ३ १ २ ३ १र २र ३ १ २
प्रसवेतउदीरतेतिस्रोवाचोमखस्युवः।
२उ ३ २ ३ १ २
यदव्यएषिसानवि॥ २ ‡॥

हे सोम! "ते" तव "प्रसवे" सति "मखस्युवः" यज्ञ-मिच्छतो यजमानस्य "तिस्रोवाचः" ऋग्यजुःसामात्मकानि त्रीणि वाक्यानि "उदीरते" उद्गच्छन्ति। कदेत्यत आह—"यद्" यदा "सानवि" उच्छ्रिते "अव्ये" अविमये पवित्रे पवित्रम् "एषि" गच्छसि॥ २॥

अथ तृतीया।

२ ३ १ ३ १ २ ३ १र २र ३ १ २
अव्यावारैःपरिप्रियꣳहरिꣳहिन्वन्त्यद्रिभिः।
१ २ ३ १ २
पवमानम्मधुश्चुतम्॥ ३ ¶॥

---

* 'सिन्धोरूर्म्मैरिव—अपामिव सङ्घातः, यादृक् तेषां स्वनः'—इति वि०।

† 'वाणस्य—वीणाविशेषस्य'—इति वि०।

‡ ऋ० वे० ७, १, ७, २।

¶ ऋ० वे० ७, १, ७, ३।

"प्रियं" देवानां प्रीतिकरं "हरिं" हरितवर्णं "अद्रिभिः" ग्रावभिः अभिषुतं "मधुस्रुतं" मधुनो रसस्य च्यावयितारं "पवमानं" सोमम् "अव्याः" अवेः "वारैः" वालैः "परि हिन्वन्ति" ऋत्विजः परिप्रेरयन्ति ॥ ३ ॥

अथ चतुर्थी ।

१ २    ३ १२ २ १ ३

आपवस्वमदिन्तमपवित्रन्धारयाकवे ।

३ २ ३ १ २ ३ १ २

अर्कस्ययोनिमासदम् ॥ ४ * ॥

हे "मदिन्तम" मादयितृतम ! "कवे" क्रान्तकर्म्मन् ! सोम ! "अर्कस्य" अर्चनीयस्य इन्द्रस्य† "योनिम्" उदरभूतं स्थानम् "आसदं" प्राप्तुं‡ "पवित्रम्" अतीत्य "धारया" सम्पातेन "आपवस्व" आभिमुख्येन चर ॥ ४ ॥

अथ पञ्चमी ।

१ २    ३ १ २   ३ १ ३ १ २

सपवस्वमदिन्तमगोभिरञ्जानोअक्तुभिः ।

१ २   ३ १ २

एन्द्रस्यजठरंविश ॥ ५ ¶ ॥ ५

---

* ऋ० वे० ६, ८, १५, ६ ।

† 'अर्कोद्रोणकलशः अथवा अर्कआदित्यः अथवा आदित्यरश्मयोऽर्काः अथवा अर्का मन्त्रास्तेषां योनिं स्थानम्'—इति वि० ।

‡ 'आसदम्—आसीदम्'—इति वि० ।

¶ ऋ० वे० ७, १, ७, ५ ।

हे "मदिन्तम" मादयितृतम! सोम! "अक्तुभिः" अञ्जन-साधन-भूतैः "गोभिः" गोविकारैः पयोभिः "अञ्जानः" अज्यमानः संस्तूयमानः स त्वं "पवस्व" क्षरत। "अनन्तरम् "इन्द्रस्य" "जठरम्" उदरम् "आविश" प्रविश॥ "एन्द्रस्यजठरंविश"—"इन्द्रइन्द्रायपीतये"—इति पाठौ॥ ५॥ ५

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य नवमस्याध्यायस्य
चतुर्थः खण्डः॥ ४॥

---

अथ पञ्चमे-खण्डे—

अयावीतीति त्रृचात्मकम् प्रथमं सूक्तम्,

तत्र प्रथमा।

३ १ ३ १र २र ३ १ २ ३ २ ३ २
अयावीतीपरिस्रवयस्तइन्दोमदेष्वा।
३ १ २ ३ १र २
अवाहन्नवतीर्नव॥ १ *॥

हे "इन्दो" सोम! "अया" अनेन रसेन "वीती" वीत्यै इन्द्रस्य भक्षणाय "परिस्रव" परिक्षर†। कीदृशेन रसेनेत्यत आह—"ते" तव "यः" रसः "मदेषु" सङ्ग्रामेषु "नवतीर्नव" नवनवति-सङ्ख्याकाः शत्रुपुरीः "अवाहन्" जघान। इमं सोमरसं पीत्वा मत्तः सन्निन्द्र उक्तसङ्ख्याकाः शत्रुपुरीः जघानेति कृत्वा रसो जघानेत्युपचारः॥ १॥

---

* ऋ० आ० ६, १, ९, ९ (२भा० ५२४०) = ऋ० वे० ७, १, १८, १।

† 'अया—अनया, वीत्या मार्गेण परिस्रव'—इति वि०।

अथ द्वितीया।

१ १ २ २ ३ १ २ ३ १ २ ३ १ २
पुरः सद्य इत्थाधिये दिवोदासाय शम्बरम्।
२ ३ २ ३ २ ३ १ २
अध त्यन्तुर्वशं यदुम्॥ २ *॥

"सद्यः" एकस्मिन्नेवाहनि† "पुरः" शत्रूणां पुराणि सोमरसः अवाहन्। "इत्था धिये" सत्य-कर्मणे‡ "दिवोदासाय" राज्ञे "शम्बरं" शत्रु-पुराणां स्वामिनम् "अध" अथ अनन्तरं "त्यं" तं "तुर्वशं" तुर्वश-नामानं राजानं दिवोदास-शत्रुं "यदुम्" यदु-नामकञ्च राजानमवाहन्। [अत्रापि सोमरसं पीत्वा मत्तः सन्निन्द्रः सर्वमेतदकार्षीदिति सोमरसे कर्त्तृत्वमुपचर्यते॥ २॥

अथ तृतीया।

१ २ ३ १ २ ३ १र २र ३ १ २
परि नो अश्वमश्वविद्गोमदिन्दो हिरण्यवत्।
१ २ ३ २ ३ १ २
क्षरा सहस्रिणीरिषः॥ ३ ¶॥ ६

हे सोम! "अश्ववित्" अश्वस्य लम्भकः त्वं "नः" अस्माकम् "अश्वं" "गोमत्" गोयुक्तं "हिरण्यवत्" हिरण्योपेतं पश्वादि-

* ऋ० वे० ७, १, १८, २।

† 'सद्यः—क्षणादेव'—इति वि०।

‡ 'इत्था—इदाजीम्'—इति वि०।

¶ ऋ० वे० ७, १, १८, ३।

धनञ्च "परि चर"। अपिच "सहस्रिणीः" बहूनि* "इषः" अन्नानि चर॥

"परिनः"-"परिणः"—इति पाठौ॥ ३॥ ६

अथ तृचात्मके द्वितीय-सूक्ते—

तत्र प्रथमा।

२ १ २ ३ २उ ३ २ ३ १२
अपघ्नन्पवतेमृधोपसोमोअराव्णः।
२ ३ १ २ ३ २
गच्छन्निन्द्रस्यनिःकृतम् †॥ १ ‡॥

"सोमः" "मृधः" हिंसकान् शत्रून् "अपघ्नन्" मारयन् "अराव्णः" सक्तौ सत्यां धनानामदातृंश्च "अप" घ्नन्¶ "इन्द्रस्य" "निष्कृतं" स्थानं "गच्छन्" प्राप्नुवन् "पवते" धारया क्षरति॥ १॥

अथ द्वितीया।

३१ २ ३ १र २र३१२ ३ १र २र
महोनोरायआभरपवमानजहीमृधः।
१ २ ३ २ ३ १ २
रास्वेन्दोवीरवद्यशः॥ २ §॥

---

* 'सहस्रिणीः—सहस्रसम्मिता इषः अन्नानि'—इति वि०।

† "निष्कृतम्"—इति ख० पु० मु० पु० पाठः।

‡ छ० आ० ६, १, २, १४ (२भा० १९४०)=ऋ० वे० ७, १, २२५।

¶ अपेत्युपसर्गद्वयदर्शनात् घ्नन्नित्यस्यावृत्तिः।

§ ऋ० वे० ७, १, २३, १।

हे "पवमान!" "इन्दो" सोम! "नः" अस्माकं "महः" महान्ति "रायः" धनानि "आ भर" आहर "मृधः" हिंसकान् शत्रूंश्च "जहि"* मारय "वीरवत्" पुत्राद्युपेतं "यशः" कीर्त्तिञ्च "रास्व" अस्मभ्यं देहि ॥ २ ॥

अथ तृतीया ।

१ २ ३ २ ३ १उ ३ २ ३ १ २ ३ १ २
नत्वाशतञ्चनह्रुतोराधोदित्सन्तमामिनन् ।
१ २ ३ १ २ ३ १ २
यत्पुनानोमखस्यसे ॥ ३ † ॥ ७

हे सोम! "राधः" धनं‡ "दित्सन्तम्" आदातुमिच्छन्तं "त्वा" त्वां "शतञ्चन" बहवोऽपि "ह्रुतः" हिंसकाः शत्रवः¶ "न आमिनन्" न हिंसन्ति। कदा? इत्यत्राह—"यद्" यदा "पुनानः" पूयमानः त्वं "मखस्यसे" धनं धातुमिच्छसि§ ॥३॥७

अथ तृचात्मके तृतीय-सूक्ते—

प्रथमा ।

३ १ २ ३ १ २३ २ ३ २ ३ १ २
अयापवस्वधारयाययासूर्यमरोचयः ।
२ १र २र ३ २
हिन्वानोमानुषीरपः ॥ १ ‖ ॥

---

* संहितायां "जही"—इति दीर्घान्तं श्रूयते, द्व्यच इति (६,३,१३५) तत्र दीर्घः।

† ऋ० वे० ७, १, २२, २।

‡ 'राधः—धनस्य'—इति वि०।

¶ 'ह्रुतः—हरणशीलाः'—इति वि०।

§ 'मखस्यसे—यज्ञसमये यज्ञं त्वं यदा करोषि'—इति वि०।

‖ छ० आ० ६, १, १, ७ (१भा० ५०७पृ०)=ऋ० वे० ७, १, २१, २।

हे सोम ! "मानुषीः" मनुष्याणां हितानि "अपः" उदकानि "हिन्वानः" प्रेरयन् त्वं "यया" "धारया" "सूर्य्यम्" "अरोचयः" प्रकाशयसि तया "अया" अनया धारया "पवस्व" क्षर ॥ १ ॥

अथ द्वितीया।

१ २ ३ २३१२३ १ २ ३१र २र
अयुक्तसूरएतशम्पवमानोमनावधि।

३ १ २ ३ १ १
अन्तरिक्षेणयातवे ॥ २ * ॥

"पवमानः" पूयमानः सोमः "मनावधि" मनुर्मनुष्यस्तस्मिन् मनुष्यइत्यर्थः। "अन्तरिक्षेण" "यातवे" गन्तुं "सूरः" प्रेरकस्यादित्यस्य "एतशम्" [अश्वनामैतत् ( निघ० १, १४, १० )] अश्वं "अयुक्त" युङ्क्ते ॥ २ ॥

अथ तृतीया।

३ १उ ३ २ ३ २३१ २ ३ १ १
उतत्याहरितोरथेसूरोअयुक्तयातवे।

२३ २ ३ १ २ ३ २
इन्दुरिन्द्रइतिब्रुवन् † ॥ ३ ‡ ॥ ८

"उत" अपिच "इन्दुः" सोमः "इन्द्र इति ब्रुवन्" "त्याः"

---

* ऋ० वे० ७, १, २१, ३।

† "ब्रूवन्"—इति ख० पु० पाठः।

‡ ऋ० वे० ७, १, ९, १, ४।

तान् "हरितः" हरितवर्णान् अश्वान् "सूरः" सूर्य्यस्य "रथे" "यातवे" गन्तुम् "अयुक्त" युनक्ति* ॥

"रथे"-"रश्म"—इति पाठौ ॥ २ ॥ ८

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य नवमस्याध्यायस्य पञ्चमः खण्डः† ॥ ५ ॥

---

अथ षष्ठ खण्डे‡—

अग्निंवइति ऋचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा।

३ १ २ ३ २३ १ २ ३ २ ७
अग्निंवोदेवमग्निभिःसजोषा

१ २ ३१२ ३ १ २
यजिष्ठन्दूतमध्वरेकृणुध्वम्।

१र २ ३ १ २ ३ २ ३
योमर्त्त्येषुनिध्रुविर्ऋतावा

१ २ ३ १ २ ३ २
तपूर्मूर्द्धाघृतान्नःपावकः ॥ १ ¶ ॥

---

* 'एतदुक्तम्भवति—यदा सोमस्य इन्द्रस्य चाह्वानं क्रियते तदा सूर्यो रथे नियुक्तः स्यात् यातवे गमनाय'—इति वि०।

† 'उक्तं वक्ष्यमाणम्'—इति वि०।

‡ 'इदानीमाज्यानि'—इति वि०।

¶ य० से० १५, ६१=ऋ० वे० ५, २, ३, १।

हे देवाः! "वः" यूयं "देवं" द्योतमानम् "अग्निम्" "अध्वरे" कौटिल्य-रहिते यज्ञे "दूतं" "कृणुध्वं" कुरुत। कीदृशम्? "अग्निभिः" अन्यैः "सजोषा" सजोषसम् [द्वितीयार्थे प्रथमा (३, १, ८५)] "यजिष्ठं" यष्टृतमं* "यः" अग्निः देवोऽपि सन् "मर्त्तेषु" "निध्रुविः" नितरां ध्रुवस्तिष्ठति। कीदृशः? "ऋतावा" यज्ञवान् सत्यवान् वा "तपुर्मूर्द्धा" तापकं तेजः† "घृतान्नः पावकः" शोधकं तमग्निं दूतं कृणुध्वमिति योजना॥१

अथ द्वितीया।

२ ३ २ ३ १र २र ३ २
प्रोथदश्वोनयवसेविष्यन्

३ २ ३ २ ३ १ २ ३ १ २
यदामहःसंवरणाद्व्यस्थात्।

१ २ ३ २ ३ १ २ ३ १र
आदस्यवातोअनुवातिशोचि

१ २र ३ १ २ ३ १ २
रधस्मतेव्रजनङ्कृष्णमस्ति ॥ २ ‡ ॥

"यवसे" घासे "अविष्यन्" भक्षयन्¶ "प्रोथत्" शब्दं कुर्व्वन् सञ्चरन् वा "अश्वो न" अश्व इव "महः" महतः "संवर-

---

* 'यजिष्ठं—यजनीयम्'—इति वि०।

† 'तपुः—तापनशीलः, मूर्द्धा—प्रधानभूतः'—इति वि०।

‡ ऋ० वे० ५, २, ३, २।

¶ 'यवसे—सन्निधानभूते। अथवा द्वितीयार्थे सप्तमी। यवसमभविष्यन् भक्षयन्'—इति वि०।

णात्" निरोधात् दावरूपोऽग्निः "यदा" "व्यस्थात्" संवृतेषु वृक्षेषु वितिष्ठते, "आत्" तदा "अस्य" अग्नेः "शोचिः" अर्चिः "अनु वातः वाति"। अथ प्रत्यक्षस्तुतिः—"अध" अथानन्तरं हे अग्ने! "ते" तव "व्रजनं" वर्त्म "कृष्णमस्ति"। "स्म"—इति पूरणम् ॥ २ ॥

अथ तृतीया ।

१ २र ३ १ २ ३ २उ
उद्यस्यतेनवजातस्यवृष्णो-

३ १ र २ १ २ ३ २
ग्नेचरन्त्यजराइधानाः ।

२ ३ १ २ ३ र ३ १ २ ३
अच्छाद्यामरुषोधूमएषि

२ ३ १ २ ३ १ २ ३ २ ३ २
सन्दूतोअग्नईयसेहिदेवान् ॥ ३ * ॥ ९

हे "अग्ने!" "नवजातस्य" नूतन-प्रादुर्भूतस्य "वृष्णः" वर्षितुः "यस्य" "ते" तव "अजरा" जरा-रहिता ज्वाला "इधानाः" इध्यमाना या "उच्चरन्ति" उत्क्रान्ति। हे "अग्ने!" "अरुषः" आरोचमानः "धूमः" धूमयुक्तः "दूतः" त्वं "द्यामच्छ"† द्युलोकं प्रति "समेषि" सम्यग् गच्छसि, पश्चात् तत्रत्यान् "देवान्" इन्द्रादीन् "ईयसे हि" प्राप्नोषि खलु, [ यद्वा, हे

---

* ऋ० वे० ५, २, ३, २।

† 'अच्छ—आप्तुम्'—इति वि०। संहितायाम् "अच्छा"—इति दीर्घान्त श्रूयते, तत्र निपातस्य चेति दीर्घः।

अग्ने ! त्वदीयो यो धूमः द्युलोकं प्रति एषि गच्छति, पुरुष-व्यत्ययः ; त्वमपि देवान् प्राप्नोषि ॥

"एषि"-"एति"—इति पाठौ ॥ ३ ॥ ९

अथ तमिन्द्रमिति तृचात्मकं द्वितीयं सूक्तम्,*

तत्र प्रथमा ।

१र २र ३ २ ३ २ ३ १ २
तमिन्द्रंवाजयामसिमहेवृत्रायहन्तवे ।
१ २र ३ १ २
सवृषावृषभोभुवत् ॥ १ † ॥

यजमाना आहुः—"तं" पूर्वोक्तम् "इन्द्र" "वाजयामसि" वाजयामः सोमेन स्तुतिभिः "वाजवन्तं" बलवन्तं कुर्मः । किमर्थम् ? "महे" महान्तं "वृत्राय" अपामावरकं वृत्रासुरं "हन्तवे" हन्तुं सोम-पानेन मत्तः स्तुतिभि र्वा स्तुतः सन् वृत्रहन्तवे [ वाजयामसि—वाजवन्तं करोतीत्यर्थे "तत्करोतीति ( ३, १, २५ वा० ) णिच्, "णाविष्ठवत् ( ३, १, २५वा० )"—इति णेरिष्ठवद्भावात् "टेः ( ६, ४, १५५ )"—इति टि-लोपः, "विन्मतोर्लुक् ( ५, ३, ६५ )"—इति मतुपो लुक् ]। "वृषा" धनानां सेक्ता दाता "सः" इन्द्रः "वृषभः" अस्माकं स्तोतॄणां सोमस्य दातॄणां धनादि-सेचको दाता "भुवत्" भवतु ॥ १ ॥

---

* 'मैत्रावरुणसाम्नम्'—इति वि० ।

† छ० आ० २, १, ३, ५ ( १भा० २९६पृ० )=ऋ० वे० ६, ६, १९, १ ।

अथ द्वितीया।

२ ३ १र २र ३ १र २र ३ १र २र३ २
इन्द्रःसदामनेक्रतओजिष्ठःसबलेहितः।
३ ० ३ २उ ३ २
द्युम्नीश्लोकीससोम्यः॥ २ *॥

"सः" इन्द्रः "दामने" स्तोतृभ्यः धनादि-दानायैव "कृतः" प्रजापतिना सृष्टः। किञ्च "ओजिष्ठः" ओजस्वितमः "सः" एवेन्द्रः "बले" बलवति सोमे प्रजापतिना सृष्टिकाले निहितः सोम-पानार्थञ्च निहित इत्यर्थः। "द्युम्नी" ["द्युम्नं द्योततेर्यशो वान्नं वेति (निरु० नै० ५, ५) यास्केनोक्तत्वात्] यशस्वी अन्नवान् वा अतएव "श्लोकी" श्लोकः स्तुतिः तद्वान्† "सः" इन्द्रः "सोम्यः" सोमार्हो भवति‡॥

"बले"-"मदे"—इति पाठौ॥ २॥

अथ तृतीया।

३ २उ ३ १र २र ३ १ २ ३ १ २
गिरावज्रोनसम्भृतःसबलोअनपच्युतः।
३ २ ३ १र २र
ववक्षउग्रोअस्तृतः॥ ३ ¶॥ १०

* ऋ० वे० ६, ६, २२, ३।

† 'श्लोकी—श्लोकैर्मन्त्रैर्योऽतिशयो गीयते सः श्लोकी'—इति वि०।

‡ 'सोमैर्यः सम्भवते स सोम्यः'—इति वि०। "सोममर्हति यः"—इति पा० ४, ४, १३७।

¶ ऋ० वे० ६, ६, २२, ४।

"गिरा" स्तुति-लक्षणया वाचा स्तोतृभिः "सम्भृतः" उत्पादितः तीक्ष्णीकृतः। तत्र दृष्टान्तः—"वज्रेण" वज्र आयुधं तत्कर्त्तृभिः शितधारो यथा भवति तीक्ष्णीक्रियते तद्वत् स्तोतृभिः स्तुत्या सम्भृतः, अतएव "सबलः" बल-सहितः तस्माद् "अनपच्युतः" परैरप्रच्युतः अनभिगतइत्यर्थः, तादृशः "उग्रः" महान् "अस्तृतः" युद्धे शत्रुभिरहिंसितइन्द्रः "ववक्षे" स्तोतृभ्यो धनादिकं वोढुमिच्छति ॥

"उग्रः"-"ऋष्वः"—इति पाठौ ॥ ३ ॥ १०

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य नवमस्याध्यायस्य षष्ठः खण्डः* ॥ ६ ॥

---

अथ सप्तम-खण्डे†—

अध्वर्योअद्रिभिरिति तृचात्मकं प्रथमं सूक्तम्,‡

तत्र प्रथमा¶॥ ॥

१ २ ३ १ २ ३ १र २र ३ २ ३१ २

अध्वर्योअद्रिभिःसुतꣳसोमम्पवित्रआनय।

३ १ २ ३ १ २

पुनाहीन्द्रायपातवे॥ १ ¶ ॥

---

* 'इन्द्रं स्नानमोहदित्यैन्द्राग्नम्'—इति वि०। अतोऽनन्तरं विनियोज्यमानीति तदभिप्रायः। श्रुतस्य तदिहैव द्वितीये( ९,१, ८,१ = २भा० ९११पृ०)प्रपाठके।

† 'उक्तान्याज्यानि, इदानीं माध्यन्दिनः पवमानः'—इति वि०।

‡ 'गायत्रप्रभृतीनि सामानि ब्राह्मणेनोक्तान्यार्षाणि—इति वि०।

¶ छ० आ० ६, १, २, ३ ( २ भा० ५७पृ० )=ऋ० वे० ७, १, ८, १।

हे "अध्वर्यो !" "अद्रिभिः" ग्रावभिः "सुतम्" अभिषुतं "सोमं" "पवित्रे" "आनय" प्रापय। एवदेव दर्शयति— "इन्द्राय" इन्द्रस्य "पातवे" पानाय "पुनाहि" पुनीहि पावय ॥

"आनय"-"आसृज"—इति पाठौ, "पुनाहि"-"पुनीहि"—इति च ॥ १ ॥

अथ द्वितीया।

१२ ११ २ ३ १ २ ३ २उ कर २र
तवत्यइन्दोअन्धसोदेवामधोर्व्याशत।

१ २ ३ १ २
पवमानस्यमरुतः ॥ २ * ॥

हे "इन्दो" सोम ! "तव" सम्बन्धिनं "मधोः" मदकरस्य "पवमानस्य" पूयमानम् "अन्धसः" अन्नं [ तत्र कर्मणि षष्ठी (२, १, २५)] "त्ये" ते इमे "देवाः" इन्द्रादयो "मरुतश्च"† एवम्भूतमन्नं "व्याशत" व्याप्नुवन्तीत्यर्थः ॥

"व्याशत"-व्यश्नुत"—इति पाठौ ॥ २ ॥

अथ तृतीया।

३ १ ३ १ २ ३ २उ ३ १ २ ३ १ २
दिवःपीयूषमुत्तमꣳसोममिन्द्रायवज्रिणे।

३ २ ३ १ २
सुनोतामधुमत्तमम् ॥ ३ ‡ ॥ ११

---

* ऋ० वे० ७, १, ८, २।

† 'मरुतः—मरुतो देवाः अथवा मरुतः रश्मयः'—इति वि०।

‡ ऋ० वे० ७, १, ८, ३।

हे अध्वर्यवः ! यूयं "मधुमत्तमम्" अतिशयेन माधुर्योपेतं "दिवः" द्युलोकस्य "पीयूषम्" अमृतभूतम् "उत्तमं" श्रेष्ठं "सोमं" "वज्रिणे" वज्रवते "इन्द्राय" "सुनोत"* अभिषुणुत ॥ ३ ॥११

॥ वैरूपम्† ॥ अध्वर्यो२३४आ । द्रिभायिःसू३ता३म् । सोमंपा२३४वो । त्वाऽऽ१नाया२ । पुना२३ । हौन्द्रा३४ औहोवा । यपात्तवे२३४५ ॥(१) तवत्या२३४ई । दो आन्धा३सा३ः । देवा२मा२३४धोः । वाया१ज्ञाता२ । पवा२३ । माना३४औहोवा । स्यमरुता२३४५ः ॥(२) दिवःपी२३४यू । षमुत्ता३मा३म् । सोमा२मा२३४इन्द्रा । यावज्रायिणा२यि । सुनो२३ । तामा३४औहोवा । धुमत्तमा२३४५म्(३) ॥ २० ‡ ॥ [१]

---

* संहितायां "सुनोता"—इत्याकारान्तं श्रूयते, तत्र द्व्यचोतस्तिङ इत्येतस्मात् तिङ्इति (६, ३, १३५) योगविभागाद्दीर्घः ।

† "गायत्री वैरूपम्"—इति ख० पु० पाठः ।

‡ ऊ० गा० ४प्र० १ अ० २०सा० ।

॥ आष्टुभार्गवम् ॥ अध्वर्यो३अद्रि। भिःसू३ताम्।
सोमम्पवा३यि। न्वाआ२ना२३४या। पुनाहा१यिन्द्रा
२। यपा३। ता२३४वो६हायि॥(१) नवत्यइन्दो। अ
न्धा३साः। दायिवामधो३ः। वाया२भा२३४ता। पवा
मा१ना२। स्यमा३। रू२३४तो६हायि॥(२) दिवःपी
यूषम्। उत्ता३माम्। सोममिन्द्रा३। यावा२ज्रा२३
४यिणायि। सुनोता१मा२। धुमा३। ता२३४ मो ६
हायि(३)॥ १ *॥ [२]

॥ मार्गीयवम्† ॥ अध्वौहोवा। र्योआ२। द्रिभा
यिःसू२३४ताम्। सोमम्पवि। न्वाआना१या२। पुना।
हा। औ३होयि। हौ२३४न्द्रा। याऽ२पा२३४औहोवा।
ए३। नवे२३४५॥(१) नवौहोवा। त्याआ२यि। दो

* ऊ० गा० ४प्र० २ख० १सा०।

† "मासीयवाद्यम्"—इति ख० पु० पाठः।

२ ३ ५ १र र २ र १ २ १ र
अन्धा२३४सा: । देवामधो: । वियाशा१ता२ । पवा ।
२ २ ३ ५ १ ३ ५र र
हा । औ३होयि । मा२३४ना । स्या२मा२३४औहो
२ १ १११ १र १ २ १
वा । ए३ । हृता२३४५: ॥(२) दिवौहोवा । पीयूं२ ।
३ २ ३ ५ १र २ र १ २
षमुत्ता२३४माम् । सोममिन्द्रा । यवाज्रा१यिणा२यि ।
१र २ २ ३ ५ १ २
सुनो । हा । औ३होयि । ता२३४मा । धूं२मा२३४
५र र २ १ १११
औहोवा । ए३तमा२३४५म् (३) ॥ २ * ॥ [३]

२ र २ १र
॥ सौमित्रम् ॥ अध्वर्य्योअद्रिभि:सुता३मे । सोम
२ र २ १ २ र
म्पवित्रे । आ२१२३ । नया३४३ । पू२३ना । हीन्द्रा
१ ४ ५ ४ ५ २ र
२ओ२३ । यपोवा । ता५ा६हायि ॥(१) तवत्यइन्दो
२ १र र २ र २
अन्धसा३ए । देवामधोर्वि । आ२१२३ । ग्रता ३ ४ ३ ।
१ २ र १ ४ ५ ४ ५
पा२३वा । माना२ओ२३ । स्यसोवा । हृ५ तो ६ हा
२ र र २ १र २ २
यि ॥(२) दिव:पीयूषमुत्तमा३मे । सोममिन्द्राय । वा

* ऊ० गा० ४प्र० १अ० २सा० ।

२ १ २ र १
२१२३। जिणा३४३यि। सू२३नो। तामा२३ओ२३।
४ ५ ४ ५
धुमोवा। ता५मोई३हायि(३) ॥ २ * ॥ [४]

१ २ १ २ २
॥ ऐटतम् ॥ अध्व। एआध्वा। यीअद्रि। भा३
१ ३ ५र र ३ ५ २र
यिः। द्रा२यिभा२३४औहोवा। मू२३४ताम्। सोमा
३ ५ ३ २ १ ३ ५र र ३
स्या२३४वी। नआ३। ना२आ२३४औहोवा। ना२३
५ २ ३ ५ ३ २ १ ३ ५र
४या। पुनाहा२३४यिन्द्रा। यपा३। या२पा२३४औ
र ३ ५ १ २ १ २ र
होवा। ता२३४वे ॥(१) तव। एतावा। त्यइन्दो। आ३।
१ ३ ५र र ३ ५ २र २ ५
दो२आ२३४औहोवा। धा२३४साः। देवामा२३४धोः।
३ २ १ ३ ५र र ३ ५ २ ३
वियाइ। वा२या२३४औहोवा। श्रा२३४ता। पवामा
५ ३ २ १ ३ ५र र ३
२३४ना। स्यमा३। स्या२मा२३४औहोवा। ह्व२३४
५ १ २ १ २ र र १
ताः ॥(२) दिवः। एदायिवाः। पीयूषम्। ऊ३। पा
३ ५र र ३ ५ २र २ ५
२मू२३४औहोवा। ता२३४माम्। सोमामा२३४यिन्द्रा।

* ऊ० गा० ४प्र० २ख० ३सा०।

यवा३ । या२वा२३४औहोवा । ऊ२३४र्णा । सुनोता
२३४मा । धुमा ३ । धू२मा२३४औहोवा । ता २ ३ ४
माम्(३) ॥ ४ * ॥ [५]

॥ धुरासाकमश्वम् ॥ अध्वर्य्याआ३ । हौ३हो३१ । द्रि
भिःसुता३म् । हौ३हो३१यि । सोमम्पवा३यि । हौ३
हो३१ । त्रआनया३ । हौ३हो३१यि । पुनाहीन्द्रा ३ ।
हौ३हो३१ । यपातवा३यि । हौ३हो३१२३४५ई । डा ॥(१)
तवत्यआ३ । हौ३हो३१ । दोअन्धसा३ः । हौ३हो३१
यि । देवामघो३ः । हौ३हो३१यि । वियाग्रता३ । हौ
३हो३१यि । पवमाना३ । हौ३हो३१ । स्यमरुताः३ ।
हौ३हो३१२३४५ई । डा ॥(२) दिवःपीयू३ । हौ३हो३
१ । षमुत्तमा३म् । हौ३हो३१यि । सोममिन्द्रा ३ ।

* ऊ० गा० ४प्र० १ख० ४सा० ।

हौ३हो३१ । यवज्रिणा३यि । हौ३हो३१यि । सुनोतामा
३ । हौ३हो३१ । धुमत्तमा३म् । हौ३हो३१२३४५ई ।
डा(३) ॥ ५ * ॥ [६]

॥ विलम्बसौपर्णम् ॥ अध्वर्यो अद्रिभिः सुतम् । ईय
इयाहायि । सोमम्पवित्र आ । हा३हा३यि । ना२३४
या । पूना३उवा३ । हा२यिन्द्रा२३४औहोवा । यपा
तवे२३४५ ॥(१) तवत्यइन्दो अन्धसः । ईयईयाहायि ।
देवामधोर्वियाः । हा३हा३यि । शा२३४ता । पावा३
उवा३ । मा२ना२३४औहोवा । स्यमरुता२३४५ः ॥(२)
दिवःपीयूषमुत्तमम् । ईयइयाहायि । सोममिन्द्रायवा ।
हा३हा३ । ज्रा२३४यिणायि । सूना३उवा३ । ता२मा
२३४औहोवा । धमत्तमा२३४५म्(३) ॥ ६ † ॥ [७]

---

* ऊ० गा० ४प्र० २अ० ५सा० ।

† ऊ० गा० ४प्र० २अ० ६सा० ।

२ १ २ १ २ ३

॥ सौपर्णम् * ॥ अध्वर्य्योओवा। द्रायिभायिःसू२३४

५ २र १ २१ ७ ३ ५ १ १

ताम्। सोमाम्यवायि। नआर२नार२३४या। पू२ना।

२ १ २र १ २ ४ ५ २

हार३यिन्द्रा। यापातवा। औ३होवा ॥(१) तवत्य

१ २ १ २ ३ ५ २र १ २ १ ७ ३

ओवा। दोअन्धार२३४सा:। देवामधा:। वियार२शा

५ १ १ २ १ २ १ २

२३४ता। पा२वा। मार३ना। स्थामहता। औ३

४ ५ १ र १ २ १ २ ३ ६ २र

होवा ॥(२) दिवःपीयोवा। षामुत्तार२३४माम्। सो

१ २ १ ७ ३ ५ १ १

मामिन्द्रा। यवा२ज्ञार२३४यिणायि। सू२नो। तार३

२ १ २ १ ४ ५ ४

मा। धूमत्तमाम्। औ२३होवा। हो ५ ई। डा(३)

॥ १२ † ॥ [८]

१ २र १ २ १ १

॥ रोहितकूलीयोत्तरम् ॥ अध्वर्य्याअद्रिभायिः। सु

१र २ १र १ १ १

ता२म्। सोमम्पवित्रआना२३या। पूना२हायिन्द्रा२१।

२ १ ५ ४ ५ १ २ १ २र १

यपो२ ३ ४ वा। ताप्वोई२हायि ॥(१) तवत्यइन्दोआ।

---

* "ऐडसौपर्णम्"—इति ख० पु० पाठः।

† ऊ० गा० १६प्र० २ख० १३सा०।

२   १र र   र   २१र   २   १   १
धमा२ः । देवामधोर्वियाशा२३ता । पावा२माना२३ ।

२ १   ५   ४   ५   २१ २र १र२१   २
स्यमो२३४वा । ऌ५तो६हायि ॥(२) द्विवःपीयूषम् । त

१र   र २१   २   १   १
मा२म् । सोममिन्द्रायवज्रा२३यिणायि । सूनो२तामा

२ १   ५   ४   ५
२३ । धुमो२३४वा । ता५मो६हायि(३) ॥ १४ * ॥ [९] ११

धर्त्तादिवइति ऌचात्मकं द्वितीयं सूक्तम् ।†

तत्र प्रथमा ।

३ २ ३ २   ३ १ ३ २ ३
धर्त्तादिवःपवतेकृत्व्योरसो

१ २ ३ १ २   ३ २ ३ १ २
दक्षोदेवानामनुमाद्योनृभिः ।

१ २   २ २उ   ३ १र २र ३
हरिःसृजानोअत्योनसत्वभि

१ ३ १ २   ३ २
र्वृथापाजाᳬंसिकृणुषेनदीष्वा ॥ १ ‡ ॥

---

* ऊ० गा० १६प्र० १ख० १४सा० ।

† 'अभिसोमासआयवइति बृहत्यः, धर्त्तादिवो जगत्यः त्रिष्टुभो रूपेण'—इति वि० । यथा पूर्वमभिसोमासइति (२, २, ९, १=२भा० ४०१पृ० ) तथैवात्र धर्त्तादिवइति भावः ।

‡ छ० आ० ६, २, २, ५ (२भा० १२३पृ० )=ऋ० मं० ९, ३, १, १ ।

"धर्त्ता" सर्वस्य धारकः सोमः "दिवः" अन्तरिक्षात् अन्तरिक्षस्थितात् दशापवित्रात् "पवते" पूयते। कीदृशः सोमः? "क्रत्व्यः" कर्त्तव्यः शोध्यइत्यर्थः। "रसः" रसात्मकः। "देवानां" "दक्षः" बलप्रदः [ यद्वा, दक्षः प्रवर्द्धनीयो देवानामर्थाय ]। तथा "नृभिः" नेतृभिः ऋत्विग्भिः "अनुमाद्यः" अनुमादनीयः स्तुत्यो वा। शेषः प्रत्यक्षकृतः। "हरिः" हरितवर्णः। "सत्वभिः" प्राणिभिः अस्मदादिभिः "सृजानः" सृज्यमानः "अत्यो न" अश्वइव [स यथा शिक्षितोऽनायासेन गच्छति तद्वत्] "वृथा" अप्रयत्नेन "पाजांसि" बलानि स्वीयान् "कृणुषे" कुरुते "नदीषु" वसतीवरीषु ताभिरित्यर्थः॥

"कृणुषे"-"कृणुते"—इति पाठौ॥ १॥

अथ द्वितीया।

२ ३ १ २ ३ १ २ ३ १ २ ३
शूरोनधत्तआयुधागभस्त्योः

२ १ २ ३ १र २र
स्वाऽ३ःसिषासन्रथिरोगविष्टिषु।

१ २ ३ १ २ ३ १ २ ३ २ ३
इन्द्रस्यशुष्ममीरयन्नपस्युभि

१ २ ३ १ २ ३ १ २
रिन्दुर्हिन्वानोअज्यतेमनीषिभिः॥ २ *॥

अयं सोमः "गभस्त्योः" हस्तयोः "आयुधा" आयुधानि

* ऋ० वे० ७, ३, १, २।

"शूरो न" शूर इव "धत्ते" धारयति,* "स्वः" स्वर्गं सुख-साधनं यज्ञं वा "सिषासन्" सम्भक्तुमिच्छन् "रथिनः" रथवान् [ रथा-दिन-प्रत्ययः ] "गविष्टिषु" यजमानस्य गवामेषणेषु सत्सु यजमा-नोद्यह गो-सम्भजनाय रथवानित्यर्थः। "इन्द्रस्य" "शुष्म" बलम् "ईरयन्" प्रेरयन् "इन्दुः" सोमः देवः "अपस्युभिः" कर्मेच्छुभिः† "मनीषिभिः" मेधाविभिः ऋत्विग्भिः "हिन्वानः" प्रेर्यमाणः "अज्यते"‡ गोभिः ॥ २ ॥

अथ तृतीया।

१ २ ३ १ २ ३ १ २
इन्द्रस्यसोमपवमानऊर्म्मिणा

३ १ २ २ ३ ३ १ २
तविष्यमाणोजठरेष्वाविश।

१ २ ३ २ ३ २ ३ १ २
प्रनःपिन्वविद्युदभ्रेवरोदसी

३ २ ३ २ ३ १ २ ३ १ २
धियानोवाजाँउपमाहिशश्वतः ॥ ३ ¶ ॥ १२

हे "सोम!" "पवमान" पूयमान! त्वं "तविष्यमाणो" वर्द्धि-ष्यमाणः§ सन् "इन्द्रस्य" "जठरेषु" "ऊर्म्मिणा" प्रभूतया

---

* 'असि-परशु-पाश-प्रभृतीनि यथा शूरः धारयति तद्वत् सोमः धारयतीति स्रुक्-स्रुव-ग्रह-चमसान्यायुधानि गमस्त्योः'—इति वि०।

† 'अपस्युभिः—अपइच्छद्भिः ऋत्विग्भिः'—इति वि०।

‡ 'अज्यते—अज क्षेपणे, क्षिप्यते'—इति वि०।

¶ ऋ० वे० ७, ३, १, ३।

§ 'तविष्यमाणः—स्तूयमानः'—इति वि०।

धारया "आ विश" जठर-प्रदेशस्य बाहुल्यात् बहुवचनम्* "नः" अस्मदर्थं "विद्युत्" "अभ्रेव" अभ्राणीव सा यथा अभ्राणि दोग्धि तद्वत् "प्र पिन्व" धुच "रोदसी" द्यावापृथिव्यौ† किञ्च "धिया" कर्मणा‡ "नः" अस्मभ्यं "शश्वतः" [ बहुनामैतत् (निघ० ३, १, ५) ] बहून् "वाजान्" अन्नान् "उप" समीपे "माहि" निर्माहि ॥

"माहि"-"मासि"—इति पाठौ, "नः"-"न"—इति च ॥३।१२

२ र १ २ १
॥ उद्वद्भार्गवम् ॥ धर्त्तादायिवा२३:। पवतायिका
२र १र २ र १ २र १
२३। त्वीयोरसाः। दक्षोदायिवा२३। नामनूमा२३।
२र १र २ १ २र १
दीयोनूभायिः। हरिःसाज्जा२३। नोअतायियो२३।
२र १ २ र १ २ १ २र
नासत्वभायिः। वृथापाजा२३। सिन्नणूषा२३यि। ना
र २ २र र १ २ र १ २र
दीषुवा३१उ ॥(१) शूरोनाधा२३। तंआयूधा२३। गा
१ २ १ २ १ २र १
भस्तियोः। सुवःसायिषा२३। सन्नथायिरो२३। गाविष्टि

---

* 'जठरेषु आविश'--सप्तम्या बहुवचनमिदमेकवचनस्य स्थाने द्रष्टव्यम्।

† 'प्र प्र पिन्व—पुनःपुनः पूरय दीपयास्मान् विद्युदभ्रे यथा अभ्राणीव रोदसी द्यावापृथिवी व्यापय'—इति वि०।

‡ धिया—बुद्ध्या--इति वि०। "धी"—इति निघण्टौ कर्मनामस्वेकविंशतितममपदम् (२, १)।

२ १ २ र १ ३र १
षू। इन्द्रस्याशू२३। ष्मीरायार२३न्। आपस्युभायिः।
२ १ ०र १ २र १र
इन्दुर्हीयिन्वा२३। नोअज्याता२३यि। मानीषिभा३१
२ १ २ १ २र १र
उ ॥(२) इन्द्रस्यासो२३। मपवामा२३। नाऊर्मिणा।
२ १ २र १ २र १र २
तविष्यामा२३। णोजठारा२३यि। षूआविशा। प्रनः
१ २ १ २र १र १ र १
पायिन्वा२३। विद्युद्दाभ्रे२३। वारोदसायि। धियानो
२र १ २र १ २ १ १ १ १
वा२३। जाँ२उपामा२३। हौग्मश्वता३१उवा२३४५ (३)

॥ १४ * ॥ [१]

२ १ र २ र १
॥ कावम्, १ ॥ धर्त्तावा। दिवःपवतेक्रा। त्वियोरा
१र र र र २ र १ १
सार२ः। दक्षोदेवानामनुमा। दियोन्नृभार२यिः। हरिः
र र २ १ १ २ ४ ५
सृजानोअतियो। नसत्वाभा२३यिः। वार्थी ३ पाजा।
२ १ १ २ ४ २र १
सिक्रणूपा२३यि। नादा३यिषू५वा६५६ ॥(१) शूरोवा।
र २ १ १ र
नधक्तआयुधा। गभस्त्यायोर२ः। स्वःसिषासन्नथिरो।

---

* ऊ० गा० ४प्र० २ख० १४सा०। "स्वारकावम्"—इति ख० पु० पाठः।

२ १ र २ १
गविष्टायिषू२ । इन्द्रस्यप्रुष्ममीरयान् । अपस्युभार२३यिः ।
१ २ ४ ५ २र १ १ २ ४
आयिन्द्र३र्हीयिन्चा । नेअज्यातार२३यि । माना३यिषा
२ १ र २ र
पुयिभा६५६यिः ॥(२) इन्द्रोवा । स्यसोमपवमा । नऊ
१ १ र र २ र १
र्म्मायिणा२ । तविष्यमाणोजठरायि । पुआवायिशा२ ।
१ २ र १ १ २ ४ ५
प्रनःपिन्वविद्युदभ्रे । वरोदासार२३यि । धाया३नोवा ।
२र १ १ २ ४
जा१उपामार२३ । हीशा३स्वापूता६५६ः(३) ॥ १६ * ॥ [२]
४ २ ४ २ ४ र ५
॥ यज्ञायज्ञीयम् ॥ धर्त्ताऽ५दि । वा३ःपा३वतेका ।
१ र र र२ र १ २ २ १
त्वीयोरमोदच्चोदेवानामनुमा । दी३योनॄ३भायिः । हरा
१ र र र २ १ २
२यिःस्वजानोअत्योमत्व । भिर्वी२३र्या । ऊम्मायि । पा
२ १ र ४ ३२ १ २ १र
३जा । सायिकृणुषेनदार२यिषवाउ ॥(१) आभू । रो
र र र र २ १
नधत्तआयुधागभस्त्योःस्वःसिषासन्नयिरो । गा३वायिष्टा
२ १ १ र २
३यिषू । इन्द्रा२स्यप्रुष्ममीरयन्नपस्यु । भिरार२३यिन्दः ।

---

* ऊ० गा० ६प्र० १अ० १६सा० ।

१ २ २ १ र ३ २
ऊर्म्मायि। हा३यिन्वा। नोअज्यतेमना२यिषिभाउ॥(२)

१ २ १ र र र र र र
भायिरायि। द्रस्यसोमपवमानऊर्म्मिणातविष्यमाणोजठरा

२ १ २ २ १ १ र र
यि। पृ३आवा३यिशा। प्रना२:पिन्वविद्युदभ्रेवरोद।

र २ १ २ २ १ र
सीधार३या। ऊर्म्मायि। नो३वा। जा२उपमाहिशा२

३ २ १ १ १
श्वताउ। वा३४५(३)॥ १५ * ॥ [३]

१ २ २ २ र
॥ ग्राकरम् † ॥ हाउधार्त्ता। दा२३४यि। वःपवते

र १ ३ २ १ ३ २ १ २
कृत्वियोरसा। एहिया। एहिया३४। हाउदाना:।

१ २र र र र १ ३ २ १ ३
दा२३४यि। वानामनुमादियोनृभिः। एहिया। एहि

२ १ २ १ २र र र
या३४। हाउहारी:। सा२३४। जानोअत्योनसत्व

१ ३ २ १ ३ २ १ २ १
भिः। एहिया। एहिया३४। हाउवार्या। पा२३४।

२र र र र १ ३ २ १ ३ २ ५
जा२सिक्रणुषेनदीषुवा। एहिया। एहिया३४। हाउ॥(१)

१ २ १ २ र र र १ ३
हाउप्रूरा:। ना२३४। धत्तआयुधागभस्त्योः। एहि

---

* ऊ० गा० १५प्र० १अ० १५सा०।  † "ग्रागंम्"—इति ख० पु० पाठः।

२ १ ३ २ १ २ १ २र
या । एहियाउ३४ । हाउह्वाः । सा२३४यि । षास

र १ ३ २ १ ३ २ १ २
न्नूथिरोगविष्टिषु । एहिया । एहियाउ३४ । हावायिन्द्रा ।

१ २ र १ ३ २ १ ३ २
स्या२३४ । धूगुक्षमीरयन्नपस्युभिः । एहिया । एहिया

१ १ १ २र र र र
उ३४ । हावायिन्दूः । हा२३४यि । न्धानोअज्यतेमनी

१ ३ २ १ ३ २ ५ १
षिभिः । एहिया । एहियाउ३४ । हाउ ॥(२) हावायि

२ १ २र र र र १ ३ २
न्द्रा । स्या२३४ । सोमपवमानऊर्म्मिणा । एहिया ।

१ ३ २ १ २ १ २र र र र
एहियाउ३४ । हाउनावायि । ष्या२३४ । माणोजठरेष्वा

१ ३ २ १ ३ २ १ १ १
विश । एहिया । एहियाउ३४ । हाउप्रानाः । पा२३४

२ र र र १ ३ २ १ ३ २
यि । न्वविद्युदभ्रेमवरोदसी । एहिया । एहियाउ३४ ।

१ २ १ २र र र १ ३
हाउधाया । नो२३४ । वाजा॑उपमाहिश्वश्वतः । एहि

२ १ ३ २ ५ ४
या । एहियाउ३४ । हाउ । वो५ई । डा(३) ॥ २० * ॥ [४]

३ २ ३ २ ३र ४र ५ १
॥ वासिष्ठम्† ॥ उद्वायि । धर्त्ता३४औहोवा । दि

* ऊ० गा० १७प्र० १ख० २०सा० ।

† "उद्धवायि वासिष्ठम्"—इति ख० पु० पाठः ।

२ १ र   २ २ ४र ५   ३ २ ३र ४र ५   १र
वाः। पवते। क्रत्वियोरसाः। दत्ता३४औहोवा। दे

२ १   २र ३ ४र ५   ३ २ ३र ४र ५
वा। ना३मनु। मादियोनृभायिः। हरा३४औहोवा।

१   २ १   २र ३ ४ ५   ३ २ ३र ४र ५
स्वजा। नो३अति। योनसत्वभायिः। वृथा३४औहोवा।

१र   २ १   २र   ३ २   ४   ३र
पाजा। सिक्तणु। षे। नदा३यिषू५वा६५६॥(१) शू

२ ३र ४र ५   १   २ १र   २र ३ ४ ५
रा३४औहोवा। नधा। ता३आयु। धांगभस्तियोः।

३ २ ३र ४र ५   १   २ १   २र ३ ४ ५
स्ववा३४औहोवा। सिषा। सा३नृथि। रोगविष्टिषू।

३ २ ३र ४र ५   १   २ १   २ ३ ४ ५
इन्द्रा३४औहोवा। स्यपू। ष्मा३मीर। यन्नपस्युभा

३ २ ३र ४र ५   १   २र १   २र २
यिः। इन्दू३४औहोवा। हिन्वा। नोअज्य। ते। म

२ ४   ३ २ ३र ४र ५   १
ना३यिषा५यिभा६५६यिः॥(२) इन्द्रा३४औहोवा। स्य

२ १   २र ३ ४र ५   ३ २ ३र ४र ५
सो। मा३पव। मानऊर्म्मिणा। तवा३४औहोवा।

१   २ १   २र ३ ४र ५   ३ २ ३र ४र ५
ध्यमा। णो३जठ। रेष्वाविशा। प्रना३४औहोवा।

१   २ १   २र ३ ४र ५   ३ २   ३ २
पिन्वा। विद्युद। भ्रेवरोदसायि। उक्ष्वायि। धिया

२र ४र ५ १र २ १ २र २ २ ४
३४औहोवा। नोवा। जा॒उप। मा। हिंमा३श्वा
पूता६५६:(३) ॥ १६ * ॥ [५]

२ १र २ १ २र १ २र १
॥ वायोरभिक्रदन्† ॥ धर्त्तादिवःपवतेकृत्वियो। हो
२ १र र र र र २ २ २ १
यिरासाः। दक्षोदेवानामनुमाद्यि१नृ३भायिः। हरिः
र र र २ २ २ ३ ५ ३
सृजानोअत्ययोनसा१त्वा३भायिः। वार२३४र्थ्या। पार२३४
५ १ २२२ १ २ ४
जा। सायिक्रणुषा३यि। हार३यि। नदा३यिषू५वा६
१र२र१ २१र २र१२र १ २ १
५६ ॥(१) शूरोनधत्तआयुधागभौ। होस्तायोः। स्वःसि
र र २ २ २ १ र २
षासन्नथिरोगवा१यिष्टा३यिषू। इन्द्रस्यशुष्ममीरयन्नपा१
२ २ ३ ५ ३ ५ १ २
स्यू३भायिः। आर२३४यिन्दूः। हार२३४यिन्वा। नोअ
३ २ १ २ ४
ज्यता३यि। हार३यि। मना३यिषा५यिभा६५६यिः ॥(२)
१ २ र १२र १२र १ २ १ र र
इन्द्रस्यसोमपवमानओ। होर्म्मायिणा। तविष्यमाणो
र २ २ २ १ र २ २ २
जठरेषुआ१वा३यिशा। प्रनःपिन्वविद्युदभ्रेवरो१दा३सा

* ऊ० गा० २३प्र० २अ० १६सा० ।

† "वायोरभिक्रन्दः"—इति ख० पु० पाठः ।

३ ५ ३ ५ १ २ ३ १ १
यि । धा२३४या । नो२३४वा । जा६उपमा३ । हा२

२ ४
३ । ह्विम्मा३म्बा५ता६५६ः(३) ॥ १८ * ॥ [६] १२

अथ प्रगाथरूपे तृतीयसूक्ते†—

प्रथमा ।

१ २ ३ २उ ३ १ ३क २र ३ २ ३ १ २
यदिन्द्र प्रागपागुदङ्न्यग्वा हूयसे नृभिः ।

१ २ ३ १र २र ३ २ ३ १ ३ १ २
सिमा पुरू नृषूतो अस्यानवेसि प्रशर्द्ध तुर्वशे ॥ १ ‡ ॥

हे "इन्द्र !" "यद्" यदि "प्राक्" प्राच्यां दिशि वर्त्तमानैः [सप्तम्यां प्राक्-शब्दात् विहितस्यास्तातेः¶ "अञ्चेर्लुगिति (५,३,३०) लुक्], यदि वा "अपाक्" प्रतीच्यां दिशि वर्त्तमानैः, यदि वा "उदक्" उदीच्यां दिशि वर्त्तमानैः यद्वा "न्यक्" नीच्यां दिशि अधस्ताद्वर्त्तमानैः ["न्यधीच (६,२,५३)"—इति प्रकृतिस्वरत्वम्, "उदात्तस्वरितयोर्यणः (८,२,४)"—इति परस्यानुदात्तस्य स्वरितत्वम् ]; एवम्भूतैः "नृभिः" स्तोतृभिः त्वं "हूयसे" स्व-स्व-कार्याय आहूयसे ["हिंसिसन्धेहीन्द्रसिमइतिवैम्बेहमाचक्षतइति वाजसनेयकम् ]। यद्यप्येवं बहुभिराहूयसे तथापि "अनवे"

* ऊ० गा० १३प्र० २अ० १८सा० ।

† उक्तो माध्यन्दिनः पवमानः, इदानीं पृष्ठानुच्यन्ते—इति वि० ।

‡ छ० आ० ३, २, ४, ७ ( १भा० ५७३पृ० )=ऋ० वे० ५, ७, ३०, १ ।

¶ "दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः"—इति पा० ५, ३, २७ ।

अनुर्नाम राजा तस्य पुत्रे राजर्षौ "पुरु" बहुलं "नृषूतः" नृभिस्त्वदीयैः स्तोतृभिः प्रेरितः "असि" भवसि राज्ञो हितकरणे त्वां स्तोतारः प्रीणयन्तीत्यर्थः [षु प्रेरणे, अस्मात् कर्म्मणि निष्ठा "तृतीया कर्म्मणि (६,२,४८)"—इति पूर्वपद-प्रकृति-स्वरत्वम्] अपिच हे "प्रशर्द्ध" प्रकर्षेण शर्द्धयितरभिभवितरिन्द्र! "तुर्वशे"—एतत्सञ्ज्ञके राजनि नृषूतोऽसि नृभिः प्रेरितोऽसि भवसि ॥१॥

अथ द्वितीया।

२ ३ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
यद्वा रुमे रुशमे श्यावके कृप इन्द्र मादयसे सचा।
१ २ ३ १ २ ३ १ २ ३ १र २र ३ १ २
कण्वासस्त्वा स्तोमेभिर्ब्रह्मवाहस इन्द्रा यच्छन्त्या गहि ॥२*॥१३

"यद्वा" यद्यपि "रुमे" रुमादिषु चतुर्षु राजसु हे "इन्द्रः! त्वं "सचा" सह "मादयसे" माद्यसि तथापि "ब्रह्मवाहसः" ब्रह्मणां स्तोत्राणां वोढ़ारः अथवा अन्नानां वोढ़ारः "कण्वासः" कण्वगोत्रा ऋषयः "स्तोमेभिः" स्तोत्रैः स्तोत्रसमूहैः सह "इन्द्र!" त्वाम् "आयच्छन्ति" आयमयन्ति अतस्त्वम् "आगहि" शीघ्रमागच्छ [गमेर्लोटि छान्दसः (२, ४, ७३) शपो लुक्]॥

"स्तोमेभिर्ब्रह्मवाहसः"—"ब्रह्मभिः स्तोमवाहसः"——इति पाठौ॥ २ ॥ १३

२ १ १ २ १ २र
॥ नैपातिथम् ॥ यदिन्द्र प्रागपागुदा३ग्। नायम्वा

---

* ऋ० वे० ५, ७, ३०, २।

२ १ २ २ ३र ५ १
द्र । यसायिनृभीइः । हाँ । औहो२३४वा । स्मिा२

१र १रर र १ २ १ ७ २ ३र ५
पुरुनृषूतोअ । सियानवे२३ । हाँ । औहो२३४वा ।

१ २ २ ३र ५ १ ३ ५र
असायिप्रागा३ । हाँ । औहो२३४वा । धा२तृ२३४औ

र ५ २ २ १
होवा । वाँ२३४शे ॥(१) अभिप्रशर्द्धतुर्वशा३ए । आसि

२ १ २ २ ३र ५ १ १२र
प्रश । धतुर्वशे३ । हाँ । औहो२३४वा । यदा२रुमे

१२र १र २ १ ७ २ ३र ५ १
रुशमेध्या । वकायिक्रपा२३ । हाँ । औहो२३४वा । इ

२ २ ३र ५ १ ३ ५र
न्द्रामादा३ । हाँ । औहो२३४वा । या२सा२३४औ

३ ५ २ र र २ १
होवा । सा२३४चा ॥(२) इन्द्रमाद्यसेसचा३ए । आ

२र १ २ २ ३र ५
यिन्द्रमाद । यसायिसचा३ । हाँ । औहो२ ३ ४ वा ।

१ र १र र २ २ १ ७ २ ३र
कण्वा२सस्त्वास्तोमेभिर्ब्र । ह्मवाहसा२३ः । हाँ । औ

१ १ २ ३र ५
हो२३४वा । इन्द्रायाच्छा३ । हाँ । औहो २ ३ ४ वा ।

१ ३ ५र र ३ ५
ता२आ२३४औहोवा । गा२३४ही(३) ॥ १५ * ॥ [१] १३

---

* क० गा० ४प्र० २ख० १५गा० ।

अथ प्रगाथे चतुर्थंसूक्तं*—

प्रथमा ।

३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ १ २र
उभयꣳशृणवच्चनइन्द्रोअर्वागिदंवचः ।
३ १ २ ३ २ ३ १ २ ३ १र २र ३ १ २
सत्राच्यामघवांत्सोमपीतयेधियाशविष्ठआगमत् ॥१†॥

"उभयं" स्तोत्रात्मकं शस्त्रात्मकञ्चोभयविधम् "इदं" "वचः" "अर्वाग्" अस्मदभिमुखम् इन्द्रः "शृणवत्" शृणोतु त्वञ्च "मघवान्" धनवान् इन्द्रः "सत्राच्या" अस्माकं सह अञ्चन्त्या "धिया" युक्तः सन् "शविष्ठः" अतिशयेन बलवान् "सोमपीतये" सोमस्य पानाय "आगमत्" आगच्छतु ॥ १ ॥

अथ द्वितीया ।

२उ ३ १ २ ३ १र २र ३ १ २ ३ १ २
तꣳहिस्वराजंवृषभन्तमोजसाधिषणेनिष्टतक्षतुः ।
३ २ ३ १ २ ३ १र ३र ३ १ २ ३ २ ३ १ २
उतोपमानाम्प्रथमोनिषीदसिसोमकामꣳहितेमनः ॥२‡॥१८

"तंहि" तं खल्विन्द्रं "स्वराजं" स्वयमेव राजमानो "धिषणे" द्यावापृथिव्यौ "वृषभं" जगदुपकारकं वृष्टेर्वर्षकम् "ओजसा" बलेन "निष्टतक्षुः" सञ्चरतुः "उत" अपिच यस्मादेवं तस्मात् हे

---

* 'अच्छावाक साम'—इति वि० ।

† छ० आ० ३, २, ५, ८ ( १भा० ५९१पृ० )=ऋ० वे० ६, ४, ३५, १ ।

‡ ऋ० वे० ६, ४, ३५, २ ।

इन्द्र! उपमानभूतानामन्येषां देवानां मध्ये "प्रथमः" मुख्यः सन् "निषीदसि" वेद्यां सोमकामं "हि" खलु ते मनः॥

"ओजसा"-"ओजसः"—इति पाठौ॥२॥१४

॥ वैयश्वम्॥ उभयꣳशृणवच्चना३ए। आयिन्द्रो२
अर्वागिदंवचार३ः। होवा३हायि। सत्राचियामघवा
२न्। सो। मापा३हायि। ता२३४यायि। धियाप्र
विष्ठ्यार३होयि। गमात्। औ२३होवा॥(१) धिया
प्रविष्ठ्यागमा३दे। धाया२प्रविष्ठ्यागमार३त्। हो
वा३हायि। तꣳहिस्वराजा२वृषभाम्। तामो३हायि।
आ२३४सा। धिषणेनिष्टनार३होयि। नत्नः। औ२३
होवा॥(२) धिषणेनिष्टनच्चतू३रे। धायिषा२णेनिष्टत
नत्न२३ः। होवा२हायि। उतोपामा२प्रथमो। नायि

षा३ह्वाँयि । दा२३४सायि । सोमकाम१ह्वितार३यिह्वो

यि । मना । औ३होवा । ह्वोपूई । डा(३) ॥ १६* ॥[१]

॥ वाम्रम् ॥ उभय१श्रा । णवा च्चा१ना२ः । इन्द्रो

मर्वोगिदांवाश्चा२ः । सनाच्चामघवांत्सोमपायिता१या

२यि । धियाम्रा २ ३ वा ३यि । ष्टा२श्रा२३४औहोवा ।

गा २ ३ ४मात् ॥(१) धियाश्वायि । ष्टश्रागा१मा२त् ।

धियाम्रविष्टश्रागा१मा२त् । त१ह्विस्वराजंवृषभन्तामो१

जासा२ । धिषणे२३ना३यिः । ता२ना २ ३ ४औहोवा ।

मा२३४तूः ॥(२) धिषणेनायिः । नताचा१तू२ः । धि

षणे निष्टताम्रा१तू२ः । उतोपमानाक्प्रथमोनिषायिदा१

* ऋ० मा० ४म० २अ० १६सा० ।

२ १ २ १ २ ५ २ २

सा रयि: सोमका२३मा३म् । कारयिता२३४औहोवा ।

२ ५

मा२३४ना:(३) ॥ ७* ॥ [२] १४

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य नवमस्याध्यायस्य

सप्तमः खण्डः† ॥ ७ ॥

---

अथाष्टम खण्डे —

तत्रादौ प्रथमसूक्ते —

प्रथमा ।

१ २ ३ १ २ ३ १२ १२ ३ १ २

पवस्वदेवआयुषगिन्द्रङ्गच्छतुतेमदः ।

२ १२ २२ ३ १ २

वायुमारोहधर्म्मणा ॥ ‡ १ ॥

हे सोम ! "देवः" द्योतमानः त्वं "पवस्व" धारया क्षर । अपिच "ते" तव "मदः" मदकरः रसः "आयुषक्" तम् "इन्द्रं" प्रति "गच्छतु" अपिच त्वं "वायुं" "धर्मणा" धारकेण रसेन "आरोह" प्राप्नुहि ॥

"देवः"-"देव"—इति पाठौ ॥ १ ॥

---

* ऊ० गा० १८प्र० २ख० ७गा० ।

† 'उक्तानि सूक्तानि'—इति वि० ।

‡ छ० आ० ६, २, १, ५ (१भा० ३७पृ०) = ऋ० वे० ७, ४, २६, १ ।

अथ द्वितीया ।

१२ २ ३१२ ३१ २ ३१२
पवमाननितोशसेरयिंᳫं सोमश्रवाय्यम् ।
१२ ३१२ २२
इन्दोसमुद्रमाविश ॥ २ * ॥

हे "पवमान !" "इन्दो !" "सोम !" त्वं "श्रवाय्यं" श्रवणीयं "रयिं" प्रभूतं धनं "नि तोशसे" अतितरां पीडयसि† स त्वं "समुद्रं" द्रोणकलशम् "आ विश" प्रविश ॥

"इन्दो"-"प्रियः"—इति पाठौ ॥ २ ॥

अपघ्नन्पवसेमृधइति तृतीया‡ ।

३ १ २ ३१२
अपघ्नन्पवसेमृधः० ॥ ३ ॥ १५

ऋचः प्रतीकमिदम् ॥ सा च छन्दस्याम्नाता ( ६, १, १, ६ = २भा० ४८ पृ० ) व्याख्याता च ॥ ३ ॥ १५

२ १ १ १ २
॥ शुद्धपाद्यम् ॥ पवस्वदा२यि । इया२इया । व
२ १ १ १ १ २२ १
आयूषा२क् । इन्द्रञ्च्छा२ । इया२इया । तुतेमा

---

* ऋ० वे० ७, ४, २६, ५ ।

† 'तोशसे—तंश दाने ददासि'—इति वि० ।

‡ छ० आ० ६, १, १, ६ ( २भा० ४८पृ० )=ऋ० वे० ७, १, ३४, ४ ।

२ १र १ २ १ २
दा२ः। वायुमारो२। इया२इया। हधमा२३णा३

२ १र १ २र १
४३॥(१) पवमाना२। इया२इया। नितोशासा२यि।

१र १ २ र १ र १ १
रयिंसोमा२इया। अवाश्राया२। इन्दोसमू२। इया

२ २ १र २ २ १ १
२इया। इमावा२३यिश्रा३४३॥(२) अपघ्नन्पा२। इया

१ २र १ १ १ १
२इया। वसेमाद्वा२ः। क्रतुवित्सो२। इया२इया।

२ १ १र १ १ २
ममत्सारा२ः। तुहस्वादा२यि। इया२इया। वयु

२ १
आ२३ना३४३म्। ओ२३४५ई। डा(३)॥१७*॥[१]

५ २ ४ ५ ४ ५ १
॥ भासम्† ॥ पव। स्वा३दायि। वाः। इंया। आ

२ १ २ ऽ २र ३र १
यूषा२क्। आयिन्द्रङ्गच्छ। तु। तौ३हो। वाहा

१ १र १ ३ ५र र
यि। मदा२ः। वायू२३म्। आ२रो२३४औहोवा।

१ २२ ५ २ ४ ५ ४ ५ १
हधर्म्मणा१॥(१) पव। मा३ना। नायि। इंया। तो

२ १ २र ऽ २र ३र २
शा१सा२यि। रायिंसोम। आवौ३हो। वाहायि।

---

* ऊ० गा० ४प्र० २अ० १७सा०।

† "गायत्रीभासम्"—इति ख० पु०।

१ १ १ २ ५र र २ र
ई्या२म् । इन्दो२३ । सा२मू२३४औहोवा । द्रमा

३ २ ५ २ ४ ५ ४ ५ १
विद्मा१ ॥(२) अप । घ्ना३न्पा । वा । ई्या । साधि

२ १ २ र ३ ३र ३र १ १
माह्वा २ः । क्रातुवित्सो । म । मौ३हो । वाचा । त्सरा २ः ।

१ १ ३ र ५र २ २ २
नुदा२३ । स्वा२दा२३४औहोवा । वयुक्ष्मना१म्(३)

॥ १८ * ॥ [२]

५ २ ४र ५र २ १
॥ काक्षीवत्तम † ॥ पवस्वा३देववायुषाक् । इन्द्रा

२ २र १ ३ २ २र २ १र
ङ्गच्छ । तुतेमदा३ः । ओ३४ । हाहोयि । वायूमा२

२ ३र२ ३र ५ ४ ५
३रो । हधौहोयि । औहो२३४वा । माप्नोई्हायि ॥(१)

५ २ ४ ५र २ १ २र १ २र ९ ३
पवमाननितोभसायि । रयायिं सोम । श्रवायिया३म् ।

२ ३र २ १ ३र २ ३र
औ३४ । हाहोयि । इन्दोसा२३म् । द्रमौहोयि । औ

१ ५ ४ ५ ५ २ ४ ५र
हो२३४वा । वाप्नयिशोई्हायि ॥(२) अपघ्ना३न्पवसेमृ

२ १ २ २र २ १ ३ १ २र २
धाः । क्रतूवित्सो । समत्सरा३ः । ओ३४ । हाहोयि ।

---

* ऊ० गा० ४प्र० १ख० १८सा० ।

† "काक्षीवतम्"—इति ख० पु० पाठः ।

नुदा२ खा२३द्धायि। वायौहोयि। औहो२३४वा। ज्ञा
पूनो६हायि(३) ॥ १८ * ॥ [३]

॥ गायत्रासितम्† ॥ पवस्वदेवआ। इया३४३ई३४
या। युषागिन्द्रङ्गच्छतुतौ२। हौ२। ऊवा२यि। मा
दा२ः। वायू३९होयि। आरो२हो। हधर्म्मा२३णा
३४३ ॥(१) पवमाननितौ। इया३४३ई२४या। शसायि
रयि९सोमश्रवौ२। हौ२। ऊवा२यि। आया२म्।
इन्दो२होयि। समू३हो। इमावा२३यिषा ३४३ ॥(२)
अपघ्नन्पवसे। इया ३४३ई३४या। स्त्रधाःक्रतुवित्सोम
मौ२। हौ२। ऊवा२यि। त्सारा२ः। कुदा२हो
यि। स्वादा२हो। वयुञ्जा२३ना२३४३म्। ओ२३४५ई।
डा(३) ॥ २० ‡ ॥ [४]

---

* ऊ० गा० ४प्र० २ख० १९सा०।

† "वासिष्ठनासितम्"—इति ऊ० पु०।

‡ ऊ० गा० ४प्र० २ख० २०सा०।

॥ ऐडसैन्धुक्षितम् ॥ पवस्वदो। हायि। वश्रायु२ ३षाक्। इन्द्रङ्गच्छतुताऽयिमा३दाः। वायुमारो२३४ हायि। हाधा३हा। मणा। औ३होवा ॥(१) पव मानो। हायि। नितोश्रा२३सायि। रयिंऽसोमश्रवा१ आ२याम्। इन्दोसमो२३४हायि। द्रामा३हायि। वि श्रा। औ३होवा ॥(२) अपघ्नन्थो। हायि। पमेमा २३र्द्धाः। क्रतुवित्सोममाऽत्सा२राः। नुदस्वादो२३४हा यि। वायू३ऽहायि। जनाम्। औ२३होवा। होऽ५ ई। डा(३) ॥ १* ॥ [५] १५

अथ तृतीयसूक्ते तृचात्मके—

अभीनोवाजसातममिति प्रतीकम्,

अभीनोवाजसातमं०॥ १† ॥

सा चाम्नाता ( ६, २, १, ५=२भा० १६१पृ० ) व्याख्याताच ॥ १ ॥

---

* ऊ० गा० १७प्र० १ख० १सा० ।

† ऋ० आ० ६, १, १, ५ (२भा० १६१पृ० )=ऋ० वे० ७, ४, २३, १ ।

अथ द्वितीया।

३१२ ३१र २र३१२ ३१२
वयन्ते अस्यराधसोवसोर्वसोपुरुस्पृहः।
१ २र ३१र २र३१२
निनेदिष्ठतमाइषःस्यामसुम्नेते अध्रिगो ॥ २ * ॥

हे "वसो" वासयितः! सोम! "अस्य" एतादृशस्य "ते" तव "राधसः" धनस्य "पुरुस्पृहः" बहुभिः स्पृहणीयस्य "वसोः" वासकस्य त्वदीय-दीयमानस्य वयं नितरां "नेदिष्ठतमाः" अत्यन्त-मन्तिकतमाः "स्याम" भवेम ॥ २ ॥

अथ तृतीया।

२ ३ २ ३ १ २ ३ २ ३ ३ १ १
परिस्यस्वानोअक्षरदिन्दुरव्येमदच्युतः।
२ ३ २ ३ १ २ ३ २ ३ १र २र ३ २
धारायऊर्द्ध्वोअध्वरेभ्राजानयातिगव्ययुः ॥३†॥ १६

"गव्ययुः" गोकामः यद्वा चीरादि कामयमानः "ऊर्द्ध्वः" समुच्छ्रितः सर्वेषां मुख्यो "यः" सोमः "भ्राजा न" यथा भ्राजमा-नया दीप्त्या अन्तरिक्षे गच्छति तद्वत् दीप्त्या सह "अध्वरे" यज्ञे "धारा" स्वकीयया धारया "याति" गच्छति। "स्वानः" सुवानः अभिषूयमाणः सः "इन्दुः" सोमः "मदच्युतः" मदार्थं

---

* ऋ० वे० ७, ४, २३, ५।

† ऋ० वे० ७, ४, २३, २।

वेदैः प्रेरितः सन् "अव्ये" अवि भवे पवित्रे "पर्यक्षरत्" परितः क्षरति ।

"अक्षरत्"-"अक्षाः"—इति पाठौ ॥ ३ ॥ १६

५ र ३र २ ४ र ५
॥ गौरीवितम्* ॥ अभी । नोवा३ । जसातमाम् ।
१ १ र २ ४
रयिमर्षशतस्पृहा२३म् । आयिन्दोसहा३१२३ । स्वभा
१ १ ४ ५ ४
पूर्णसाम् । तूविद्युम्ना३१२३म् । विभोवा । साधुवो६
५ ५ ३र २ ४ ५ १र र
हायि ॥(१) वयम् । तेआ३ । स्यराधसाः । वसोर्वसो
१ र २ ४ १
पुरुस्पृहा२३ः । नायिनेदिष्ठा३१२३ । तमा५दूषाः । स्वार्म
२ ४ ५ ४ ५ ५
सुम्ना३१२३यि । तओवा । धा५यिगो६हायि ॥(२) परि ।
३ २ ४र ५ १ र १
स्यस्वा३ । नोअक्षरात् । इन्दुरव्येमदच्युता२३ः । धा
र २ ४र १ र २ ४
रायऊ३१२३ । ध्वौआ५ध्वरायि । भ्राजानया३१२३ । ति
५ ४ ५
गोवा । व्यापूयो६हायि(३) ॥ ३ † ॥ [१]

३ र २र १ ४र र ५
॥ ऐडकौत्सम् ॥ अभोहोना२३ । वाजसातममीया ।

---

* "महागौरीवितम्"—इति ख० पु० पाठः ।

† ऊ० गा० ५प्र० १अ० १सा० ।

रयिमर्षश्शतस्पृहम् । आयिन्दोसह । स्रभर्णा२३साम् । तूवा३हायि । द्यू म्ना३ऽहायि । विभासा२३हा३४३म् ॥(१) वयऽहीते२३ । अस्वराधसईया । वसोर्वसोपुरुस्पृहः । नायिनेदिष्ठ । तमा आ२३यिषाः । स्रामा३हायि । सूम्ना३यिहायि । तेअग्रा२३यिगा३४३उ ॥(२) परीहिस्रा२३ः । स्वानोअत्तरदीया । इन्दुरव्यमदच्युतः । धारायज्ञ । ध्वोअध्वा२३रायि । भाजा३हा । नाया३हा । तिगव्या२३यू३४३ः । ओ२३४५ई । डा(३) ॥ ४ * ॥ [२]

॥ प्रुदाप्रुडीयाद्यम् † ॥ अभीनोवाजसातमाम् । रयिमर्षश्शतस्पृ२३हाम् । इन्दोसहस्रभर्णा२३साम् । तुवायिद्यू२३म्ना३म् । वा२यि । भामा३४औहोवा । हा२३४५म् ॥(१) वयन्तेअस्वराधसाः । वसोर्वसोपुरुस्पृ२३हाः ।

---

* ऊ० गा० ५प्र० १ख० ४सा० ।

† "पदाक्तप्रुदाप्रुडीयाद्यम्"—इति ख० पु० ।

१ र २ १र २ र १ २ १
निनेदिष्ठतमाआ२३यिषाः । स्यामसूर३म्नाइयि । तेर ।
३ २ ५र र २ १ १ १ १ १ २ १ २र १र २
अभ्रा३४औहोवा । गा२३४५उ ॥(२) परिस्यस्वानोअच
१ र २ १ २ १र र र २र १
रात् । इन्दुरव्येमदच्यू२३ताः । धारायऊर्म्मीअध्वा२३
२ र १र २ १ २ २ ५र र
रायि । आजाना२३या३ । ता२यि । गव्या३४औहो
३ १ १ १ १
वा । यू२३४५ः(३) ॥ ५ * ॥ [३]

२ र १र र २र १र १
॥ कौत्साद्यम् ॥ अभीनोवौहो । जासातमाम् । र
१ २ ४ २ र १ र
यिमर्षा३ । शता ३ स्पृ५हा६ ५ ६म् । इन्दोसहौहो ।
२र १ २ १ २ ४
स्राभर्णसाम् । तुयिद्युम्ना३म् । वायिभा३सा५हा६५६म्॥(१)
२ १ र २र १र २ र १ २ ४
वयन्तऔहो । स्याराधसाः । वसोर्वसा३उ । पूरु३स्प
२ र १ र २र १र २र
५हा६५६ः । निनेदिष्ठौहो । तामाइषाः । स्यामसु
१ २ ४ २ १र
म्नाइयि । तेआ३भ्रा५यिगा६५६उ ॥(२) परिस्यस्वौहो ।
२र १ २ १ २
नोअक्षरात् । इन्दुरव्याइयि । मादा३च्यू५ता ६ ५ ६ः ।

* ऊ० गा० ५प्र० १अ० ५सा० ।

२र २ १ र २र १ २र र १
धारयऔहो। ध्वोअध्वरायि। आजानया३। तायि

२ ४
गा३ऽयाप्ड्यूड्ड्६:(३) ॥ ६ * ॥ [४]

२ र र १ २ २ ऽ
॥ रयिष्ठम् ॥ अभीनोवा। जसाता३माम्। औ३

२ २ १ २ १ २ १ १ १ १ २ १
हो३वा। रयिमर्षशतस्पृहा२३४५म्। रयिमर्षा। शता

२ २ ऽ २ २ १ र २ १ २ ३ १ १ १ १ २
स्पृ३हाम्। औ३हो३वा। इन्दोसहस्रभर्णसा२३४५म्।

र १ २ २ ऽ २ २ १
इन्दोसहा। स्रभार्णा३साम्। औ३हो३वा। तुविद्युु।

२र १ ३ १ १ १ १ २ १ २ २
म्नंविभासहा२३४५म्। तुविद्युम्नाम्। विभासा३हाम्।

ऽ २ २ २ र १ २ २ ऽ
औ३हो३वा ॥(१) वयन्तेआ। स्यराधा३साः। औ३

२ २ १ र २ र १ ३ १ १ १ १ २र
हो३वा। वसोर्वसोपुरुस्पृहा२३४५ः। वसोर्वसाउ

१ २ २ ऽ २ २ १र २ र ३ २
पुरुस्पृ३हाः। औ ३ हो ३ वा। निनेदिष्ठतमाइषा१ः।

२ र १ २ २ ऽ २ २ १र
निनेदिष्ठा। तमाआ३यिषाः। औ३हो३वा। स्याम

२र र र २ ३ १ १ १ १ २र र १ २
सुम्ने तेअध्रिगा२३४५उ। स्यामसुम्नायि। तेआध्रा३यि

* ऊ० गा० ५प्र० १ख० ६सा०।

२ ५ २ २ २ २ १ २ २
गा। औ३हो३वा ॥(२) परिस्वस्वा। नोआ३हा३रान्।
५ २ २ १ २ १ २र १ २ ३ १ १ १ १ २
औ३हो३वा। इन्दुरव्येमदच्युता२३४५:। इन्दुरव्यायि।
१ २ २ ५ २ २ १र २र १ २र १र २ २ २
मदाच्यु३ताः। औ३हो३वा। धारायऊर्द्धीँअध्वराश्यि।
२र र र १ २ २ ५ २ २ र १र
धारायऊ। ध्वोआध्वा३रायि। औ३हो३वा। भ्राजा
र २ ३ २ २र र १ २ २ ५
नयातिगव्ययू१:। भ्राजानया। तिगाव्या३यूः। औ३
२ २ ५ २ २ ५ २ ५ २ ५
हो३वा। औ३हो३वा। ई३या। ई३या ३ ४। हा।
२ २ ५
हाउवा३। ऊ३२३४पा(३) ॥ ७ * ॥ [५]

१ २र र १ १ २ १
॥ औदलम्॥ अभीनोवा। जासा२तमाम्। रयि
२ १ २ ३ ५ १ २र १
मर्षा३। शातस्य२३४हाम्। इदोसद्दा। स्वाभा२र्णं
१ २ १ २ १ ४ २
साम्। तुवायिद्यू२३म्ना३म्। वा२३यिभा३। सा३४५
५ १ २ र १ १ २ १र
हो६५६हायि ॥(१) वयन्ते आ। स्पारा२धसाः। वसो
२ १ २ ३ ५ १२र १ १
र्वसा३उ। पूरुस्प२३४हाः। निनेदिष्ठा। तामा२इषाः।

---

* ऊ० गा० ५प्र० १अ० ७सा०।

२र १ २ १ ४ २ ५
स्यामसू२३म्ना३यि । ते२३श्रा३ । ध्रा३४५यिगो६हायि ॥(२)

१ २ १ १ २ १ २ १ २
परिस्यस्वा । नोश्रा२श्नरात् । इन्दुरव्या ३यि । माद

३ ५ १र २र १ १ २र १र
च्यू२३४ना: । धारायजः । ध्वौश्रा२ध्वरायि । श्राजाना

२ १ ४ २ ५
२३या३ । ता२३यिगा३ । व्या३४५यो६हायि(३) ॥८*॥ [६]

३ १ २ ४र ५र २
॥ श्यावाश्वम् ॥ श्रभा३१यि । नो३वा । जसा । ता

४ ५ १ २ १
३मम् । एहिया । रा । यिमर्षशा । त । स्पृहा२म् ।

१र र १ २ ४ ५ २र
एहिया२ । इन्दोसहास्रा३भा३ । णा२३४साम् । ऐहा

१र १ २ ४ २
२यि । एहिया२ । तुविद्युम्नंवा३यिभा३ । सा३४५चो

५ ३ २ २ ४ ५र २ ४
६हायि ॥(१) वया३१म् । ते३श्र । स्यरा । धा३सः ।

५ १ र र २ १ १र
एहिया । वा । सोवेसोपू । रु । स्पृहा२: । एहिया

र १ २ ४ ५ २र
२ । निनेदिष्ठाता३मा३: । श्रा२३४यिषा: । ऐहा२यि ।

१र र १ २ ४ २
एहिया२ । स्यामसुम्ना२यिते३श्रा३ । ध्रा३४५यिगो६

---

* ऊ० गा० ५प्र० १ख० ८सा० ।

५ ३ २ २ ४र २ ५ १ ४
हायि ॥(१) परा२१यि । स्या३स्वा । नोत्र । स्वा३रत् ।

५ १ २ २ १ १र
एहिया । आयि । दुरव्येमा । द । च्युता२ः । एहिया

र २ १ २ ४ ५ २र
२ । धारायऊर्द्ध्वी३आ३ । धार२३४रायि । ऐहा२यि ।

१र २ २ १ २ ४ २ ५
एहिया२ । भाजानयाता३यिगा३ । व्या३ ४ ५ योई हा

यि(३) ॥ १५ * ॥ [७]

२ र र र २ १
॥ आभीगवम् ॥ अभीनोवाजसा१तामाम् । रयिम् ।

२ १ १ र २ १ १ २ १
षम्रा२३ता । ऊम्मा२१८२ । स्पृहमिन्द्रोसहस्रभर्णसा२

१ १ १ १ २ २ १ २
३४५म् । तुवा३उवा । द्यु२म्नाम् । वा२३यिभा । स

१ ४ ४ २ र २ १ र
हाम् । औ२३होवा ॥(१) वयन्ते अस्यरा१धासाः । वसो

र २ १ १ र र २ र
वीं । सोपू२३ह्ह । ऊम्मा२१८२ । स्पृहोनिनेदिष्ठतमा

३ २ २ २ १ २
इषा१ः । स्यामा३उवा । सू२म्नायि । ते२३आ । घ्रि

१ २ ४ ५ २ र र २ १
गा । औ३होवा ॥(२) परिस्यस्वानोआ१क्षारात् । इन्दु

* ऊ० गा० १२प्र० १अ० १५सा० ।

२ २ १ १ २ २ २२ १ २२ १२

र। व्येमा२३दा। ऊम्मा२१२। च्युतोधारायऊर्द्वौ

२ ३ २ २ २ १ २

अध्वरा१यि। भ्राजा३उवा। ना२या। ता२३यिगा।

१ ४ ५ ४

व्ययूः। औ२३होवा। हो५ई। डा(३)॥ १६ *॥ [८]

२ २ २ २ २२ १ २

॥ निषेधम्† ॥ अभीनोवाजा३सातमाम्। रयायिम

१ २ १ १ २ १ २ ४ ५ २

र्षा। शतस्पृहा२म्। इहा३। आयिन्दो३साहा। हो

३ ५ २ १ २ १ २ १ २ ४

हो२३४हा। सभर्णा२३साम्। इहा३। तूवा३यिद्यु

५ २ ३ ५ ३ २ ४

म्नाम्। हाहो २ ३ ४ हा। विभा३सा५हा६५६म् ॥(१)

२ २ २२ १ २ १ २ १

वयन्ते अस्या३रा३धसाः। वसोर्वसाउ। पुरुस्पृहा२ः।

१ २ १ २ ४ ५ २ ३ ५ २२ १

इहा३। नायिने३दायिष्ठा। हाहो२३४हा। तमाआ

२ १ २ १ २ ४ ५ २ ३ ५

२३यिषाः। इहा२। स्यामा३सूम्नायि। हाहो२३४हा।

३२ २ ४ २ २ २

तेआ३ध्रा५यिगा६५६उ ॥(१) परिस्यस्वानो३अक्षरात्।

१ २ १ २ १ १ २ १ २ ४ ५

इन्दुरव्यायि। मदच्युता२ः। इहा३। धारा३याऊ।

---

* ऊ० गा० १२प्र० १अ० १६सा०। † "निषेधः"—इति ख० पु० पाठः।

२ ३ ३ २र १ २ १ २ १ २
हाहोर३४हा। ध्वोअध्वार२३रायि। इहा३। आजा

४ ५ २ ३ ५ ३ २ ४ ३ १ १
३नाया। हाहोर३४हा। तिगा३व्या५यू६५६ः। हेर३

१ १
४५(३) ॥ १२ * ॥ [९]

५ र २ ४र५ ४र ५ २ १ २ १
॥ साधम् ॥ अभीनो३वाजसातमाम्। रयायिमर्षा

३ २ ३ ५ १ र २ १ २ ३ १ १
२। शता३४५। स्पृ२३४हाम्। इन्दोसहस्रभर्णसा२३

१ १ १ २ ३ ५ १ २ ३ ५ ४
४५म्। तुवाओ२३४वा। द्युम्नाओ२३४वा। विभा५

५ २ ४ ५ ४र ५ २ १ २ १
सहाम् ॥(१) वयन्ते३अस्यराधसाः। वसोर्वसा २ उ।

३ २ ३ ५ १ र २ २ ३ २ २
पुरु३४५। स्पृ२३हाः। निनेदिष्ठतमाइषा१ः। स्यामा

३ ५ १ २ ३ ५ ४र
ओ२३४वा। सुम्नाओ२३४वा। तेआ५धिगाउ ॥(२)

५ २ ४ ५र ४ ५ २ १ २ १ ३ २
परिस्या३स्वानोअक्षरात्। इन्दूरव्या२यि। मदा३४५।

३ ५ १र २र १ २र १र २ ३ २ २ ३
च्यु२३४ताः। धारायऊर्ध्वाअध्वरा१यि। आजाओ२३४

* ऊ० गा० १७प्र० १अ० १२सा०।

५ १ २ ३ ५ ४ ४
वा। नायाओ२ ३ ४ वा। तिगा ५ व्ययूः। हो५ई।

डा(३) ॥ १३ * ॥ [१०]

४ ३ ४ २ ४र
॥ यज्ञायज्ञीयम् ॥ अभाऽ५यिनः। वा३जा२साता

५ १ २ १ २ २ १ १
माम्। रायिमर्षा। आ३तास्पृ६हाम्। इन्दो२स।

२ १ २ २ १
हस्रा२३भा। ऊम्मायि। णा३साम्। द्यविद्युम्नंविभा

३ २ १ २ १र र र र
२ सहाउ ॥(१) हावा। यन्तेअस्वराधसोवसो२वसाउ।

२ १ ३ २ १ १ २ १
पू३रूस्पृ६३हाः। निने२दि। छता२३माः। ऊम्मायि।

२ २ १ र र ३ २ १ २
आ ३ यिषाः। स्यामसुम्नेतेआ२ध्रिगाउ ॥(२) गोपा।

१ र र २ १ २ २ १र
रिस्यस्रानोअन्नरदिन्दुरव्यायि। मा३दाच्यू३ताः। धा

१ र २ १ २ २ १ र
रा२यः। ऊर्द्वी२३आ। ऊस्रायि। ध्वा३रायि। आजा

र ३ २ १ १ १
नयातिगा२व्ययाउ। वा३४५(३) ॥ १४ † ॥ [११]

---

* ऊ० गा० १७प्र० १ख० १३गा०।

† ऊ० गा० १७प्र० १ख० १४गा०।

२ र र र २र १
॥ स्वारकौत्सम् ॥ अभीनोवाजा३सातमाम् । रयि

२ २ २ र २ १ २ २
मर्षशता१स्पृ३हाम् । इन्दोसहा३ । स्वा३भार्णा३साम् ।

१ ३ ५ ३ २ ३
आऽरयि । तुविद्युम्नोर२३४हायि । विभा३साधुहाई५ई म् ॥(१)

२ र २र १ र र २ २ २ र
वयन्ते अस्या३राधसाः । वसोर्वसोपुरु१स्पृ३हाः । निने

२ १ २ २ १ र ३
दिष्ठा३ । ता३मा आ३यिषाः । आऽरयि । स्याम सुम्नो

५ ३र २ ४ २ र
र२३४हायि । ते आ३धा५यिगा६५६उ ॥(२) परि स्य स्वा

२ १ र २ २ २ र र
नो३अक्षरात् । इन्दुरव्ये मदा१च्यु३ताः । धारायऊ३ ।

२ १ २ २ १ र र ३ ५
र्ध्वो३आध्वा३रायि । आऽरयि । भ्राजानयोर२३४हायि ।

३ २ ४
तिगा३व्या५यू६५६ः(३) ॥ १९ * ॥ [१२]

२ र र ३ ५ २
॥ कार्त्तयशसम् ॥ अभीहा हाउ । नोर२३४वा । ज

१ २ २ ४ ५ २१ २ २ ४ ५
सा औ३हो३तामाम् । रयायिमौ३हो३यि । आर्षा६ ।

५ २ १ १ २ १ र २ २
हाउवा । शतस्पृ हा २म् । उपा । इन्दोसहस्रभा१र्णा

* ऊ० गा० १७प्र० १अ० १९सा० ।

२ १२ २ ४५ ५ २
३साम्। तुवऔ३हो३यि। द्यूम्नाईम्। हाउवा। वि
र १ ३१११ २ र ३
भासहम्। उपा२३४५॥(१) वयꣳहाहाउ। ते२३४
५ २१२ २ ४५ २१२ २
आ। स्वराऔ३हो३। धासाः। वसाऔ३हो ३ यि।
४५ ५ २१ १२ १र
वासा६उ। हाउवा। पुरुस्पृहा२ः। उपा। निनेदि
२ २ २ र१२ २ ४५
ष्ठतमा१आ३यिषाः। स्वामाऔ३हो३यि। सूम्ना६हायि।
५ २र १र ३११११ २र र
हाउवा। तेअध्रिगो। उपा२३४५॥(२) परीहाहाउ।
३ ५ २र१ २ २ ४५ २१२ २
स्वार२३४स्वा। नोआऔ३हो३। धारात्। इन्दूरौ३हो३
२ ५ ५ २ १ १२
यि। आव्या६यि। हाउवा। मदच्युता२ः। उपा।
१र र र र२ २ २ र१२ २ ४५
धारायजर्वीआ१ध्वा३रायि। भ्राजाऔ३हो३। नाया
५ २ १ ३१११
६। हाउवा। तिगव्ययूः। उपा२३४५(३)॥ १० *॥[१३]
२ र र २
॥ नीतन्वाष्ट्रीसाम† ॥ अभीनोवा। जसा३तमाम्।
१ २ २ २ २३२ १ २ २
रयायिमर्षा३मता३। ए३। स्पृहमा। इन्दोसहा३स्वभा

---

* ऊ० गा० १८प्र० १अ० १०सा०। † “नप्रत्नवाष्ट्री साम”—इति ख० पु० पाठः।

२ २ ३ २ १ १ २ २
३। ए३। णममा। तुवायिद्यु म्ना३विभा३। ए३।

२ ३ २
सद्दमा(१)॥ ८ * ॥ [१४] १६

अथ तृतीयसूक्ते—

प्रथमा।

१ २ ३ १ २ ३ २ ३ २ ३ २ ३ २ ३ १र १र
पवस्वसोममहान्त्समुद्रःपितादेवानांविश्वाभिधाम ॥१†॥

हे "सोम !" "महान्" "देवेभ्यो" दीप्यमानत्वेन महत्व-युक्तः, "समुद्रः" समुन्दनः यस्मात् समुद्रवन्ति तादृशः, "पिता" सर्वेषां पालयिता त्वं "देवानां" "विश्वा" विश्वानि सर्वाणि "धाम" धामानि शरीराणि "अभि" लक्ष्य "पवस्व" क्षर ॥ १ ॥

अथ द्वितीया।

३ १ २ ३ १ २ ३ १ २ ३ १र २र ३ १ २
शुक्रःपवस्वदेवेभ्यःसोमदिवेपृथिव्यैशञ्चप्रजाभ्यः ॥ २ ‡ ॥

हे "सोम !" "शुक्रो" दीप्तः त्वं "देवेभ्यः" देवार्थं "पवस्व" क्षर। किञ्च "दिवे पृथिव्यै" च द्यावापृथिवीभ्याञ्च ततः "प्रजाभ्यः च" "शं" सुखं कुरु ॥

"प्रजाभ्यः"-"प्रजायै"—इति पाठौ ॥ २ ॥

---

* ऊ० गा० १६प्र० २अ० ८सा० ।

† छ० आ० ५, १, ५, ३ ( १भा० ८७३पृ० )=ऋ० वे० ७, ५, २०, ४ ।

‡ ऋ० वे० ७, ५, २०, ५ ।

अथ तृतीया।

२ २ ३ १ २ ३ २ ३ १ २ ३ १र २र ३ १ २
दिवोधर्त्तासिशुक्रःपीयूषःसत्येविधर्मन्वाजीपवस्व॥३*॥१७

हे सोम! "शुक्रः" दीप्तः "पीयूषः" पातव्यः त्वं "दिवः" द्युलोकस्य "धर्त्ता" धारकः "असि", "वाजी" बलवान् स त्वं "सत्ये" सत्यभूते "विधर्मन्" विधर्मणि [विविधानि कर्माणि ऋत्विजो कुर्वन्ति यस्मिन्; यद्वा, विविधं सोमादि-हविषां धारकेऽस्मिन्] यज्ञे "पवस्व" क्षर॥ ३ ॥ १७

२र २ र २ र १ ३
॥ धर्मम्॥ औहोइवा। औहोइवा। औहोरवा

५र ५ १ २ र १र १ २ २ १र
२३४औहो६वा। पवस्वसोममहान्समुद्राः। पितादे२

१र १ २र १ र १ १ १ १ २ १ २ र १र
वाना२विश्व। उतिवामा२३४५॥(१) शुक्रःपवस्वदेवेभ्य

२र ३ १ १ १ १ २ १र २ १र २ १र १ १ १ १ २ १र
सोमा२३४५। दिवेपृथिव्यैशञ्चप्रजाभ्या२३४५ः। दिवो

२ १र २ १ २र १र १ १ १ १ २ १र २ र १र २ ३
धर्त्तासिशुक्रःपीयूषा२३४५ः। सत्येविधर्म्मन्वाजीपवस्वा

१ १ १ १ १ २ र ३ १ १ १ १ २ १र ३ २ २ १र
२३४५॥(१) पवस्वसोमा२३४५। महान्समुद्राः। पिता

१र १ १ १ १ १ २र १ र १ १ १ १ २ १
दे२वाना२३४५म्। विश्वाभिधामा२३४५॥(२) शुक्र

* ऋ० वे० ७, ५, २० ६।

२ ३ १ १ १ १ २र १र २र ३ १ १ १ १ २ १र ३ २
पवस्वा२३४४ । देवेभ्यःसोमा२३४५ । दिवे पृथिव्या१यि ।

२ १र १ १ १ १ २ १र २ १र ३ १ १ १ १ २ १ २र १र
शन्नप्रचाभ्या२३४५ः । दिवोधर्त्तासी२३४५ । शुक्रःपीयू

१ १ १ १ २ १र ३ २ २र १र २ ३ १ १ १ १
षा२३४५ः । सत्ये विधर्म्मा१न् । वाजीपवस्वा२ ३ ४ ५ ।

२र २ र १ ३ ५र ५ २ १
औहोऽवा२ । औहोऽवा२३४औहो६वा । ए३ । धर्म्मा

१ १ १
२३४५(३) ॥ ९ * ॥ [१]

२ २ १ २ १
॥ आन्धीगवम् ॥ पा१वास्वा । सो२३मा । ऊम्मा २

१र २ १ २ १र २र १र ३ १ १ १ १ १ २
१ऽ२ । महान्त्समुद्रःपितादेवाना२३४५म् । वायिश्वा३

२ १ २ १ २ ४ ५ ४
उवा । भा२३यिधा । मा । औ३होवा । हो५ई ।

डा(३) ॥ ८ † ॥ [२] १७

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य नवमस्याध्यायस्य

अष्टमः खण्डः‡ ॥ ८ ॥

---

* ऊ० गा० ५प्र० १अ० ९सा० ।

† ऊ० गा० २१प्र० ३अ० ८सा० ।

‡ 'यज्ञायज्ञीयमग्निष्टोमसाम,'—इति वि० ।

अथ नवम-खण्डे*—

प्रेष्ठंवइति त्यृचात्मकं सूक्तम्,

तत्र प्रथमा ।

१ २ ३ १ २ ३ २ ३ १ २ ३ ५
प्रेष्ठंवोअतिथिꣳस्तुषेमित्रमिवप्रियम् ।
१ ३ १ २ १र २र
अग्नेरथन्नवेद्यम् ॥ १ † ॥

हे "अग्ने!" "वः" त्वां [ पूजार्थे बहुवचनम् ] "स्तुषे" स्तौमि अहमुशनेति शेषः। कीदृशम्? प्रेष्ठम्" अस्माकं स्तोतॄणां धन-दानेन प्रियतमम्। "अतिथिं" सर्वैरतिथिवत् पूज्यं [यद्वा, अत सातत्यगमने (भ्वा० प०) ऋतन्यञ्जि (उ० ४,२)"—इत्यादिना अतेरिथिन्। सततं देवानां हविः प्रदातुं गच्छन्तम् ] "मित्रमिव" सखायमिव "प्रियं" स्तोतुः प्रीणनकरं "रथं न" रथमिव "वेद्यं" वेदो धनं धन-हितं लाभ-हेतुं [ यथा स्वाभिमत-लाभाय आश्रयन्ते धन-लाभ-हेतुं रथम्; यद्वा, यथा रथेन धनं लभते तद्वत् स्तोतारोऽनेन धनं लभन्ते, तादृश-धन-लाभ-कारणम् ]। हे अग्ने! तस्मै हितं वेद्यं त्वां कर्म-सिद्ध्यर्थम् अहं स्तोता स्तौमीति सम्बन्धः ॥

"अग्ने"—"अग्निम्"—इति पाठौ ॥ १ ॥

---

* इदानीमुक्थसामानि भवन्ति औशनं प्रथममुक्थम्—इति वि० ।

† छ० आ० १, २, १, ५ (१भा० १००पृ०) = ऋ० वे० ६,६,५,१ = य० वे० १२,५१ ।

अथ द्वितीया ।

३ १ २ ३१ २ २ ३ २ ३ १ २ ३ २
कविमिवप्रशꣳस्यंयन्देवासइतिद्विता ।
१र २र ३ २
निमर्त्त्येष्वादधुः ॥ २ * ॥

हे "देवासः" देवाः इन्द्रादयः ! "यम्" अग्निं "मर्त्त्येषु" मनुष्येषु "इति" वक्ष्यमाण-प्रकारेण "द्विता" द्विधा† "न्यादधुः" गार्हपत्याहवनीयात्मकत्वेन द्विधा निहितवन्तः । तत्र दृष्टान्तः—"कविमिव" "प्रशंस्यं" प्रशंसनार्हं क्रान्त-कर्माणं पुरुषं यथा द्विधा कार्य्यद्वये अन्यो नियोजयति तद्वत् [ यद्वा दिवि पृथिव्यां च निहितवन्तः, भूमौ तु हविराहरणार्थं दिवि तु हविः प्रदानार्थमिति द्वैधं निधानं कृतवन्तइत्यर्थः ] । तमग्निं स्तुषे इति पूर्व्वेण सम्बन्धः ॥

"प्रशंस्यं"-"प्रचेतस"—इति पाठौ ॥ २ ॥

अथ तृतीया ।

१ २ ३ २ ३ १ २ ३ १र २र
त्वंयविष्ठदाशुषोनॄꣳःपाहिशृणुद्धीगिरः ।
१ २ ३ २ ३१र २र
रक्षातोकमुतत्मना ॥ ३ ‡ ॥ १८

---

* ऋ० वे० ६, ६, ५, २ ।

† 'द्विता नाम कृधिः'—इति वि० ।

‡ ऋ० वे० ६, २, ५, ३ ।

हे "यविष्ठ" युवतम! [यद्वा, यौतेस्तृजन्तस्य इष्ठनि* रूपं देवानां हविषां मिश्रयितृतम!] इन्द्र! त्वं "दाशुषः" हविर्दत्तवतः "नॄन्" कर्म्मणां नेतॄन् यजमानान् "पाहि" धनानां दानेन रक्ष [नॄःपाहीत्यत्र संहितायां "नॄन्पे (८, ३, १०)"— इति नकारस्य रुत्वम्, "अत्रानुनासिक (८, ३, २)"—इति पूर्वस्यानुनासिकः। किञ्च, "गिरः" त्वद्विषयाः स्तुतीः "शृणुहि"† अवहितः सन् शृणु। "उत" अपिच "त्मना"‡ आत्मनैव "तोकम्" अस्मदीयं "तनयं" पुत्रं "रक्ष"¶ पालय [त्मनेति सर्व्वत्र सम्बध्यते—आत्मना स्वयमेव रक्ष, त्वदन्यं पालयितारं न विन्दामः त्वमेवास्मदीयम्॥

"शृणुही"-"शृणुधि"—इति पाठौ॥ ३॥ १८

१र१ १ २
॥ गायत्रमौशनम्॥ प्रेष्ठंवाः। स्वता २ ३ यिथीम्।

१र र २ १ २ १ १ २ १
स्तौषेमित्रम्। इवप्रा२३याम्। अग्नि.विरा३था३म्। ना

२ १ ५ ५ १ २ १ २
वा२३हा३४३यिदा२३४योई्हायि॥(१) कविमिवा। प्र

१ २ १ र २र १ २ १
श॰ंसा२३याम्। यान्देवासः। इतिद्वा२३ यिता। नि

---

* "तुमछन्दसि"—इति पा० ५, ३, ५९।

† "शृणुही"—इति दीर्घः संहितायाम्।

‡ "मन्त्रेष्वाङ्ग्यादेरात्मनः"—इति पा० ६, ४, १४१।

¶ संहितायान्तु "रक्षा"—दीर्घान्तः, सच द्व्यच इति दीर्घः।

२ २ १ २ १ ५ ५
मात्तीइये३ । पूवा२३हा३४३यि । दा२३४थोई्हा ॥(२)

१२ १ २१२ २ १ २ २ १२
तुवंयवायि । इदाष्ठू२३षाः । नृडपाहिष्ट । णुद्दोगा

२ १ २ २ १ २
२३यिराः । रक्षातो३क्रा३म् । ऊता२३हा ३ ४ ३यि ।

२ ५ ५
त्मा२३४नोई्हायि(३) ॥ ११ * ॥ [१] १८

अथ तृचात्मके द्वितीय-सूक्ते —

प्रथमा ।

१ २ ३ १ २
एन्द्रनोगधिप्रियसत्राजिदगोह्य ।

३ २उ ३ १ २ ३१२ ३२ ३ २
गिरिर्नविश्वतःपृथुःपतिर्द्दिवः ॥ १ † ॥

हे "प्रिय" स्तोतृणां प्रीणनकर ! "सत्राजित्"‡ सहतां शत्रूणां जेतः ! हे "अगोह्य" केनापि गुहितुमशक्य ! "इन्द्र !" "गिरिर्न" पर्वत इव¶ "विश्वतः" सर्वतः "पृथुः" प्रवृद्धः "दिवः" स्वर्गस्य "पतिः" ईश्वरस्त्वं "नः" अस्मान् "आगधि" आगच्छ ॥

---

* ऊ० गा० ५प्र० १अ० ११सा० ।

† ऋ० आ० ५, १, १, २ (१भा० ८०७पृ०)=ऋ० वे० ६, ७, १, ४ ।

‡ 'सत्राजित्—सदाजेता'—इति वि० ।

¶ 'गिरिर्मेघः अन्तरिक्षव्यापी अथवा गिरयः पर्वताः—इति वि० ।

"प्रियसत्राजिदगोह्य"-"प्रियःसत्राजिदगोह्यः"—इति पाठौ, "विश्वतःस्पृणु"*-"विश्वतस्पृथुः"—इति च ॥ १ ॥

अथ द्वितीया ।

३ १र   २र        ३ २ ३ २ ३ १ २
अभिहिसत्यसोमपाउभेबभूथरोदसी ।
१र   २र   ३ २ ३ १र   २र ३ २
इन्द्रासिसुन्वतोवृधोपतिर्हिवः ॥ २ † ॥

हे सत्य ! "सोमपाः" सोमस्य पातः ! "इन्द्र !" यस्त्वम् "उभे" "रोदसी" द्यावापृथिव्यौ "अभि बभूथ" सामर्थ्येनाभि भवसि स त्वं "सुन्वतः" सोमाभिषवं कुर्वतः यजमानस्य "वृधः" वर्धकः "असि" । "दिवः" स्वर्गस्यापि "पतिः" ईश्वरोऽसि ॥२॥

अथ तृतीया ।

१र   २र   ३ १ २ ३ २   ३ १र   २र
त्वꣳहिशश्वतीनामिन्द्रदर्त्ता‡पुरामसि ।
३ २उ   ३ १ २ ३ १र   २र ३ २
हन्तादस्योर्मनोर्वृधःपतिर्हिवः ॥ ३ ¶ ॥ १९

---

* नैषपाठः क्वचिदप्युपलभ्यते ।

† ऋ० वे० ६, ७, १, ५ ।

‡ "धर्त्ता"—इति मु०-पाठः सायणसम्मतश्च परं बहुपुस्तकविरोधात् पदादि-ग्रन्थेऽपि एवमदर्शनाच्चोपेक्षणीयएव ।

¶ ऋ० वे० ६, ७, १, ६ ।

हे "इन्द्र!" "त्वं" "शश्वतीनां" बह्वीनां "पुरां" असुरनगरीणां "धर्त्ता असि हि" दारयिता भवसि खलु। किञ्च, "दस्योः" वृथाकालस्योपक्षेपयितुरसुरस्य "हन्ता" असि घातको भवसि "मनोः" मनुष्यस्य यागादि कुर्वतो "वृधः" वर्द्धकश्चासि। "दिवः" स्वर्गस्यापि "पतिः" ईश्वरोऽसि ॥ ३ ॥ १९

॥ साम्बर्त्तम् ॥ ए᳕न्द्रनो᳕२गधिप्राथा। सात्राजित्। अगोहायौ। होउवा। गिरायिर्न्नवौ। होउवा। स्वतः। पा᳕र्थू᳕२३४औहोवा ॥(१) अभिहिसा᳕रत्यसोमा यः। ऊर्भेवभू। थरोदासौ। हो ३ वा। इन्द्रासि सौ। होउवा। न्वतः। वा᳕र्द्धा᳕र ३ ४औहोवा ॥(२) तुवꣳ शश्वा᳕२श्वतायिनाम्। आयिन्द्रदर्त्ता। पुरामासौ। होउवा। हन्तादस्यौ। होउवा। मनोः। वा᳕र्द्धा᳕२ ३४औहोवा। पतिर्द्दि वा१ः(३) ॥ १२ * ॥ [१] १९

* ऊ० गा० ५प्र० १अ० १२सा०।

अथ तृचात्मके तृतीय-सूक्ते*—

प्रथमा ।

२ ३ २ ३ १र २र ३ १र २र १
पुराम्भिन्दुर्युवाकविरमितौजा अजायत।
१ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ २
इन्द्रोविश्वस्यकर्म्मणोधर्त्तावज्रीपुरुष्टुतः ॥ १ † ॥

अयम् "इन्द्रः" उच्यमान-गुणयुक्तो "अजायत" सम्पन्नः । कीदृग्गुणकः ? इति तदुच्यते—"पुराम्" असुर-पुराणां "भिन्दुः" भेत्ता "युवा" कदाचिदपि बली-पलितादि-वार्द्धक्य-रहितः "कविः" मेधावी "अमितौजाः" प्रभूत-बलः विश्वस्य कर्मणः कृत्स्नस्य ज्योतिष्टोमादेः "धर्त्ता" पोषकः "वज्री" यजमान-रक्षणार्थं सर्वदा वज्रयुक्तः "पुरुष्टुतः" बहुविधे तत्तत्कर्मणि स्तुतः ॥ भिन्दुः—भिदिर् विदारणे ( रु० प० ), कुरित्यनुवृत्तौ "मृ-भिदि-व्यधि-गृधि-धृषिभ्यः (उ० १, २३)"—इति कु-प्रत्ययः, तस्य "छन्दस्युभ यथा (३,४,११७)"—इति सार्वधातुक-सञ्ज्ञायां "रुधादिभ्यः श्नम् ( ३, १, ७८ )" मित्त्वादन्त्यादचः परो भवति, "श्नसोरल्लोपः (६,४,१११)" अनुस्वार-परसवर्णौ "अचः परस्मिन् पूर्वविधौ ( १, १, ५७ )"—इति प्राप्तस्य स्थानिवद्भावस्य "न पदान्तेत्यादिना (१, १, ५८) निषेधः । युवा—यु मिश्रणा-मिश्रणयोः ( अदा० प० ) "कनिन्युवृषितक्षिराजिधन्विद्युप्रति-

* 'मारुतं साम'—इति वि० ।

† ऋ० आ० ४, २, २, ८, ( १भा० ७३३पं० )=ऋ० वे० १, ११, ४ ।

दिवः (उ० १,१५४)''—इति कनिन् नित्त्वादाद्युदात्तः (६, १, १९७)। कविः—कु शब्दे (अदा० प०) "अचइरिति(उ०४,१३८) इः प्रत्ययस्वरः (३,१,३)। अमितः—अमित-शब्दस्याव्ययपूर्व-पदप्रकृतिस्वरम् (८,२,१) "बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वेन" तदेव शिष्यते। विश्वस्य—"अशूप्रुषीत्यादिना (उ०१,१४९) क्वन्, नित्त्वा-दाद्युदात्तः (६,१,१९७)। कर्मणा—अन्येभ्योऽपि दृश्यन्ते (३,२, ७५)"—इति मनिन् नित्स्वरः (६, १, १९७)। धर्त्ता—टच्, कित्त्वादन्तोदात्तः (६,१,१६५)। वज्री—मत्वर्थीय इनी (५, २, १२२), प्रत्यय स्वरः। पुरुष्टुतः—"स्तुतस्तोमयोश्छन्दसि (८,३, १०५)"—इति षत्वम् बहुषु प्रदेशेषु स्तुतः "थाथघञ्क्ताज-वित्रकाणाम् (६, २, १४४)"—इत्यन्तोदात्तत्वम्, तृतीया-समासे हि थाथादिस्वरापवादः, "तृतीया कर्मणि (६, २, ४८)"—इति पूर्वपदप्रकृतिस्वरः स्यात् ॥ १ ॥

अथ द्वितीया।

२ ३ २ ३ २ ३ १ २ ३ १ २
त्वंवलस्यगोमतोवावरद्रिवो बिलम्।
२ ३ १र २र ३ १ २
त्वान्देवाअभिभ्युषस्तुज्यमानासआविषुः॥ २ * ॥

[ वलनामकः† कश्चिदसुरो देवसम्बन्धिनीर्गा अपहृत्य कस्मिंश्चिद् बिले गोपितवान् तदानीमिन्द्रस्तद्बिलं समाहत्य

---

* ऋ० वे० १, ११, ५।

† 'बलोनाम दानवः, तस्मापिधान आसीत्' —इत्यादि वि०।

तस्माद् बिलाद् गाः निःसारयामास, तदिदमुपाख्यान मिन्द्रो बलस्य बलमौर्णोदित्यादि ब्राह्मणेषु मन्त्रान्तरेषु च प्रसिद्धम्, तदेतद्हृदि निधायायं मन्त्रः प्रवर्त्तते—]हे "अद्रिवः" वज्रयुक्तेन्द्र! त्वं "गोमतः बलस्य" गोभिर्युक्तस्य बलनामकस्यासुरस्य सम्बन्धि "बिलम्" "अपावः" स्व-सैन्य-मुखेनापाहृतवानसि। तदानीं "तुज्यमानासः" बलेन हिंस्यमानाः "देवाः" "अबिभ्युषः" त्वद्-वया रक्षया बलाद्भीताः सन्तः "त्वामाविषुः" प्राप्तवन्तः। अपेत्यस्य निपातत्वादाद्युदात्तत्वम्(फि०४,१२)। अवः—वृञ् वरणे (स्वा० उ०), लङ् सिप्, "इतश्च लोपः (३,४,९७)", "स्वादिभ्यः श्नुः (३, १, ७३)", तस्य बहुलञ्छन्दसि (२, ४, ७६)"—इति लुक्, गुणो रपरत्वम्, हल्ङ्यादि-लोपः, विसर्जनीयः, अडागमः। अद्रिवः—अद्रिरस्यास्तीति मतुप्, "छन्दसीरः (८,२, १८)"—इति वत्वम्, सम्बोधने "उगिदचामिति नुम् (७,१,७०), हल्ङ्याप्-संयोगान्त-लोपौ, "मतुवसो रुः सम्बुद्धौ छन्दसि (८,३,१)"—इति रुत्वम्। बिलं—"लघावन्तस्यानिसन्तस्येत्याद्युदात्तत्वम् (फि०२,३)। अबिभ्युषः—ञि भी भये(जुहो०प०)लिङ्, द्विर्भावः, अभ्यासस्य ह्रस्व-जश्त्वे,* "क्वसुश्च (३,२,१०७)"—इति लिटः क्वसुरादेशः, क्रयादिनियमात्, प्राप्त इट् "वस्वेकाजाद्घसाम् (७, २, ६७)"—इति नियमान्निवर्त्तते, जसि सर्वनामस्थाने-

* "अबिभ्युषः"—इति पाठस्तु न सार्वत्रिकः, जर्म्मन्मुद्रितपुस्तके क-पुस्तके च "अभिभ्युषः"—इति दर्शनात्।

ऽपि व्यत्ययेन भत्वाद् वसोः सम्प्रसारणम्, पर-पूर्वत्वम्, "शासि-वसिघसीनाञ्च (८,३,६०)"—इति षत्वम्, "अचि श्नु धात्वि-त्यादिना (६, ४, ७७) प्राप्तमियङादेशं बाधित्वा "एरनेकाच (६, ४, ८२)"—इति यणादेशः, नञ्समासः, अव्यय-पूर्वपद-प्रकृतिस्वरत्वम्। तुज्यमानासः—तुजेर्हिंसार्थात् परस्य कर्मणि लटः स्थाने शानच्, "सार्वधातुके यक् (३, १, ६७)"—इति यक् तस्माददुपदेशादुत्तरस्य लसार्वधातुकस्यानुदात्तत्वम् (६, १, १८६), यकएव प्रत्ययस्वरः शिष्यते। आविषुः—अव रक्षणादिषु, अस्माद् गत्यर्थाल्लुङो झेस्तस्य "सिजभ्यस्तविदि-भ्यश्च (३, ४, १०९)"—इति जुस्, सिच इड़ागमः, "आड़जा-दीनाम् (६,४,७२)"—इत्याड़ागमः, आदेश-प्रत्यययोः (८, ३, ५९)"—इति षत्वम्॥ २॥

अथ तृतीया।

२ ३ १ २ ३ १ २ ३ १र २र
इन्द्रमीशानमोजसाभिस्तोमैरनूषत।
३ २ ३१ २ ३ १ २ ३ २ ३ २ ३ १ २
सहस्रंयस्यरातयउतवासन्तिभूयसीः॥ ३ *॥ २०

"स्तोतारः" "ओजसा" बलेन "ईशानं" जगतो नियामकम् "इन्द्रम्" "स्तोमैः" त्रिवृदादिभिः "अभ्यनूषत" सर्वत्र स्तुवन्ति। "यस्य" इन्द्रस्य "रातयः" धन-दानानि "सहस्र" सहस्र-सङ्ख्यो-

* ऋ० वे० १, १, ११, ८

पेतानि सन्ति "उत वा" अथवा "भूयसीः"* सहस्र-सङ्ख्याकाः अप्यधिकाः "सन्ति"। तमिन्द्रमिति पूर्वेणान्वयः ॥

"स्तोमैः"-"स्तोमाः"—इति पाठौ ॥

इन्द्रम्—"ऋज्रेन्द्रे त्यादिना रन् (उ०२,२८), नित्त्वादाद्युदात्तः (६,१,१९७)। ईशानम्—लटः शानच् (३,२,१२४), "अदिप्रभृतिभ्यः शपः (२,४,७२)"—इति धातोरनुदात्तेत्त्वात् तास्यनुदात्तेदित्यादिना (६, १, १८६) शानचोऽनुदात्तत्वम्। ओजसा—नब्विषयत्वादाद्युदात्तः (फि० २, ३)। स्तोमैः—अर्त्ति-स्तुस्वित्यादिना (उ०१,१३७) मन् प्रत्ययः, नित्त्वादाद्युदात्तः (६, १, १९७)। अनूषत—णु स्तुतौ; "णो नः (६,१,६५), लङ् व्यत्ययेन, झः, तस्य अदादेशः, "च्लेः सिच् (३, १, ४४), अस्य धातोः कुटादित्वेन सिचो ङित्त्वाद् (१, २, १) गुणाभावः, इड़भावश्छान्दसः, अड़ागमः। सहस्रं—"कर्दमादीनाञ्च (फि० ३, ११)"—इति द्वितीयाक्षरमुदात्तम्। रातयः—"मन्त्रे वृषेषेत्यादिना (३,३,९६) क्तिनउदात्तः। उत—प्रातिपदिक-स्वरः (फि० १,१)। वा—चादिरनुदात्तः (फि०४,१६)। सन्ति—प्रत्ययाद्युदात्तत्वम्, (३, १, ३), "तिङ्ङतिङः (८, १, २८)"—इति निघातो न भवति "यद्वृत्तान्नित्यम् (८, १, ६६)"—

---

* 'भूयसीः रातयइत्यनुषज्यते'—इति वि०।

इति प्रतिषेधात्, सहि व्यवहितेऽपि भवतीत्युक्तम् । भूयसीः— सहस्रादतिशयेन बह्व्यः भूयस्यः, अत्र विभक्तस्य सहस्रस्य सन्निधिबलात् उपपदत्व-प्रतीतेर्द्विवचनं विभज्योपपदे तरबीयसुनाविति बहुशब्दादीयसुन्, "बहोर्लोपो भू च बहोः (६,४,१५८)"— इति इकार-लोपः, बहोर्भूइत्यादेशश्च, ईयसुनो निस्त्वादाद्युदात्तश्च, "उगितश्च (४, १, ६)"—इति ङीप् ॥ ३ ॥ २०

॥ मारुतम् ॥ पुराम्भिदुर्युवाकवीः। अमितौजाश्च जायार३ता। आयिन्द्रो॑विश्वा३। स्याकर्मा॑र२३४णाः। धर्त्ता। वाज्रौवाओ॒२३४वा। पुरु५ष्टु॒ताः॥(१) तुवम्बलस्यगोमताः। अपावरद्रिवोबा॒र३यिलाम्। त्वान्देवा३ः। आबिभ्यू२३४षाः। तुज्या। मानौवा॒ओ॒२३४वा। स॒आ५विषूः॥(२) इन्द्रमीशानमोजसा। अभिस्तोमैरनूषा२३ता। सहस्रन्या३। स्यारातार२३४याः। उता। वासौवा॒ओ॒२३४वा। निभू५यसीः। हो५ई। डा(३)॥१२*॥

---

* क० गा० ५प्र० १ख० ११सा०।

॥ महावैश्वामित्रम् * ॥ हयायि । हयाउ । ओहा ओहा । हयायि । हयाउ । ओहाओहा । हयायि । हयाउ । ओहाओहा । पुराम्भिन्दूः । युवाकावी २ः । अमितौजाः । अजायाता २ । इन्द्रोविश्वा । स्यकर्म्मा णा २ः । धर्त्तावज्री । पुरुष्टता २ः ॥(१) तुवम्बला । स्य गोमाता २ः । अपावरा । द्रिवोवायिला २म् । तुवा न्देवाः । अविभ्यूषा २ः । तुज्यमाना । सत्रावायिषू २ ॥(२) इन्द्रमीशा । नमोजासा २ । अभिस्तोमैः । अनूषाता २ । सहस्रया । स्यरातायो २ः । उतवासा । तिभूया सी २ः । हयायि । हयाउ । ओहाओहा । हयायि । हयाउ । ओहाओहा । हयायि । हयाउ । ओहाओ

* "वैश्वामित्रम्"—इति ख० पु० पाठः ।

५ २ ५ २ ५ २
हा । हो४ इडा । हो४ इडा । हो२३४५ई ।
डा(३) ॥ २० * ॥ [२] २०

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य नवमस्याध्यायस्य
नवमः खण्डः† ॥ ९ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः ॥ ९ ॥

॥ इति पञ्चमस्यार्द्धः प्रपाठकः ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-
श्रीवीर-बुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणा-
चार्य्येण विरचिते माधवीये सामवेदार्थ-प्रकाशे
उत्तराग्रन्थे नवमोऽध्यायः‡ ॥ ९ ॥

---

* ऊ० गा० २२प्र० २अ० १०सा० ।

† 'अष्टमखण्डः समाप्तम्'—इति वि० ।

‡ 'पञ्चमस्य प्रपाठकस्य प्रथमोऽध्यायः समाप्तः'—इति वि० ।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ १० ॥

## ॥ अथ दशमोऽध्याय आरभ्यते* ॥

तत्र,

अक्रान्त्समुद्र इति त्र्यृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा ।

१ २ ३ १ २ ३ १र १र
अक्रान्त्समुद्रःप्रथमे विधर्म्म

२ १ २ ३ १र २र ३ २
ञ्जनयन्प्रजाभुवनस्यगोपाः ।

१ २ ३ २ ३ २ ३ २ ३ १ २
वृषापवित्रे अधिसानोअव्ये

३ १र २र ३ १र २र
बृहत्सोमोवावृधेस्वानोअद्रिः ॥ १ † ॥

"समुद्रः" [ यस्मादापः सन्द्रवन्ति स समुद्रः ] अपां वर्षकः, "गोपाः" स्वामित्वेन सर्वस्य रक्षकः सोमः "प्रथमे" विस्तृते "भुव-

---

* 'इदानीं नवमस्तः अष्टाचत्वारिंशमुच्यते। तत्र च ब्राह्मणेन गायत्र-प्रभृतीनां साम्नामार्षेयमुक्तम्'—इति वि० ।

† छ० आ० ६, १, ४, ७ (२भा० १२१पृ०) = ऋ० वे० १७, ४, १८, ५।

नस्य" उदकस्य "वि धर्म्मन्" विधारकेऽन्तरिक्षे प्रजाः "जनयन्" उत्पादयन् "अक्रान्" सर्वमभिक्रामति [क्रमतेर्लुङि तिपीड़भावे वृद्धौ च कृतायां सिज्लोपे मकारस्य "मोनोधातोः (८, २, ६४)" —इति नकारे रूपम् ]; "वृषा" कामानां वर्षिता, "स्वानः" अभिषूयमाणः, "अद्रिः" आदरणशीलः, "सः" सोमः अधिकं "सानौ" समुच्छ्रिते अविभवे पवित्रे "बृहत्" प्रभूतं "वव्वधे" वर्द्धते ॥

"गोपाः"-"राजा"—इति पाठौ, "अद्रिः"-"इन्दुः"—इति च ॥ १ ॥

अथ द्वितीया।

१ २ ३ २ ३ २ ३ १ २ १
मत्सिवायुमिष्टयेराधसेनो
१ २ ३ १र २र ३ १ २
मत्सिमित्रावरुणापूयमानः।
२ ३ २ ३ १ २ ३ १ २ ३ २उ
मत्सिशर्द्धोमारुतम्मत्सिदेवान्
३ १ २ ३ १ २
मत्सिद्यावापृथिवीदेवसोम ॥ २ * ॥

हे सोम! त्वं वायुं "मत्सि" मादय। किमर्थम्? "नः" अस्माकम्† "इष्टये" ईषणीयाय अन्नाय "राधसे" धनाय च। तथा पवित्रेण पूयमानस्त्वं "मित्रावरुणा" मित्रावरुणौ च

* ऋ० वे० ७, ४, १९, २।

† 'नः—अस्मभ्यम्'—इति वि०

"मत्सि" तर्पयसि । किञ्च "मारुतं" मरुतां सम्भूतं मरुद्बलञ्च मत्सि । तथा "देवान्" इन्द्रादीन् "मत्सि" तर्पय । हे "देव" स्तोतव्य ! हे सोम ! "द्यावापृथिवी" च "मत्सि" मादय । एतान् हर्षयुक्तान् कृत्वा अस्मभ्यं धनं प्रयच्छेत्यर्थः ॥

"राधसेनः"-"राधसेव"—इति पाठौ ॥ २ ॥

अथ तृतीया ।

२ ३१र  ३२  ३ १ २  १
महत्तत्सोमोमहिषश्चकारा

१ २र  ३२  ३ १
पांयद्गर्भोऽवृणीतदेवान् ।

१ २ ३  २ ३  १ २  ३ १र
अदधादिन्द्रेपवमानओजो

२र ३ १ ३ २ ३ १ २
ऽजनयत्सूर्येज्योतिरिन्दुः ॥ ३ * ॥ १

"महिषः" महान् पूज्यो वा सोमः "महत्" प्रभूतं तत् कर्म "चकार" अकरोत् । किन्तत् कर्म ? "अपां गर्भः" उदकानां गर्भभूतः [ जनयितृत्वाज्जन्यत्वाच्च ] "सः" सोमः "देवान्" "अवृणीत" समभजत—इति यत् तत् कृतवानिति । किञ्च, "पवमानः" पूयमानः सोमः "ओजः" तत्पानेन जन्यं बलम् "इन्द्रे" "अदधात्" । तथा "इन्दुः" "सूर्ये" "ज्योतिः" तेजः "अजनयत्" ॥ ३ ॥ १

* ऋ० सा० ६, १, १, ६ (२भा० १७५४०) = ऋ० वे० ७, ४, १९, १ ।

॥ हाउक्ववायिवासिष्ठम् ॥ हायि। उक्ववायि। अ

क्रा३४औहोवा। सम्। द्रा३:प्रय। मेविधर्म्मान्। ज

ना३४औहोवा। यन्प्रा। जा३मुव। नस्यगोपाः। वृ

षा३४औहोवा। पवायि। न्वे३अधि। सानोअव्यायि।

वृहा३४औहोवा। सोमो। वावृधे। स्वा३४३। नो३

आ५द्रा६५६यिः॥(१) मत्सा३४औहोवा। वायूम्। इष्ट

येराधसेनाः। मत्सा ३ औहोवा। मित्रा। वरुणा।

पूयमानाः। मत्सा३४औहोवा। शर्द्धो। मारुतम्। म

त्सिदेवान्। मत्सा३४औहोवा। द्यावा। पृथिवी। हा

३४३यि। वा३सो५मा६५६॥(२) महा३४औहोवा। त

त्सो। मो३महि। पश्वकारा। अपा३४औहोवा। य

द्धा। भो३अनु। णीतदेवान्। अदा३४औहोवा। धा

२ १ २ ३ ४ ५ २
हायि । द्रे३पव । मानश्चोजाः । हायि । उक्थायि ।
२ १ २र ४र ५ १ २र १ र २ १
अजा३४औहोवा । नयात् । हरियि । ज्यो३४३ । ती
४
३रा५यिन्दू६५६ः(२) ॥ १ * ॥ [१]

२र र २ र
॥ महासामराजम् ॥ हाउहोवा३हायि । आक्रान्
१ २ ३ २ ३ १ १ १ १ १ ३र
समुद्रा३प्रा । थमे३वी३ । धर्म्मा२३४५न् । जनयन्प्रजा
१ २ ३ २र ३ १ १ १ १ १ २ र ३र १
३भू । वना३स्या३ । गोपा२३४५ ॥(१) वृषापवित्रे३त्रा ।
२ ३ २ ३ १ १ १ १ २ र ३र १ २
धिसा३नो३ । अव्या२३४५यि । बृहत्सोमो३वा । वृधे
३ २र २ र २ २र
सू३वा३ । नोअद्रा२२३ ॥(१) मत्सिवायू३मायि । इष्टये
३ २र ३ १ १ १ १ १ २ ३र १ २ र ३
रा३धा३ । सेना२३४५ः । मत्सिमित्रा३वा । वरुणापू३या
२र ३ १ १ १ १ २ ३र १ २ ३
३ । माना२३४५ः । मत्सिमर्द्धी३मा । रुतम्मा३स्तो३ ।
२र ३ १ १ १ १ २ र ३र १ २र ३ २र
देवान्३४५न् । मत्सिद्यावा३पा । थिवीदे३वा३ । सो
२ र ३र १ २ ३ २र ३
मा३२३ ॥(१) महन्त्सोमो३मा । हिषा३स्वा । कारा

* ऊ० गा० १७५० १७६० १७७० ।

अद्धादिन्द्रे पवमा ३४३ नओजाः । हाउहोवा३हायि ।
अजनयत्सूर्य्ये ज्यो ३४३ तिरिन्दुः । तिरा ५ यिन्दाउ ।
वा(३) ॥ ८ * ॥ [३]

॥ वात्सप्रम् ॥ होई २ । ३ । अक्रान्त्समुद्रःप्रथ । मे
विधार्म्मा२न् । धार्म्मा२न् । धार्म्मा२न् । जनयन्प्रजा
भुव । नस्यगोपा२ः । गोपा२ः । वृषापवित्र अधिसा ।
नोअव्या२यि । आव्या२यि । आव्या२यि । बृहत्सो
मोवावृधेसुवा । नोआद्रा२यि । आद्रा२यि । आद्रा
२यि ॥(१) मत्सिवायुमिष्टये । राधसेना२ः । सेना२ ।
सेना२ः । मत्सिमित्रावरुणा । पूयमाना२ः । माना
२ः । माना२ः । मत्सिशर्द्धोमारुतम् । मत्सिदेवा२
न् । देवा२न् । देवा२न् । मत्सिद्यावापृथिवी । देव

* ऊ० गा० २१प्र० १ख० ५सा० ।

१ १ १ १ १ र १र १ ५ १र २ १ १ १ १
२३४५ । अपायद्गर्भो२श्चा । वृणी३ता३ । देवा२३४५न् ।

२ र १र १ २ ५ २र २ १ १ १ १ २र
अदधादिन्द्रे३पा । वमा३ना२ः । ओजा२३४५ः । हा

र २ १र १ १र ४ १
उहोवा२हायि । अजनयत्सू३री । येज्यो३ती२ः । इ

१ १ १
न्द्रा३२उवा३४५(इ) ॥ ५ * ॥ [२]

२र र २ र
॥ वैश्वज्योतिषोत्तरम् ॥ हाउहोवा२हायि । अक्रा

२ ३ ४ २ र २
न्त्समुद्रः प्रथमे२३४३विधर्म्मन् । जनयन्प्रजाभुवना ३ ४ इस्य

२र ५र २र र २र ३ ५ २ र
गोपाः । वृषापवित्रे अधिसा२३४३नो अव्यायि । बृहत्सो

र र र ३र ३ ५ ४र १
मोवावृधेसुवा२३४३नो अद्रायि । नोवा५द्राउ ॥(१) मत्सि

र र २ ३र ५ २ र र २ ३र
वायुमिष्टये रा३४३ध सेनः । मत्सि मित्रावरुणापू३ ४ ३यमा

५ २ र र २ ३र ५र २ र र
नः । मत्सि शर्द्धो मारुतम्मा३४३त्सि देवान् । मत्सिद्यावा

र २ ३र ५ ३ २ र र
पृथिवीदे३४३वसोम । वसो५माउ ॥(२) महत्तत्सोमो

२ ३र ५ र २ ३ ५
महिषा३४३श्चकारम् । अपांयद्गर्भो अवृणी३४३तदेवान् ।

---

* क० गा० २३प्र० २अ० ५गा० ।

अदधादिन्द्रे पवमा २३४ न ओजाः । हाउहोवा३हायि ।

अजनयत्सूर्य्ये ज्यो ३ ४ ३ तिरिन्दुः । तिरा ५ यिन्दाउ ।

वा(३) ॥ ८ * ॥ [३]

॥ वात्सप्रम् ॥ होई २ । ३ । अक्रान्त्समुद्रः प्रथ । मे

विधार्म्मा २न् । धार्म्मा २न् । धार्म्मारन् । जनयन्प्रजा

भुव । नस्यगोपा २ः । गोपा २ः । वृषापवित्र अधिसा ।

नो आव्या २यि । आव्या २यि । आव्या २यि । बृहत्सो

मोवावृधेसुवा । नो आद्रा २यि । आद्रा २यि । आद्रा

२यि ॥(१) मत्सिवायुमिष्टये । राधसेना २ः । सेना २ ।

सेना २ः । मत्सिमित्रावरुणा । पूयमाना २ः । माना

२ः । माना २ः । मत्सिशर्द्धोमारुतम् । मत्सिदेवा २

न् । देवा २न् । देवा २न् । मत्सिद्यावापृथिवी । देव

---

* ऊ० गा० २२प० १९प्र० ८खा० ।

१ १ १ १ १ १र २
सोमा२। सोमा२। सोमा२॥(२) महन्तत्सोमोम

१ १ १ २र २
हि। षश्वकारा२। कारा२। कारा२। अपायद्ग

र र १ १ १
र्भोश्रवृ। णीतदायिवा२न्। दायिवा२न्। दायिवा

१ २र १ २र १ २र १ १
२न्। अदधादिन्द्रे पव। मानओजा२ः। ओजा२ः।

१ १ २ १र २र १र २ १ १
ओजा२ः। अजनयन्त्सूर्य्येज्यो। तिरायिन्दू२ः। आ

१ १ १ २
यिन्दू२ः। आयिन्दू२ः। होई२।२। होया२। वा

५र र ३१११११
२३४औहोवा। ई२३४५(३)॥ ८*॥ [४] १

अथैषदेवद्रुति दशर्च्चं द्वितीयं सूक्तम्,

तत्र प्रथमा ।

३ २ ३ ५र २र ३ १ २
एषदेवोअमर्त्यःपर्णवीरिवदीयते ।

३ १र २र ३ १ २
अभिद्रोणान्यासदम् ॥ १ † ॥

"देवः" द्योतमानः "अमर्त्यः" मरण-रहितः "एषः" सोमः "द्रोणानि" द्रोणकलशान् "अभि" लक्ष्य "आसदम्" आसत्तुम्

---

* ऊ० गा० १३प्र० २अ० ८सा० ।

† ऋ० वे० ६, ७, १०, १ ।

आसदनार्थम् "पर्णवीरिव"* यथा पक्षी तथा वेगेन "दीयते" गच्छति ॥

"दीयते"–"दीयति"—इति पाठौ ॥ १ ॥

अथ द्वितीया ।

२ ३ १ २र ३ १ २ ३ २ ३ १र २
एषविप्रैरभिष्टुतोपोदेवोविगाहते ।

२ ३ १ २ ३ १ २
दधद्रत्नानिदाशुषे ॥ २ † ॥

"विप्रैः" मेधाविभिः स्तोतृभिः "अभिष्टुतः" आभिमुख्येन स्तुतः "देवः" द्योतमानः "एषः" सोमः "दाशुषे" हविषां प्रदात्रे यजमानाय "रत्नानि" रमणीयानि धनानि "दधत्" धारयत् प्रयच्छत्। "अपः" वसतीवरीः "वि गाहते" प्रविशति ॥ २ ॥

अथ तृतीया ।

३ १र २र ३ २ ३ २ ३ १ २ ३ १ २
एषविश्वानिवार्य्याशूरोयन्निवसत्वभिः ।

१ २
पवमानःसिषासति ॥ ३ ‡ ॥

---

* 'पर्णवीरिव—पर्णवानिव, पूतिका पर्णवान् भवति, तथाप्येके अभिषव निष्कृमि तमप्यभिपूयमाणं पर्णवन्तं सोमं'—इत्यादि वि० ।

† ऋ० वे० ६, ७, १०, २ ।

‡ ऋ० वे० ६, ७, २० ३ ।

"पवमानः" पूयमानः "शूरः" वीरः "एषः" सोमः "विश्वानि" सर्वाणि "वार्या" वरणीयानि धनानि* "सत्वभिः" बलैः "यन्ति च" गच्छन्ति च "सिषासति" अस्मदर्थं सम्भक्तुमिच्छति ॥ ३ ॥

अथ चतुर्थी ।

३ २ ३ २ २ ३ १ २
एषदेवोरथर्यतिपवमानोदिशस्यति ।
३ १ २ १ २
आविष्कृणोतिवग्वनुम् ॥ ४ † ॥

"पवमानः" क्षरन्नेव सोमो "देवः" "रथर्यति" अस्मदीयं यागं प्रत्यागमनाय रथं कामयते‡ ॥

"दिशस्यति"-"विशस्यति"—इति पाठौ ॥ ४ ॥

अथ पञ्चमी ।

३ २ ३ १ २ ३ २ ३ १ २ २ १ २
एषदेवोविपन्युभिःपवमानऋतायुभिः ।
२ ३ १ २
हरिर्वाजायमृज्यते ॥ ५ ¶ ॥

---

* 'वार्या—उदकानि'—इति वि० ।

† ऋ० वे० ६, ७, २०, ४ ।

‡ 'रथर्यति—रथैर्याति'—इति वि० ।

¶ ऋ० वे० ६, ७, २०, ५ ।

"पवमानः" क्षरन् "एषः" "सोमः" "देवः" "विपन्युभिः" स्तोतृभिः "ऋतायुभिः" यज्ञ-कामैः सत्य-कामैर्वा* "हरिः" अश्व इव "वाजाय" सङ्ग्रामार्थं "मृज्यते" स्तुतिभिरलङ्क्रियते ॥५॥

अथ षष्ठी ।

२ १ २ २ २ १ ३ २ ३ १ २
एषदेवोविपाकृतोतिह्वराᳬसिधावति ।
१ २ ३ १ २
पवमानोअदाभ्यः ॥ ६ † ॥

"विपा" [—अङ्गुलिनामैतत् (निघ० २, ५, ८)] अङ्गुल्या "कृतः" अभिषुतः "एषः" सोमः "देवः" "पवमानः" क्षरन् "अदाभ्यः" केनाप्यहिंसितश्च सन् "ह्वरांसि" शत्रून् "वि धावति" हन्तुमभिगच्छति ॥ ६ ॥

अथ सप्तमी ।

२ २ ३ १ १ २ ३ १ २ २ २ ३ १ २
एषदिवंविधावतितिरोरजाᳬसिधारया ।
१ २ ३ १ २
पवमानःकनिक्रदत् ॥ ७ ‡ ॥

"धारया" "पवमानः" क्षरन् "एषः" सोमः "कनिक्रदन्" अभिषूयमाणः शब्दं कुर्वन् "रजांसि" लोकान् "तिरः" तिरस्कुर्वन् यज्ञात् "दिवं" स्वर्गं प्रति "वि धावति" ॥ ७ ॥

---

* 'ऋतायुभिः—ऋतो यज्ञः, तं युञ्जन्ति ऋतायवः ऋत्विजः तैः'—इति वि० ।

† ऋ० वे० ६, ७, २१, १ ।

‡ ऋ० वे० ६, ७, २१, २ ।

अथाष्टमी।

२२उ २ १ २ २ २उ ३ १ २
एषदिवंव्यासरत्तिरोरजाꣳस्यस्तृतः।
१ २ ३ २
पवमानःस्वध्वरः॥ ८ *॥

"पवमानः" क्षरन् "एषः" सोमः "स्वध्वरः" सुयज्ञः "अस्तृतः" केनाप्यहिंसितश्च सन् "रजांसि" लोकान्† "तिरः" तिरस्कुर्वन् यस्मात् "दिवं" प्रति "व्यासरत्" विसरति गच्छति ॥ ८ ॥

अथ नवमी।

३ २ ३ २ ३ १ २ ३ २ ३ १ २ᶺ ३ २
एषप्रत्नेनजन्मनादेवोदेवेभ्यःसुतः।
१ २ ३ १ २
हरिःपवित्रेअर्षति॥ ९ ‡॥

"हरिः" हरितवर्णः "देवः" द्योतमानः "एषः" सोमः "प्रत्नेन" पुराणेन "जन्मना" जननेन "देवेभ्यः" देवार्थं "सुतः" अभिषुतः सन् "पवित्रे" स्थातुम् "अर्षति" गच्छति ॥ ९ ॥

---

* ऋ० वे० ६, ७, २१, ३।

† 'रजांसि—त्रयी लोकास्तेषाम् अधस्तात् धावति'—इति वि०।

‡ इह च १,२,१७,१ (१भा० २६१पृ०)=ऋ० वे० ६, ७, २१, ४।

अथ दशमी।

२ ३ २ १ २ ३ १ २ ३ २ ३ १ १ १ २
एषउस्यपुरुव्रतोजज्ञानोजनयन्निषः।
१ २ ३ २
धारयापवतेसुतः॥ १० *॥ २

"एष उ स्यः" एष च स सोमः "पुरुव्रतः" बहुकर्मा "जज्ञानः" जायमान एव "इषः" अन्नानि "जनयन्" उत्पादयन् "सुतः" अभिषुतः "धारया" "पवते" क्षरति॥ १०॥ २

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य दशमस्याध्यायस्य प्रथमः खण्डः† ॥ १॥

---

अथ द्वितीये खण्डे—एषधियेत्यष्टर्चं ‡ सूक्तम्,

तत्र प्रथमा।

३ १ ३ २ ३ २ ३ २ ३ २ १ २ ३ १ २
एषधियायात्यण्व्याशूरोरथेभिराशुभिः।
२ ३ १ २ ३ २
गच्छन्निन्द्रस्यनिष्कृतम्॥ १ ¶॥

---

* ऋ० वे० ६, ७, २१, ५।

† 'उक्तो दशर्चः'—इति वि०।

‡ 'इदानीमष्टर्चः, इदानीं षड़्चा भवन्ति, यथानुक्रमः षड़्चः, तृच क्रमः'—इति वि०।

¶ ऋ० वे० ६, ८, ५, १।

"एषः" सोमः "शूरः" विक्रान्तः "अगव्या" अङ्गुल्या* अभिषुतः "धिया" कर्मणा अतिगच्छति। कीदृशम्? इति उच्यते —"इन्द्रस्य" "निष्कृतं" स्थानं स्वर्गाख्यं प्रति "आशुभिः" शीघ्रगामिभिः "रथेभिः" रथैः "गच्छन्" इन्द्रेण रथेऽवस्थाप्य स्व-स्थान-नयनाङ्गुल्या अभिषूयमाणः सन् होम-द्वारा अग्निं गच्छतीत्यर्थः॥ १॥

अथ द्वितीया।

१२३२ २ ३२३१२
एषपुरुधियायतेबृहतेदेवतातये।
२ ३ १ २ ३ १ २
यत्रामृतासआशत॥ २ ॥

"एषः" सोमः "पुरु" बहुलं, "धियायते" धियं कर्म्म इच्छति [धी-शब्दात् याकारोपजनः(७,१,३९)। यद्वा द्वितीयार्थे तृतीया, (३,१,८५)छान्दसयालुक्]। कस्मै? "बृहते" महते "देवतातये" यज्ञाय "यत्र" यस्मिन् यज्ञे "अमृतासः" अमृताः देवाः "आशत" व्याप्नुवन्ति तदर्थम्॥

"आशत"-"आसत"—इति पाठौ॥ २॥

* 'अगव्या—सूक्ष्मतमया'—इति वि०।

अथ तृतीया ।

२ १ २ ३ २ ३ २ ३ १ २ ३ १ २
एतम्मृजन्तिमर्ज्यमुपद्रोणेष्वायवः ।
३ २ ३ १र २र
प्रचक्राणम्महीरिषः ॥ ३ * ॥

"आयवः" मनुष्याः ऋत्विजः "एतं" सोमं "मर्ज्यम्" "उप मृजन्ति" निष्पीड़यन्तीत्यर्थः । कुत्र ? "द्रोणेषु" द्रोणकलशेषु । कीदृशम् ? "महीः इषः" महान्त्यन्नानि† "प्रचक्राणं" कुर्वाणं प्रभूत-रस-स्राविणमित्यर्थः ॥ ३ ॥

अथ चतुर्थी ।

३ २ ३ १र २र ३ २ ३ १ २ ३२
एषहितोविनीयतेन्तःशुभ्यावतापथा ।
१ २ ३ २ ३ १ २
यदीतुञ्जन्तिभूर्णयः ॥ ४ ‡ ॥

"एषः" सोमः "हितः" निहितिः हविर्द्धाने "वि नीयते" तस्मात् स्थानात् आहवनीयं प्रति "अन्तः" तयोर्मध्यदेशे "शुभ्यावता" शुद्धिमता "पथा" मार्गेण "यदि" यदा "तुञ्जन्ति" प्रयच्छन्ति देवेभ्यः "भूर्णयः" भरणशीलाः¶ अध्वर्य्यादयः; तदा विनीयत इति समन्वयः ॥

"शुभ्यावता"-"शुभ्रावता"—इति पाठौ ॥ ४ ॥

---

* ऋ० वे० ६, ८, ५, ७ ।

† 'इषः—धानाः, करम्भः, पुराडाशः'—इति वि० ।

‡ ऋ० वे० ६, ८, ५, ३ ।

अथ पञ्चमी।

२ ३ २ १ २ २ २ ३ १ २ २ १ २
एषरुक्मिभिरीयतेवाजीशुभ्रेभिरंशुभिः।
२ ३ १ २ ३ १ २
पतिःसिन्धूनाम्भवन्॥ ५ *॥

"एषः" सोमः "रुक्मिभिः" अध्वर्य्वादिभिः† सह "ईयते" गच्छति। कीदृश एषः? "वाजी" वेगवान् "शुभ्रेभिः दीप्तैः अंशुभिर्विशिष्टः [अथवा रुक्मिभिरित्येतदप्यंशु-विशेषणम्] "सिन्धूनां" स्यन्दमानानां रसानां "पतिः" "भवत्" नीयतइति॥ ५॥

अथ षष्ठी।

३ १ २ २ २ ३ १ २ ३ १ २ ३ २ १ २
एषशृङ्गाणिदोधुवच्छिशीतेयूथ्योऽवृषा।
३ १ २ २ २ ३ १ २
नृम्णादधानओजसा॥ ६ ‡॥

"एषः" सोमः "शृङ्गाणि"¶ शृङ्गवदुन्नतानंशून् अभिषवकाले "दोधुवत्" धुनोति "यूथ्यः" यूथार्हो यूथपतिः "वृषा" वृषभः यथा "शिशीते" तीक्ष्णे शृङ्गे धुनोति तद्वत्। कीदृशः? "ओजसा" बलेन "नृम्णा" नृम्णानि धनानि "दधानः" अस्मदर्थं धारयन्॥ ६॥

---

* ऋ० वे० ६, ८, ५, ५।

† 'रुक्मिभिः—सुवर्णहस्तैर्ऋत्विग्भिः'—इति वि०। वस्तुतो रुक्मी यजमानः, तदाह कात्यायनः—"रुक्म मधः पदं कुरुते स्तोत्रयोरिति (१५, ५, २६)"—इत्याद्यनुसन्धेयम्। ‡ ऋ० वे० ६, ८, ५, ४।

¶ 'बहुवचनं द्विवचनस्य स्थाने द्रष्टव्यम् शृङ्गे'—इति वि०।

अथ सप्तमी।

३ १र २र ३ १र २र ३ १र २र
एषवसूनिपिब्दनःपरुषाययिवाꣳअति।
१ ३ १ २
अवशादेषुगच्छति ॥ ७ * ॥

"वसूनि" आच्छादकानि रक्षांसि "पिब्दनः" पीड़यन्† "एषः" सोमः "परुषा" पर्वणा "अति" अतिक्रम्य "ययिवान्" गच्छन् "शादेषु" शातनीयेषु रक्षःसु "अव गच्छति"‡ ॥

"पिब्दनः"–"पिब्दना"—इति पाठौ ॥ ७ ॥

अथाष्टमी।

२ ३ ३ २उ १ २ ३ १ २ ३ १ २
एषमुत्यन्दशक्षिपोहरिꣳहिन्वन्तिपातवे।
३ १ ३ १ २
स्वायुधम्मदिन्तमम् ॥ ८ ¶ ॥ ३

"हरिं" हरितवर्णं "त्यं" तम् "एतम्" एतमेव§ सोमं "दश क्षिपः" दश-सङ्ख्याका अङ्गुलयः‖ "यातवे" गमनाय**

---

* ऋ० वे० ९, ८, ५, ६।

† 'पिब्दनः—पिबमानः, सोमलक्षणानि'—इति वि०।

‡ 'बलात्कारेण'—इति वि०।

¶ ऋ० वे० ९, ८, ५, ८।

§ 'उ—इति पदपूरणं'—इति वि०।

‖ 'दशक्षिपः—सर्वसमर्था अङ्गुल्यः'—इति वि०।

** 'यातवे—प्रापणार्थम्'—इति वि०।

"हिन्वन्ति" प्रेरयन्ति। कीदृशमेनम्? "स्वायुधं" शोभनायुधं* "मदिन्तमं" मादयितृतमं रक्षोहनन-प्रदर्शनाय स्वायुध-शब्द-श्रवणम्॥

"हरिंहिन्वन्तियातवे"-"मृजन्तिसप्तधीतयः"—इति पाठौ ॥ ८ ॥ ३

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य दशमस्याध्यायस्य द्वितीयः खण्डः ॥ २ ॥

---

अथ तृतीय-खण्डे--

एषउस्येति षडृचं सूक्तम्,

तत्र प्रथमा।

३ २ ३ २उ ३ २उ ३ १ २
एषउस्यवृषारथोव्यावारेभिरव्यत।
२ ३ १ २ ३ १ २
गच्छन्वाजꣳसहस्रिणम् ॥ १ † ॥

"स्यः" सः प्रसिद्धः "एषः" अभिषुतः सोमः "वृषा" वर्षिता "रथः" रंहण-स्वभावः "अव्यावारेभिः" अवेर्वालैः दशापवित्रेण "अव्यत" द्रोणकलशं प्रति गच्छति "वाजम्" अन्नम् "सहस्रिणं"

---

* 'स्वायुधं—शोभनैर्यज्ञायुधैर्युक्तम् अथवा परशु-पाश-प्रभृतिभिः'—इति वि०।
† ऋ० वे० ९, ८, २८, १।

सहस्र-सङ्ख्याकं यजमानाय प्रदातुं "गच्छन्" द्रोणकलशं प्रविशन्नर्षतीत्यर्थः* ॥

"अव्यावारेभिरव्यत"-"अव्योवारेभिरर्षति"—इति पाठौ ॥ १ ॥

अथ द्वितीया।

३२ ३ २ ३ १ २ ३ १ २ ३ १ २
एतन्त्रितस्ययोषणोहरिꣳहिन्वन्त्यद्रिभिः।

२ ३ १ २ ३ १२
इन्दुमिन्द्रायपीतये ॥ २† ॥

"एतम्" "इन्दुं" "हरिं" हरितवर्णं सोमं "त्रितस्य" एतन्नामकस्य ऋषेः "योषणः" अङ्गुलयः‡ "अद्रिभिः" अभिषव-पाषाणैः "हिन्वन्ति" प्रेरयन्ति। किमर्थम्? "इन्द्राय" इन्द्रस्य "पीतये" पानाय ॥ २ ॥

अथ तृतीया।

३२ २र ३ २ ३ २उ ३ १ २
एषस्यमानुषीष्वाश्येनोनविक्षुसीदति।

१ २ ३ २उ ३ १२
गच्छञ्जारोनयोषितम् ॥ ३¶ ॥

"स्यः" सः "एषः" सोमः "मानुषीषु" "विक्षु" प्रजासु "श्येनो न" श्येनइव शीघ्रमागम्य यजमानरूपासु अनुग्रहेण "आ"

* अत्र ऋचि 'उ—इति पदपूरणः'—इति वि०।

† ऋ० वे० ६, ८, २२, ३—९, ८, २८, २।

‡ 'योषणः—ऋत्विजः'—इति वि०।

¶ ऋ० वे० ६, ८, २८, ४।

आगत्य "सीदति"। पुनः कइव? "योषितं" "गच्छन्" अभिगच्छन् "जारो न" जार इव [स यथा सङ्केततः तस्याः काम-पूरणीय-गूढ़-गतिः तद्वदित्यर्थः]॥ ३॥

अथ चतुर्थी।

३ २उ ३ १ २र ३ १र २र
एषस्यमद्योरसोवचष्टे दिवःशिशुः।

२उ ३ २ ३ १ २
यइन्दुर्वारमाविशत्॥ ४ *॥

"स्यः" सः "एषः" "मद्यः" मद-निमित्तः "रसः" "अवचष्टे" सर्वमेव पश्यति "दिवः शिशुः" द्युलोकस्य पुत्रः [तत्रोत्पन्नत्वात् पुत्रत्वमस्य]। "यः" "इन्दुः" दीप्तः सोमः "वारं" दशापवित्रम् "आविशत्" आविशति स एष इति॥ ४॥

अथ पञ्चमी।

३ २उ ३ १ २ ३ १र २र ३ २
एषस्यपीतये सुतोहरिरर्षतिधर्णसिः।

२ ३ १ २ ३ २ ३ २
क्रन्दन्योनिमभिप्रियम्॥ ५ ‡॥

"एषः" "स्यः" सः सोमः "पीतये" पानाय "सुतः" अभिषुतः "हरिः" हरितवर्णः "प्रियं"† स्व-प्रियभूतं "योनिं" स्थानं द्रोणकलशं "क्रन्दन्" शब्दयन् "अभ्यर्षति" अभिगच्छति॥ ५॥

---

* 'अवचष्टे—अवचरति, दिवः—द्युलोकात्, शिशुः—शंसनीयः'—इति वि०।

† ऋ० वे० ६, ८, २८, ५।

‡ 'अभिप्रियम्—अभिरूपम्'—इति वि०।

अथ षष्ठी।

१ २उ　३ २ ३ १२　३ १ २　३ १ २
एतन्त्यꣳहरितोदशमर्म्मृज्यन्त्यपस्युवः।
२　३ १ २　३ १ २
याभिर्मदायशुम्भते॥ ६ * ॥ ४

"एतं" "त्यं" तं सोमम् अध्वर्योः "दश" "हरितः" हरणस्वभावाः अङ्गुलयः "अपस्युवः" कर्म्मेच्छवः सत्यः "मर्म्मृज्यन्ति" शोधयन्ति। "याभिः" अङ्गुलिभिरिन्द्रस्य "मदाय" "शुम्भते" दीप्यते शोध्यतइत्यर्थः; तमेतमिति सम्बन्धः॥ ७॥ ४

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य दशमस्याध्यायस्य तृतीयः खण्डः॥ ३॥

---

अथ चतुर्थ-खण्डे—

एषवाजीइति षडृचं सूक्तम्,

तत्र प्रथमा।

३ १ २　१ ३ १२ ३२　३ १२　३२ ३ १　२
एषवाजीहितोनृभिःविश्वविन्मनसस्पतिः।
२ ३ ३ ३ १ २
अव्यंवारंविधावति॥ १ † ॥

---

* ऋ० वे० ९, ८, २८, ६।

† ऋ० वे० ९, ८, २८, १।

"एषः" सोमः, "वाजी" वेजन-शीलः, "हितः" अध्वर्युणा पात्रे निहितः धृतः, "विश्ववित्" सर्वज्ञः, "मनसः" स्तोत्रस्य "पतिः" स्वामी [ अथवा सोमस्य मनोऽभिमानित्वात् मनसः स्वामित्वम्, "चन्द्रमा मनो भूत्वा हृदयं वा विशत्"—इति श्रुतेः ; तादृशोऽसौ ] "अव्यं वारं" अवि-सम्बन्धिनं वालं दशापवित्रं "वि धावति" विविधं गच्छति ॥

"अव्यम्"-"अव्ये"—इति पाठौ ॥ १ ॥

अथ द्वितीया।

३ २ ३ १ २   ३ १ २ ३ १ ३ १ २
एषपवित्रेअक्षरत्सोमोदेवेभ्यःसुतः।
२ ३ १ २   ३ २
विश्वाधामान्याविशन्॥ २ * ॥

"एषः" सोमः "देवेभ्यः" देवार्थं "सुतः" अभिषुतः सन् पवित्रे "अक्षरन्" स्रवन् "विश्वा" सर्वाणि "धामानि" देव-शरीराणि "आ विशन्" प्रविशन् प्रवेष्टुमित्यर्थः ॥ २ ॥

अथ तृतीया।

३ २ ३ १ २   ३ २ ३ १ ३ १ २
एषदेवःशुभायतेधियोनावमर्त्त्यः।
३   १ २ ३ १ २
वृत्रहादेववीतमः॥ ३ † ॥

---

* ऋ० वे० ९, ८, १८, २।
† ऋ० वे० ९, ८, १८ ३।

"एषः" सोमः "देवः" "शुभायते"*। कुत्र? "अधियोनौ" स्वीये स्थाने†। कीदृशएषः? "अमर्त्त्यः" अमरणधर्मा "वृत्रहा" शत्रु-हन्ता "देववीतमः" अतिशयेन देवानां कामयिता‡ ॥ ३ ॥

अथ चतुर्थी।

२ १उ ३ १ २ २ १ २ ३ १ १ २ २

एषवृषाकनिक्रदद्दशभिर्ज्जामिभिर्यतः।

३ १ २र

अभिद्रोणानिधावति॥ ४ ¶ ॥

"वृषा" कामानां वर्षिता "एषः" सोमः "कनिक्रदत्" शब्दं कुर्व्वन् "दशभिः" "जामिभिः" अङ्गुलिभिः "यतः" धृतः§ "द्रोणाणि" द्रुममयानि पात्राणि "अभि धावति" अभिगच्छति ॥ ४ ॥

अथ पञ्चमी।

३ १ २र ३ १ २ ३ २ ३ १ १

एषसूर्य्यमरोचयत्पवमानोअधिद्यवि।

३ १ २ ३ १र २र

पवित्रेमत्सरोमदः॥ ५ ‖ ॥

---

* 'शुभायते—शुभं करोति'—इति वि०।

† 'अधियोनौ—योनिष्ठो एकलग्नः'—इति वि०।

‡ 'देववीतमः—देवानां भक्ततमः, अथवा'—इत्यादि वि०।

¶ ऋ० वे० ६, ८, १८, ४।

§ 'जामिभिः—जामयो भगिन्यः अङ्गुल्यः ताभिर्यतः संयतः बद्ध इत्यर्थः—इति वि०।

‖ ऋ० वे० ६, ८, १८, ५।

"पवमानः" पूयमानः "एषः" सोमः "अधि द्यवि" द्युलोके स्थितं "सूर्य्यं" "रोचयत्" रोचयति । कीदृशः ? "पवित्रे" स्वयं दशापवित्रे स्थितः, "मत्सरः" मद-हेतु प्रायः, "मदः" हृष्टः ॥

"अधिद्यवि । पवित्रेमत्सरोमदः"—"विचर्षणिः । विश्वा धामानिविश्ववित्"—इति पाठौ ॥ ५ ॥

अथ षष्ठी ।

११ २र ३ १ २ ३ १ २
एषस्य्र्य्यंणहासतेसंवसानोविवस्वता ।
१ २ ३ १र २र
पतिर्वाचोअदाभ्यः ॥ ६ * ॥ ५

"एषः" सोमः "संवसानः" सर्वमप्याच्छादयन् "विवस्वता" दीप्तिमता† "सूर्य्येण" "हासते" परित्यज्यते पवित्रइति शेषः । कीदृशः ? "वाचः" स्तुति-लक्षणायाः "पतिः" पालकः स्वामी वा‡ "अदाभ्यः" केनाप्यहिंस्यः ॥ ६ ॥ ५

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य दशमस्याध्यायस्य चतुर्थः खण्डः ॥ ४ ॥

---

* ऋ० वे० ६, ८, १७, ५ ।

† 'विवस्वता—स्वकीयेन तेजसा'—इति वि० ।

‡ 'पतिर्वाचः—लौकिकाः वैदिकाश्च, तासां स्वामी'—इति वि० ।

अथ पञ्चम-खण्डे—

एषकविरिति षडृचं सूक्तम्,—

तत्र प्रथमा ।

२ २ ३ २ ३ १ २ ३ १ ३ १ २
एषकविरभिष्टुतःपवित्रेअधितोशत ।
३ २उ ३ १ २
पुनानोघ्नन्नपद्विषः ॥ १ * ॥

"एषः" सोमः "कविः" मेधावी "अभिष्टुतः" अभितःस्तुतः† "पवित्रे अधि" दशापवित्रे अधि दशापवित्रमतीत्य "तोशते" [यद्यपि तोशतिर्बधकर्मा तथाहि हनने गति-सद्भावात् अत्र गतिमात्रे वर्त्तते] गच्छतीत्यर्थः‡ [अथवा "पवित्रे अधि" कृष्णाजिने "तोशते" हन्यते पीड्यत इत्यर्थः] किङ्कुर्वन्? "पुनानः" पूयमानः "द्विषः" शत्रून् "अपघ्नन्" अपगमयन ॥

"द्विषः"-"स्त्रिधः"—इति पाठौ ॥ १ ॥

अथ द्वितीया ।

३ १ २र ३ १ २ ३ १र २र
एषइन्द्रायवायवेस्वर्जित्परिषिच्यते ।
३ १ २ ३ १ २
पवित्रेदक्षसाधनः ॥ २ ¶ ॥

---

* ऋ० वे० ६, ८, १७, १ ।

† 'स्तोतृभिस्तैः'—इति वि० ।

‡ 'तोशते—तुशी दीप्तौ दीप्यते'—इति वि० ।

¶ ऋ० वे० ६, ८, १७, २ ।

"एषः" सोमः "स्वर्जित्" स्वर्गस्य सर्वस्य वा जेता "इन्द्राय" "वायवे" च "पवित्रे" "परिषिच्यते" परिस्राव्यते। कीदृशएषः? "दक्षसाधनः" बलकारी ॥ २ ॥

अथ तृतीया।

३२उ ३ १ २ ३ २ ३ १र २र ३ २
एषनृभिर्विनीयतेदिवोमूर्द्धावृषासुतः।
२ ३ १ २ ३ २
सोमोवनेषुविश्ववित् ॥ ३ * ॥

"एषः" सोमः "नृभिः" कर्म-नेतृभिः ऋत्विग्भिः "विनीयते" विविधं नीयते। कीदृशः? "दिवः" द्युलोकस्य "मूर्द्धा" शिरोवत् प्रधानभूतः "वृषा" अभिमत-वर्षकः "सुतः" अभिषुतः। कुत्र नीयते? "वनेषु" वननीयेषु पात्रेषु वन-सम्भूत-द्रुम-विकारेषु वा पात्रेषु† "विश्ववित्" सर्वज्ञ एष इति समन्वयः ॥ ३ ॥

अथ चतुर्थी।

३ २ ३ १ २ ३ १ २ १ २
एषगव्युरचिक्रदत्पवमानोहिरण्ययुः।
१ २ ३ १र २र
इन्दुःसत्राजिदस्तृतः ॥ ४ ‡ ॥

"एषः" सोमः "पवमानः" पूयमानः "अचिक्रदत्" शब्दं करोति। कथम्भूतः सन्? "गव्युः" अस्माकं गा इच्छन्

* ऋ० वे० ६, ८, १७, २।

† 'वनेषु—उदकेषु'—इति वि०।

‡ ऋ० वे० ६, ८, १७, ४।

"हिरण्ययुः" हिरण्यानीच्छन् "इन्दुः" दीप्तः सन्, "सत्राजित्" महतः शत्रोरसुरादेर्जेता, * "अस्तृतः" स्वयमन्यैरहिंस्यश्च सन् ॥ ४ ॥

अथ पञ्चमी।

३ २ ३क २र ३ १ २ ३ २ ३ १ २
एषशुष्म्यसिष्यददन्तरिक्षेवृषाहरिः।
३ २उ ३ २ ३ २
पुनानइन्दुरिन्द्रमा ॥ ५ † ॥

"शुष्मी" बलवान् सोमः "अन्तरिक्षे" दशापवित्रे "असिष्यदत्" स्यन्दते‡। कीदृशएषः? "वृषा" वर्षकः, "हरिः" हरितवर्णः, "पुनानः" पूयमानः, "इन्दुः" दीप्तः, सएव "इन्द्रम्" इन्द्रञ्चापि; गच्छतीति शेषः। "आ"—इति चार्थेण ॥ ५ ॥

अथ षष्ठी।

३ २ ३ १ २ ३ १ २ ३ १ २
एषशुष्म्यदाभ्यःसोमःपुनानोअर्षति।
३ १२ ३ २
देवावीरघशᳫंसहा ॥ ६ § ॥ ६

"एषः" सोमः "शुष्मी" बलवान् "अदाभ्यः" अदम्भनीयः अहिंसनीयः "पुनानः" पूयमानः "अर्षति" गच्छति "देवावीः"

* 'सत्राजित्—सहसा जेता अथवा सत्राजित्—सदाजित्'—इति वि०।

† ऋ० वे० ६, ८, १७, ६।

‡ 'असिष्यदत्—सीदति'—इति वि०।

¶ 'आ—आनुपूर्व्येण'—इति वि०।

§ ऋ० वे० ६, ८, १८, ६।

देवानामविता* "अघशंसहा" अघान् शंसन्तीत्यघशंसाः तेषां वा हन्ता† ॥ ६ ॥ ६

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य दशमस्याध्यायस्य पञ्चमः खण्डः ॥ ५ ॥

---

अथ षष्ठे खण्डे—

ससुतःपीतयइति षडृचं सूक्तम्,

तत्र प्रथमा।

२ ३ २ ३ १ ३ २ ३ १र २ ३ १ २
ससुतःपीतयेवृषासोमःपवित्रेअर्षति।

२ १र २र ३ १
विघ्नन्रक्षांसिदेवयुः ॥ १ ‡ ॥

"सः" सोमः "पीतये" इन्द्रादिपानाय "सुतः" अभिषुतः "वृषा" वर्षणः सन् "पवित्रे" "अर्षति" गच्छति। किङ्कुर्वन्? "रक्षांसि" "निघ्नन्"। "देवयुः" देवकामः। स इत्यन्वयः ॥ १ ॥

---

* 'देवावीः—देवानां भक्षभूतः'—इति वि०।

† 'अघं पापं यः शंसति सः अघशंसः, तस्य हन्ता'—इति वि०।

‡ ऋ० वे० ९, ८, २७, १।

अथ द्वितीया ।

२ ३ १ २  ३ १र २र  १ २
सपवित्रेविचक्षणोहरिरर्षतिधर्णसिः ।

१ २उ  ३ १ २
अभियोनिङ्कनिक्रदत् ॥ २ * ॥

"सः" सोमः "विचक्षणः" [ पश्यति-कर्म्मैतत् ( निघ० ३, ११,३)] सर्वस्य द्रष्टा "हरिः" हरितवर्णः सोमः "धर्णसिः" सर्वस्य धारकः "पवित्रे" "अर्षति" गच्छति, पश्चात् "कनिक्रदत्" शब्दं कुर्वन् "योनिं" स्थानं द्रोणकलशम् "अभि" गच्छति † ॥ २ ॥

अथ तृतीया ।

२ ३ १ २ १ २ ३ १र २र ३ १ २
सवाजीरोचनन्दिवःपवमानोविधावति ।

२ १र २र ३ १ २
रक्षोहावारमव्ययम् ॥ ३ ‡ ॥

"सः" "वाजी" वेजनवान् ¶ अश्व-स्थानीयः "दिवः" "रोचनं" रोचकः "पवमानः" पूयमानः "विधावति" । कीदृशः? "रक्षोहाः" रक्षसां हन्ता, "अव्ययं वारं" दशापवित्रम् अतीत्य विधावति विविधं गच्छति ॥

"रोचनं"-"रोचना"—इति पाठौ ॥ ३ ॥

---

* ऋ० वे० ६, ८, २७, २ ।

† अभीत्युपसर्गदृष्ट्या क्रियापदावृत्तिः ।

‡ ऋ० वे० ६, ८, २७, ३ ।

¶ 'वाजी—अन्नवान्'—इति वि० ।

अथ चतुर्थी।

२ ३ २३ ३ १ २ ३ १ २
सन्त्रितस्याधिसानविपवमानोअरोचयत्।

३ १ ३ १ १ ३ २
जामिभिःसूर्य्यंसह॥ ४ *॥

"सः" सोमः "त्रितस्य" महर्षेः "अधिसानवि" समुच्छ्रिते यज्ञे† [ अधीति सप्तम्यर्थानुवादी ] "पवमानः" पूयमानः "जामिभिः" प्रवृद्धैः बन्धुभूतैर्वा सुतेजोभिः ‡ "सह" सहितः सन् "सूर्य्यम्" "अरोचयत्" प्रकाशितवान्॥ ४॥

अथ पञ्चमी।

१ २ ३ १ २ २ २ ३ १ २ ३ १ २
सवृत्रहावृषासुतोवरिवोविददाभ्यः।

२ ३ १ २
सोमोवाजमिवासरत्॥ ५ ¶॥

"सः" सोमः "वृत्रहा" शत्रूणां हन्ता "वृषा" वर्षकः "सुतः" अभिषुतः "वरिवोवित्" § यष्टुर्धनस्य लम्भकः "अदाभ्यः"

---

* ऋ० वे० ६, ८, २७, ४।

† 'त्रितस्याधिसानवि—त्रितस्यार्थं, अधिसानवि अ_वे स्थाने'—इति वि०।

‡ 'जामिभिः—भगिनीभिः'—इति वि०।

¶ ऋ० वे० ६, ८, २७, ५।

§ 'वरिवोभजः'—इति वि०।

अन्यैरहिंसनीयः ; एवङ्गुणः सन् "वाजमिव" सङ्ग्राममिव * "असरद्" गच्छति कलशम् ॥ ५ ॥

अथ षष्ठी ।

२ ३ १ २ ३ १ २ ३ २ १र १र
सदेवःकविनेषितो३ऽभिद्रोणानिधावति ।
२ ३ १ २ ३ १ २
इन्दुरिन्द्रायमꣳहयन् ॥ ६ † ॥ ७

"सः" सोमः "देवः" "इन्दुः" क्लिद्यमानः "कविना" आक्रान्त-प्रज्ञेनाध्वर्युणा ‡ "इषितः" प्रेरितः ¶ सन् "द्रोणानि" द्रोण-कलशान् § "अभि धावति" अभिगच्छति । किङ्कुर्वन्? "इन्द्राय" इन्द्रं "मंहयन्" स्वकीय-रसेन पूजयन् ॥

"मंहयन्"-"मंहना"—इति पाठौ ॥ ६ ॥ ७

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य दशमस्याध्यायस्य षष्ठः खण्डः ॥ ६ ॥

---

* 'वाजम्—अन्नम्, इव असरत्'—इति वि० ।

† ऋ० वे० ६, ८, २७, ६ ।

‡ 'कविना—ब्रह्मणा'—इति वि० ।

¶ 'इषितः—क्षिप्तः'—इति वि० ।

§ 'द्रोणानि—द्रोण-कलश-सम्बन्धानि पात्राणि'—इति वि० ।

अथ सप्तम-खण्डे—

यःपावमानीरिति षडृचं सूक्तम्,

तत्र प्रथमा।

१ २ ३ २ ३ १र २र ३ १ २ ३ १ २
यःपावमानीरध्येत्यृषिभिःसम्भृतꣳरसम्।

२ ३ २ ३ १ २ ३ १ २ ३ १ २
सर्वꣳसपूतमश्नातिस्वदितम्मातरिश्वना ॥ १ * ॥

"यः" जनः "पावमानीः पवमान-देवताकाः † सर्वाऋचः तद्रूपं "ऋषिभिः" सूक्तद्रष्टृभिः मधुच्छन्दःप्रभृतिभिः "सम्भृतं" सम्पादितं "रसं" वेदसारभूतं ‡ पावमानं सूक्तसङ्घं यः "अध्येति," ¶ "सः" जनः "सर्वं" भोज्यजातं "पूतं" परिशुद्धमेव "अश्नाति" भक्षयति § कथमस्य पूतत्वम्? तत्राह—स्वस्याशनात् प्रागेव "मातरिश्वना" [मातरि अन्तरिक्षे श्वसितीति मातरिश्वा वायुः, स च पवित्रमेव] पवित्रेण वायुना "स्वदितं" स्वादूकृतं परिपूतमेवान्नं पश्चात् स नरोऽश्नाति ॥ १ ॥

* ऋ० वे० ७, २, १८, ६।

† 'पावमान्यश्च या सोमदेवत्यः ऋचः त्रिष्वपि पवमानेषु, ताश्चाभिष्टुः साम्प्रतं व्याख्यायते—यः पावमानीरध्येतीति'—इति वि०।

‡ 'रसं—वीर्यम्'—इति वि०।

¶ 'यः अध्येति तस्य किं फलं भवति? सर्वं स पूतम् अश्नाति, यत् किञ्चित् खादति तत् पूतं भवति'—इति वि०।

§ 'अध्ययनश्चात्र आर्षच्छन्दोदैवतब्राह्मणैः सहितं परिज्ञानं प्रगृह्यते'—इतिवि०।

अथ द्वितीया।

३ २३ ३ १र २र ३ १ २ ३ १ २
पावमानीर्यो अध्येत्यृषिभिः सम्भृतꣳरसम्।
२ ३ १ २ ३ २ ३ १र २र ३ २
तस्मै सरस्वती दुहे क्षीरꣳसर्पिर्मधूदकम्॥ २ *॥

"यः" ब्राह्मणः "पावमानीः" पवमान-देवताका ऋचः "ऋषिभिः" मधुच्छन्दःप्रभृतिभिर्मन्त्रद्रष्टृभिः "सम्भृतं रसं" वेद-सारं सूक्तसङ्घम् "अध्येति" अधीते, "तस्मै" पवमानाध्ययनं कुर्वते जनाय "सरस्वती" सर्वत्र सरणवती वाग्देवता † "क्षीरं" यज्ञ-साधनं पयः, "सर्पिः" तादृशं घृतं "मधु" मदकरम् "उदकं" सोमं "दुहे" स्वयमेव दुग्धे यागादि-पर-वेदशास्त्रं विदं करोतीत्यर्थः ‡ [दुह प्रपूरणे (अदा० प०) कर्मकर्त्तरि "न दुह-स्नु-नमाम् (३, १, ८९)"—इत्यादिना यकः प्रतिषेधः, "लोपस्त आत्मनेपदेषु (७, १, ४१)"—इति त-लोपः॥ २॥

अथ तृतीया।

३ २ ३ १ २ ३ २ ३ १ २ ३ १ २
पावमानीः स्वस्त्ययनीः सुदुघा हि घृतश्चुतः।
१ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ २
ऋषिभिः सम्भृतो रसो ब्राह्मणेष्वमृतꣳहितम्॥ ३¶॥

---

* ऋ० वे० ७, २, १८, ७।

† 'सरस्वती—वाग्रूपा'—इति वि०।

‡ 'क्षीरं, सर्पिः, मधु, उदकम्—एतानि रसवन्ति द्रव्याणि तस्य सम्पद्यन्ते'—इति वि०।

याः पावमान्य ऋचः ताः "स्वस्त्ययनीः" क्षेम-प्रापिकाः "सु-दुघाः" सुष्ठु फलं दुहानाः "घृतश्चुतः" * [घृतं स्रोतन्ति चार-यन्तीति घृतश्चुतः ईदृग्भूताः] अस्माननुगृह्णान्त्विति शेषः। "ऋषिभिः" मन्त्र-दर्शिभिर्मुनिभिः "रसः" फलसारः "सम्भृतः" अस्मासु सम्पादितः "ब्राह्मणेषु" ब्रह्माणो मन्त्राः तत्पाठकाः ब्राह्मणाः, तेष्वस्मासु † "अमृतम्" अविनाश-बलं "हितं" सम्पादितम् ॥ ३ ॥

अथ चतुर्थी।

पावमानीर्दधन्तु नइमंलोकमथो अमुम्।

कामान्त्समर्द्धयन्तु नो देवीर्देवैः समाहृताः ॥ ४ ‡ ॥

"देवैः" इन्द्रादिभिः "समाहृताः" सम्पादिताः "पावमानीः देवीः" पवमान-मन्त्राभिमानिनो देव्यः "नः" अस्माकम् "इमम्" ईदृग्भूतं "लोकं" भूलोकम् "अथो" अपि च "अमुं" स्वर्ग-लोकं "दधन्तु" प्रयच्छन्तु। तत्रत्यान् "कामान्" च "नः" अस्मदर्थं "समर्द्धयन्तु" समृद्धान् कुर्वन्तु ॥ ४ ॥

---

* 'घृतश्चुतः—घृतस्राविणः, अथवा घृतमुदकं तत् श्रवन्ति, कामवर्षी पर्जन्यो भवति'—इति वि०।

† 'ब्राह्मणेषु—अधिकरणभूतेषु'—इति वि०।

‡ ऋ० वे० ७, २, ५, २।

अथ पञ्चमी।

१ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ १ २
येनदेवाःपवित्रेणात्मानम्पुनतेसदा।
१ २ ३ १ २ ३ १ २
तेनसहस्रधारेणपावमानीःपुनन्तुनः॥ ५ * ॥

"देवाः" इन्द्राद्याः "येन" पवित्रेण शुद्धि-साधनेन "सदा" "आत्मानं" स्व-देहं पुनते शोधयन्ति, "सहस्रधारेण" सहस्रावान्तर-भेद-युक्तेन "तेन" साधनेन "पावमानीः" पावमान्य ऋचः "नः" अस्मान् "पुनन्तु" ॥ ५ ॥

अथ षष्ठी।

२ २ ३ १ २ ३ १ २ २ २
पावमानीःस्वस्त्ययनीस्ताभिर्गच्छतिनान्दनम्।
१ २ ३ १ २ ३ १ २
पुण्याꣳश्चभक्षान्भक्षयत्यमृतत्वञ्चगच्छति॥ ६† ॥ ८

"पावमानीः" पवमानः पावकः पूयमानो वा सोमः, तत्सम्बन्धिन्यस्तद्देवताका ऋचः पावमान्यस्ताः "स्वस्त्ययनीः" स्वस्तीत्यविनाश-नाम, तथाविध-फलस्य प्रापयित्र्यः, "ताभिः" उक्त-लक्षणाभिः पावमानीभिः, तत्पाठेन स्तोता "नान्दनं"‡ नन्द-

---

* ऋ० वे० ७, २, ५, ३।

† ऋ० वे० ७, २, ५, १९।

‡ 'नान्दनं—पुत्र-वस्तु-धन-धान्यादिभिः'—इति वि०।

यति सुकृतिन इति नन्दनः स्वर्गः स एव नान्दनः [स्वार्थिकस्त-द्धित-प्रत्ययः] तम् "गच्छति" प्राप्नोति । किञ्चेह लोके "पुष्टान्"* सुकृत-सम्पादितान् "भक्षान्" भक्षणीयान् भोगान् अन्न-पानादि-लक्षणान् "च" भक्षयति । किञ्च "अमृतत्वं च गच्छति" अमृतत्वं नाम सोमस्तञ्च प्राप्नोति ॥ ६ ॥ ८

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य दशमस्याध्यायस्य

सप्तमः खण्डः† ॥ ७ ॥

---

अथाष्टमे खण्डे ‡—

अगन्मेति-तृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा ।

१ २ ३ १र १र ३ १ २ ३
अगन्ममहानमसायविष्ठं

२ ३ २ ३ १ २ ३ १ २ ३ २
योदीदायसमिद्धःस्वेदुरोणे ।

---

* 'पुण्यान्—मन्त्रपूतान् अथवा धानाः करम्भः पुरोडाशः प्रतीवापः पयस्येति अथवा * * *)—इति वि० ।

† 'उक्ताः पावमान्यः, उक्तञ्च बहिष्पवमानं, नवमश्चाङ्कः'—इति वि० ।

‡ 'इदानीमाग्नेयानि भवन्ति'—इति वि० ।

१ १ २ २ १ २ ३ १ ३ १

चित्रभानुꣳरोदसीअन्तरुर्वी

२ ३ १ २ ३ १ २

स्वाहुतंविश्वतःप्रत्यञ्चम् ॥ १ * ॥]

"यः" अग्निः "स्वे दुरोणे" आहवनीयाख्ये स्वे स्थाने "समिद्धः" काष्ठैः सम्यग्दीप्तः सन् "दीदाय" दीप्यते, तमिमं "यविष्ठं" युवतमम् "उर्वी" विस्तीर्णयोः "रोदसी" रोदस्योः द्यावा-पृथिव्योः "अन्तः" मध्ये अन्तरिक्षे "चित्रभानुं" चित्रकालं "स्वाहुतं" सुष्ठु आहुतिभिर्हुतं सन्तं "विश्वतः" सर्वतः "प्रत्यञ्चं" प्रतिगच्छन्तमग्निं "महा" महता "नमसा" नमस्कारेण "अगन्म" वयमुपगच्छामः ॥ १ ॥

अथ द्वितीया ।

२ ३ १र २र ३ १ २ ३ २

समह्नाविश्वादुरितानिसाह्वा

३ १ २ ३ २ ३ २ ३ १२

नग्निष्टवेदमआजातवेदाः ।

१ २ ३ १ ३ २ १

सनोरक्षिषद्दुरितादवद्या

३ १ २ ३ २ ३ १ २ ३ १ २

दस्मान्गृणतउतनोमघोनः ॥ २ † ॥

---

* ऋ० वे० ५, २, १५, १ ।

† ऋ० वे० ५, २, १५, २ ।

यः "अग्निः" "मह्ना" महत्वेन "विश्वा" विश्वानि "दुरिता" दुरितानि "साह्वान्" अभिभवन् "जातवेदाः" जात-धनः जात-प्रज्ञो वा "दमे" यज्ञगृहे "स्तवे" अस्माभिः स्तूयते, "सः" अग्निः "गृणतः" स्तुवतः "नः" अस्मान् "दुरितात्" पापात् "अवद्यात्" निन्दिताच्च कर्मणः "रक्षिषत्" रक्षतु। "उत" अपिच "मघोनः" हविष्मतः "नः" अस्मान् रक्षतु ॥ २ ॥

अथ तृतीया।

१ २र ३ २ ३ १ २ ३ १
त्वंवरुणउतमित्रोअग्नेत्वां

१ ३ २ ३ १ २
वर्द्धन्तिमतिभिर्वसिष्ठाः।

१र २र ३ १ २ ३ १
त्वेवसु*सुषणनानिसन्तुयूय

२ ३ २ ३ १ २
म्पातस्वस्तिभिःसदानः ॥ ३ † ॥ ८

हे "अग्ने!" "त्वं" "वरुणः" असि पापानां निवारको भवसि "उत" अपिच "मित्रः" असि, पुण्य-प्रापणे सखा भवसि। "वसिष्ठाः" एतन्नामका ऋषयः हे अग्ने! "त्वां" "मतिभिः" स्तुतिभिः "वर्द्धन्ति" वर्द्धयन्ति "त्वे" त्वयि विद्यमानानि "वसु" वसूनि "सुषणनानि" सुसम्भजनानि "सन्तु"। हे अग्ने! "यूयं"

---

* "वसु"—इति क०-मु०-पुस्तकयोः पाठः।

† ऋ० वे० ५, २, १५, ३।

त्वदाद्याः सर्वे देवाः "स्वस्तिभिः" चेमैः "नः" अस्मान् "सदा" सर्वदा "पात" रक्षत ॥ ३ ॥ ९

अथ तृचात्मके द्वितीय-सूक्ते—

तत्र प्रथमा।

३ २उ ३ १र २र ३ १ २ ३ १ २
महाँ इन्द्रो य ओजसा पर्ज्जन्यो वृष्टिमाँ इव।

१ २ ३ १ २
स्तोमैर्वत्सस्य वावृधे ॥ १ * ॥

"यः" "इन्द्रः" "ओजसा" बलेन "महान्" सर्वेभ्योऽधिकः। कइव? "वृष्टिमानिव" यथा वृष्ट्या युक्तः "पर्जन्यः" रसानां प्रार्जयिता देवः महान्, स इन्द्रः "वत्सस्य" पुत्र-स्थानीयस्य स्तोतुः वत्स-नाम्न एव वा ऋषेः "स्तोमैः" स्तोत्रैः "वावृधे" प्रवर्द्धते ॥ १ ॥

अथ द्वितीया।

२ ३ २ ३ १र २र ३ १ २ ३ २ ३ १ २
कण्वा इन्द्रं यदक्रत स्तोमैर्यज्ञस्य साधनम्।

३ १ २ ३ १ २
जामि ब्रुवत आयुधा ॥ २ † ॥

"कण्वाः" [स्तोतृ-नामैतत् (निघ० ३,१५,७)] स्तोतारः कण्वगोत्रा वा "इन्द्रं" "स्तोमैः" स्तोत्रैः "यज्ञस्य" यागस्य "साधनं"

---

* ऋ० वे० ५, ८, ९, १ = य० वे० ७, ४०।

† ऋ० वे० ५, ८, ९, २।

साधयितारं निष्पादकं "यद्" यदा "अकृत" अकृषत [करोतेर्लुङि "मन्त्रे घसेति (२, ४, ८०) च्लेर्लुक्, तदानीं "आयुधा" शत्रूणां हिंसकानि बाणादीनि "जामि" * [अतिरिक्तनामैतत्] अतिरिक्तम् अधिकं प्रयोजन-रहितं "ब्रुवते" कथयन्ति। "आयुधा" आयुधस्य सर्वस्य कार्य्यस्येन्द्रेण कृतत्वात् आयुधानि निःप्रयोजनानीत्यर्थः [यद्वा, 'आयुधा' आयुधमायोधनशीलमिन्द्रं 'जामि' जामिं भ्रातरं 'ब्रुवते' वदन्ति॥

"आयुधा"–"आयुधम्"—इति पाठौ॥ २॥

अथ तृतीया।

३ १ २ २ ३ १ २ ३ १र २र ३ १ २
प्रजामृतस्यपिप्रतःप्रयद्भरन्तवह्नयः।

१ २ ३ २ ३ १ २
विप्राऋतस्यवाहसा॥ ३ † ॥ १०

"ऋतस्य" यज्ञस्य सत्यस्य वा "प्रजा" प्रकर्षेण जातमिन्द्रं "पिप्रतः" नभसः प्रदेशान् पूरयन्तः "वह्नयः" वाहका अश्वा "यद्" यदा "प्र भरन्त" प्रकर्षेण भरन्ति वहन्ति तदा "विप्राः" मेधाविनः

---

* 'जामि—जामानि'—इति वि०।

† ऋ० वे० ५, ८, ६, २।

स्तोतारः "ऋतस्य" यज्ञस्य "धाहसा" प्रापकेण स्तोत्रेण तम् इन्द्रं स्तुवन्तीति शेषः ॥ ३ ॥ १०

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य दशमस्याध्यायस्य

अष्टमः खण्डः * ॥ ८ ॥

---

अथ नवमे खण्डे †—

पवमानस्येति तृचात्मकं प्रथमं सूक्तम्, ‡

तत्र प्रथमा ।

१ २   ३  १ २ ३  १ २ ३  १  २
पवमानस्यजिघ्नतोहरेश्चन्द्राअसृक्षत ।

३  १  २  ३ १  २
जीराअजिर¶शोचिषः ॥ १ § ॥

"जिघ्नतः" पुनः पुनः तमांसि विनाशयतः ‖ "हरेः" हरितवर्णस्य "अजिरशोचिषः" सर्वत्र-गमन-शील-तेजसः "पव-

---

* 'उक्तान्याख्यानि'—इति वि० ।

† 'इदानीं माध्यन्दिनः पवमानः'—इति वि० ।

‡ 'उत्तरादारात्प्रभृतीनि सामानि ब्राह्मणोक्तार्षाणि'—इति वि० ।

¶ "खजीर"—इति ख० पु० पाठः ।

§ ऋ० वे ७, २, ११, ५ ।

‖ 'जिघ्नतः—घ्नन्यमानस्य'—इति वि० ।

मानस्य" "चन्द्राः" [ चदि आह्लादे (भ्वा० प०)] देवानामाह्लादयितारः "जीराः" क्षिप्रं चरण-शीलाः * धाराः "असृक्षत" सृजन्ति पवित्रान्निर्गच्छन्तीत्यर्थः ॥

"जिघ्नतः"-"जङ्घ्नतः"—इति पाठौ ॥ १ ॥

अथ द्वितीया।

१ २ ३ १ २ ३ १ २ ३ १ २
पवमानोरथीतमःशुभ्रेभिःशुभ्रशस्तमः।
१ २ ३ १ २
हरिश्चन्द्रोमरुद्गणः ॥ २ † ॥

"पवमानः" देवः "रथीतमः" अतिशयेन रथवान् [ "ईद्रथिनः (८,२,१७ वा०)"—इतीकारः। तथा "शुभ्रेभिः" शोभायुक्तेभ्यस्तेजोभ्योऽपि "शुभ्रशस्तमः" अत्यन्तं दीप्यमानश्च [यद्वा, निर्मलतम-यशोयुक्तः] "हरिश्चन्द्रः" [ "ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे (६,१,१५१)"—इति सांहितिकः सुट्] हरित-वर्ण-दीप्तिः हरित-धारा-युक्तो वा "मरुद्गणः" मरुतो यस्य गणाः सहाय-भूताः स तथोक्तः तादृशः सोमः सर्वान् स्व-रश्मिभिः व्याप्नोत्वित्युत्तरेण सम्बन्धः ॥ २ ॥

---

* 'जीराः—जीरणात्मकाः'—इति वि०।

† ऋ० वे० ७, २, १२, १।

अथ तृतीया।

१२ ३१२ ३ १ २ ३ १ २
पवमानव्यश्नुहिरश्मिभिर्वाजसातमः।

१ २ ३ २ ३ १ २
दधत्स्तोत्रेसुवीर्य्यम् ॥ ३ * ॥ ११

हे "पवमान" सोम! त्वं "रश्मिभिः" स्वदीप्तिभिः "व्यश्नुहि" सर्वं जगद् व्याप्नुहि। कीदृशस्त्वम्? "वाजसातमः" अतिशयेनान्नस्य दाता बलस्य सम्भक्ता वा तथा "स्तोत्रे" पवमानं स्तोत्रं कुर्वते जनाय "सुवीर्य्यं" शोभनवीर्य्योपेतं पुत्रं धनं वा "दधत्" विदधत् प्रयच्छन् व्याप्नुहि ॥

"पवमानव्यश्नुहि"—"पवमानोव्यश्नवत्"—इति पाठौ ॥ ३ ॥ ११

अथ तृचात्मके द्वितीय-सूक्ते—

प्रथमा।

२ ३ १ २ ३ २उ ३ १ २ ३ १ ३ २
परीतोषिञ्चतासुतꣳसोमोयउत्तमꣳहविः।

३ १र २र ३ २ २उ ३ २ ३ २ ३ १ २
दधन्वाꣳयोनर्य्योअप्स्वा३न्तरासुषावसोममद्रिभिः ॥१†॥

हे ऋत्विजः! "सुतम्" अभिषुतं सोमम् "इतः" अस्मात् कर्मण ऊर्द्ध्वम् अथवा अस्मात् प्रदेशात् ऊर्द्ध्वं "परिषिञ्चत" वसतीवरीभिः [ इतोषिञ्चतेत्यत्र संहितायां छान्दसं रो रुत्वम्, आदेश-

* ऋ० वे० ७, २, १२, ३।

† छ० आ० ६, ३, ९, १ (२भा० ७७ पृ०) = ऋ० वे० ७, ५, १२, १।

प्रत्यययोरिति षत्वम् ] "यः" "सोमः" देवानाम् "उत्तमं" प्रशंस्यं "हविः" भवति "आ" अपिच "नर्यः" मनुष्य-हितः यश्च सोमः "अप्सु" वसतीवरीषु अन्तरिक्षे वा "अन्तर्" "दधन्वान्" गच्छन् भवन् भवति तं "सोमम्" "अद्रिभिः" ग्रावभिः अध्वर्युः "सुषाव" अभिषुतं चकार ; तं परिषिञ्चतेति समन्वयः ॥ १ ॥

अथ द्वितीया।

२ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
नूनम्पुनानोविभिःपरिस्रवादब्धःसुरभिन्तरः।

३ १ २३ १ २ ३ १ २ ३ २ ३ २ ३ १ २
सुतेचित्त्वाप्सुमदामोअन्धसाश्रीणन्तोगोभिरुत्तरम् ॥२*॥

हे सोम! "अदब्धः" कैश्चिदप्यहिंसितः "सुरभितरः" अत्यन्तं सुगन्धि त्वं "नूनम्" इदानीं "पुनानः" पूयमानः "अविभिः" अवि-वाल-कृतैः पवित्रैः "परिस्रव" परिक्षर "सुते चित्"† अभिषुते सति "अन्धसा" भक्त-लक्षणेनान्नेन "गोभिः" गोविकारैः क्षीरादिभिः "श्रीणन्तः" मिश्रयन्तः वयम् "उत्तरम्" उद्गततरम् ‡ "अप्सु" वसतीवरीषु स्थितं "त्वा" त्वां "मदामः" मदामहे ॥ २ ॥

---

* ऋ० वे० ७, ५, १२, २।

† 'चित्—इति पदपूरणः'—इति वि०।

‡ 'उत्तरम्—उत्तरेषु सवनेषु'—इति वि०।

अथ अध्यास्यरूपा तृतीया ।

१ २ ३ १र २र　　२ १ २ ३ २ ३ १ २　　३ २
परिस्वान*श्चक्षसेदेवमादनःक्रतुरिन्दुर्विचक्षणः ॥३†॥ १२

"स्वानः" सुतः अभिषूयमाणः सोमः "चक्षसे"‡ सर्वेषां दर्शनाय "परि" स्रवति । कीदृशः ? "देवमादनः" देवानां तर्पयिता, "क्रतुः" कर्त्ता, ¶ "इन्दुः" पात्रेषु क्षरण-शीलः दीप्तो वा, "विचक्षणः" "सर्वस्य" विद्रष्टा ॥ ३ ॥ १२

५ ४　　२र ३ ४ र ५　　१र र
॥ पृष्ठम् ॥　पराइयितोषिञ्चतासुताम् । सोमोयउत्त

१　　२ १र र र
मᳪहवार३यिर्हीइया । दधन्वाᳪयोनर्योअप्सुवन्तरार३

१　　२ १र　　२　　१　　२
होइया । सुषावार२३सो । ममद्रा२३यिभा३४३यिः ॥(१)

५ ४　२ ३र ४　५　　१ र र　　१
सुषाइवसोममद्रिभायिः । सुषावसोममद्रिभा२३यिर्ही

२र १ र र　　१　　२ १
इया । नूम्पुनानोअविभिःपरिस्रवा२३होइया । अदब्धा

२　१　२　　५ ४ २ ३४ ५
२३ःसु । रभिन्तार२३रा३४३ः ॥(२) अदाइब्धःसुरभिन्तराः ।

* "सुवान"—इति ऋ० पाठः ।

† ऋ० वे० ७, ५, १२, ३ ।

‡ 'चक्षसे—चक्षाय'—इति वि० ।

¶ 'क्रतुः—यज्ञः'—इति वि० ।

१ १ २१र र र
अदब्ध.सुरभिन्तरार३होइया। सुतेचित्त्वाप्सुमदामोऽ

२ १र १ २ १ २
न्धसा२३होइया। श्रीणन्तो२३गो। भिरुता२ ३रा ३ ४

१
३म्। ओ२३४५ई। डा॥१*॥[१]

५ ४ २ ४ ५र ५र १र
॥ कौल्मलबर्हिषम् ॥ परा३यितो३षिञ्चनासुताम्। सो

र २ र र १ २
मोयउत्तमा२ऽहोवा२ ३४ यिः। दधन्वाऽयोनर्य्योऽआ।

२१ १ र र २ १ ५
एहोयि। प्सू२अन्तरा। सुषावसोममोवा३ओं२३४वा।

४ ५ ५ ४ २ ४र ५ १
द्रा५यिभो६हायि ॥(१) सुषा३वा३सोममद्रिभायिः। सु

२ र १ २र र र १ २
षावसोममा२द्रायिभा२ ३४यिः। नूनम्पुनानोऽवायिभा

र १ १ २ १
यिः। ऐहोयि। पा२रिस्रवा। अदब्धःसुरभोवा३ओ

५ ४ ५ ५ ४ २ ४ ५
२३४वा। ता५रो६हायि॥(२) अदा३ब्धा३ःसुरभिन्तराः।

१ १ २र र १ २
अदब्धःसुरभा२यिन्तारा२ ३ ४ः। सुतेचित्त्वाप्सुमादा।

---

* ऊ० गा० ५प्र० २अ० १मा०।

१ र १ र र र १ २ १
ऐहोयि। मो२अन्धसा। औण्न्तोगोभिरोवा३ओ२३४

५ ४ ५
वा। तापुरोइहायि(३) ॥ २ * ॥ [२]

१ २र १र २ र १ १
॥ अर्क्कपुष्पाद्यम् ॥ परोतोपिन्चतासुतम्। ऊवे२३।

१र २र १ २ १ २ १ २ १र र र २ १
सोमोयउत्तमꣳहविः। ऊवे२३। दधन्वाꣳयोनर्य्योअप्‌म्

२ १र २ १र२ १र २ १ २ १
वन्तरा। ऊवे२३। सुषावसोममद्रिभिः। ऊवे २३ ॥(१)

२ १र २ १र २ १ २ १ २ १र २१ र २ १ २
सुषावसोममद्रिभिः। ऊवे२३। सुषावसोममद्रिभिः।

१ २र१ २र १र २ १ २ १ १ २
ऊवे२३। नूनम्पुनानोविभिःपरिस्रव। ऊवे२३। अदब्धः

१ २ १ २ १ २
सुरभिन्तरः। ऊवे२३ ॥(२) अदब्धःसुरभिन्तरः। सुर

१ १ २ १ २ १
भिन्तरः। ऊवे२३। अदब्धःसुरभिन्तरः। ऊवे २ ३।

२ १र २र १ २र र १ २र १ २र १ २र १र
सुतेचित्त्वाप्सुमदामोअन्धसा। ऊवे २ ३। औण्न्तोगो

२ १ र १ १ १ २ २
भिरुत्तरम्। ऊवे२३। ऊवे२३। होवा३हा३। हा

* ऊ० गा० ५प्र० २ख० २सा०

५र र २१र र र १र २ १ १ १
३४। औ होवा। अर्कोदिवाना २म्परमेवियो २मा २ ३ ४
१
५न्(३) ॥ ३ * ॥ [३]

२ र १र र र र र २
॥ दैर्घश्रवसम् ॥ परीतोषिञ्चतासुतमोहाओहा३ए।
१र १र १ २ १ २ १ ऽ २ ऽ २ २ ३ २
सोमोयउत्तमꣳहविः। ओ३हा। ओ३हा३ए३४। दधा
३र २ १ २ १ २ ऽ २
३४न्वाꣳयाः। नारियः। अप्सू अन्तरा। ओ ३ हा।
ऽ २ २ २ २ ३ २ २ १ ५ ४
ओ३हा३ए३४। सुषा३४वसो३। ममो२३४वा। द्रा५
५ २ र र र र र २
यिभो६हायि ॥(१) सुषावसोममद्रिभिरोहाओहा३ए।
२ १र २ १र २ १ २ ऽ २ ऽ २ २ ३र २
सुषावसोममद्रिभिः। ओ३हा। औ३हा३ए३४। नूना
३ २ १ २ १ २ ऽ २ ऽ
३४म्पुना। नोअवि। भिःपारिस्रवा। ओ३हा। ओ३
२ २ २ २ ३ २ र १ ५ ४
हा३ए३४। अदा३४ब्धःसू३। रभो२३४वा। ता५रो६
५ २ र र र २ १ २
हायि ॥(२) अदब्धःसुरभिन्तरओहाओहा३ए। अदब्धः
१ २ ऽ २ ऽ २ २ ३ २
सुरभिन्तरः। ओ३हा। ओ३हा३ए३४। सुता३४यि

---

* ऊ० गा० ५प्र० २ख० ३सा० ।

३ २ १ २ र १ २ ५ २ ५
चित्त्वा। आप्सुम। दामोअन्धसा। ओ३हा। ओ३
२ २ ३र २ ३र २ २ १ १ ४
हा३ए३४। श्रीणा३४न्तोगो३। भिरो२३४वा। ता५रो
५
६हायि(३)॥ ४ *॥ [४]

२ र र र १ २ र
॥ दावत्तरोवैयश्वम्॥ परीतोषिञ्चतासुतम्। सो
१ २ र
मो। यउत्तमꣳहविः। दधान्वाꣳ१या२ः। नर्यो अप्सु
र २ १ २
वन्तरा। सुषावा१सो२। ममद्रा२३यिभा३४३यिः॥(१)
२ र र १ २ र
सुषावसोममद्रायिभायिः। सुषा। वसोममद्रिभिः।
१ २ २ १ २
नूनम्पू१ना२। नोअविभिःपरिस्रव। अदाब्धा१ःसू२।
१ २ २ १ २
रभिन्ता२३रा३४३ः॥(२) अदब्धःसुरभिन्ताराः। अदा।
१ २ र र
ब्धःसुरभिन्तरः। सुतायिचा१यित्वा२। अप्सुमदामो
र र १ २ १ २
अन्धसा। श्रीणान्तो१गो२। भिरुत्ता२३रा ३ ४ ३म्।
१
ओ२३४५ई। डा(३)॥ ५ †॥ [५]

* ऊ० गा० ५प्र० २अ० ४सा०। † ऊ० गा० ५प्र० २अ० ५सा०।

२ र र र र
॥ आभीशवाद्यम् ॥ परीतोषिञ्चतासुतम् । ए । सो
र ऽ १ ७ २ ३ ५ २ १र
मोयऊ३त्तामᳪहाविः । दा२३४धा । हायि । न्वाᳪ
र र ७ २ ३ ५ २ १र २
योनर्व्यौअप्सूअन्तारा । सू२३४षा । हायि । वासोम
१ ५ ४ ५ २र र
मो२३४वा । द्रा५यिभो६हायि ॥(१) सुषावसोममद्रिभि
र र ऽ १ ७ २ ३ ५ २
रे । सुषावसो३मामद्रिभायिः । नू२३४नाम् । हायि ।
१ र र ७ २ ३ ५ २ १
पुनानोअविभिःपारिस्रावा । आ२३४दा । हायि । ब्धाः
२ १ ५ ४ ५ २
सूरभो२३४वा । ता५रो६हायि ॥(२) अदब्धःसुरभिन्त
ऽ १ ७ २ ३ ५ २ १
रए । अदब्धःसू३राभिन्तारः । सू२३४ते । हायि । च्चि
र र ७ २ ३ ५ २ १ र
त्वाप्सुमदामोअन्धासा । आ२३४यिणा । हा । तोगो
२ १ ५ ४ ५
भिरो२३४वा । ता५रो६हायि(३) ॥ ६ * ॥ [६]

३ ४र ५र र २ ३ ४र ५
॥ माधुच्छन्दसम् ॥ परीतोषा । होयिः । चतासुता
५ २र १ २ १ २ ३ ५ २ १र र
६मे । सोमायऊ । तामᳪहा२३४वोः । दधन्वाᳪयोन

* ऊ० गा० ५प्र० १अ० ६सा० ।

य्यौंश्र। प्सुवान्तारा। औहोऽ३४वाहायि। सुषावासौ। औहोऽ३४वाहा। ममद्राऽ२३यिभा३४३यिः। ओऽ२३४५ ई। डा(३) ॥ ३ * ॥ [७]

॥ ऐडमायास्यम् ॥ आग्निपरायि। तोपायि। चना सुताम्। सोमीयऊ३१। तमॢ्हवायिः। दाधन्वाॢ् या३१ः। नर्य्यौश्रा। प्सुवन्तरा। सूषावसो३१। ममद्राऽ२३ यिभा३४३यिः ॥(१) आयिसुषा। वासो। ममद्रिभा यिः। सूषावसो३१। ममद्रिभायिः। नूनम्पुना ३ १। नोश्रविभायिः। परिस्रवा। आदब्धःसू३१। रभिन्ता २३रा३४३ः ॥(२) आश्रद्दा। ब्धाःसू। रभिन्तराः। आ दब्धःसू३१। रभिन्तराः। सूतेचित्त्वा३१। प्सुमद्दा।

* ऊ० गा० ७प्र० १ख० १सा०।

२र १ र र २ १ २
मोअन्धसा। आयिणन्तीगो२१। भिरुत्तार२३रा३४३म्।
१
ओ२३४५ई। डा(३) ॥ ४ * ॥ [८]

२ १ ४ र ५ १र २र
॥ पृश्नि ॥ परायितो२३षिञ्चतासुत८ँहाउ। सोमो
१ २ १ २ १ २ १ २ २
यउत्तम८ँहविः। दधन्वा८ँ१या २ ३ः। होवा३हायि।
२ २र १ २ १ २ २ १
मारियोअ। सुवान्ता१रा२३। होवा३हायि। सुषा
२ १ २ २ १ २ १ २
वा१सो२३। होवा३हा। मामद्रिभिः। इडा२३मा३४
१
३। ओ२३४५ई। डा(१) ॥ २ † ॥ [९]

२ र र र
॥ अभीशवोत्तरम् ॥ परीतोषिञ्चतासुतम्ए। ए।
र र १ ७ २ ३ ५ २ २
सोमोयऊ३त्तामं८ँहाविः। दा२३४धा। हा३हायि।
१र र र ७ २ ३ ५ २ २ १र
न्वा८ँयोनर्य्योअप्सूअन्तारा। सू२३४षा। हा३हायि। वा
२ १र ५ ४ ५ २ र र
साममो२३४वा। द्रा५यिभोई३हायि ॥(१) सुषावसोम

---

* ऊ० गा० ७प्र० १अ० ४सा०।

† ऊ० गा० ७प्र० २अ० ३सा०।

२ २ ऽ १ ७ २ ३
मद्रिभिरे। ए। सुषावसोऽमामद्रि। भायिः। नूश्व३४

५ २ २ १ २ २ ७ २ ३
नाम्। हाश्हायि। पुनानोऽविभिःपारिह्वावा। आ

५ २ २ १ २१ ५ ४
२३४दा। हाश्हायि। अ्वाःह्वरभोर २ ३ ४वा। तापूरो६

५ २ १ ७
हायि॥(२) अदब्धःसुरभिन्तरए। ए। अदब्धःसूश्रामि

२ ३ ५ २ २ १ २ २ ७
न्तारः। नू२३४ते। हाश्हायि। चित्त्वाप्सुमदामोऽ

२ ३ ५ २ ३ १ २ २ १
न्धासा। आर्३४यिणा। हाश्हा। तोगोभिरोर २ ३ ४

५ ४ ५
वा। तापूरोर्इहायि(३)॥ ४ *॥ [१०]

१ २२ १२ २ १२ २ १ २ २ २
॥ सम्मतम्॥ परीतोषिञ्चतासुताम्। सोमोयउत्त

१ २ १ १२ २
मॅ्हवायिः। दधन्वाॅ२३याः। नारियोऽ। सुवा

२ ३२ २ ३२ २ १ २ १
न्तारा। औहो३४वाहायि। सु। षावार्२सो३। हो

२ २ १ २ २ १२ २ १२ २ १
वार्३हा। ममद्रा २ ३ यिभा३४३यिः॥(१) सुषावसोमम

२ १ २ २ १ २ २
द्रिभायिः। सुषावसोऽममद्रिभायिः। नूनक्पू २ ३ना।

* ऊ० गा० ७प्र० २ख० ४सा०।

१ २ १ २ ३र २ ३र २ १
नोऽअविभिः। परायिस्वावा। औहोऽ३४वाहायि। अ।
२ १ २ २ १ २
दाब्धार२३ःसू३। होवा३हा। रभिन्तार२३रा३४३ः ॥(२)
१ २ १ २ १ २ १ र
अदब्धःसूरभिन्तराः। अदब्धःसूरभिन्तराः। सुतेचार२३
२ १ २र र १ २ ३र २ ३र २
यित्वा। आप्सुमदा। मोआन्धासा। औहोऽ३४वाहा
१र २ १ २ २ १
यि। औ। णान्तो२३गो३। होवा३हायि। भिरुत्ता
२ १
२३रा३४३म्। ओ२३४५ई। डा(३) ॥ ३ * ॥ [११]
५र २ ४ ५ ४र ५ २र १ २
॥ कालेयम् † ॥ परीतोऽ३षिञ्चतासुताम्। सोमोय
१ २३ ११ २३र २ १
उ। तमᳩहवा२३यिः। दधन्वाᳩया३ः। नार ३ ४।
३ ४र ५ २ २ १ ३२ २ ५
रियोअप्सुव। ताऽ३रा। सुषावसौ। वा३४३ओ३४वा।
४ ४
ममाऽ५द्रिभायिः। होऽ५ई। डा(३) ॥ ४ ‡ ॥ [१२]
२र र १ ५ १
॥ रौरवम् ॥ परीतोषिञ्चा३तासू२३४ताम्। सोऽ

* ऊ० गा० ९प्र० १ख० ३सा०।
† "महाकालेयम्"—इति ख०-पाठः।
‡ ऊ० गा० ९प्र० २ख० ४सा०

२ २ २ २ ३ २ १
मोयउत्तमꣳहविर्इंधन्वाꣳयोनर्य्योअप्सु वा२न्तरा। ओ
२ २ १२ २ २ १ २ २
हा३उवा। सुषावसोममा २ ३ हायि। ओहा३उवा।
१ ४ ५ २ २ २ १
द्रिभायिः। औ३होवा॥(१) सुषावसोमा३मद्रा२ ३ ४
५ १ २ २ २ २ २
यिभायिः। सूऽषावसोममद्रिभिर्न्नूनम्पुनानोअविभिःपरा२
३ २ १ २ २ १ २ १
यिस्रवा। ओहा३उवा। अदब्धःसुरभा२३यिहायि। ओ
२ २ १ २ ३ ५ २ १
हा३उवा। तरा। औ३होवा॥(२) अदब्धःसुरा३भि
५ १ २ २ २
न्तार३४राः। आ। दब्धःसुरभिन्तरःसुतेचित्त्वाप्सुमदा
२ ३ २ १ २ २ १२ २ २ २
मोआ२न्धसा। ओहा३उवा। श्रीणन्तोगोभिरु२२हा
१ २ २ १ ४ ५ ४
यि। ओहा३उवा। तराम्। औ२३होवा। हो५ई।
डा(३)॥ ११ *॥ [१३]

१ २२ १२ २ २ १२ २२ १२
॥ आष्टादꣳष्ट्रोत्तरम्॥ परीतोषिञ्चतासुतमैयादौ।
२ २ १२ २२ १ २ १ १२
हो३वा। सोमोयउत्तमम्। होवा२३यिः। ऐया२३त्।

* ऊ० गा० ८प्र० ३ऋ० ११सा०।

१ २ २ १२ २ २ १ १
औ२३होवा । दधन्वाँ३योनर्यौँअप्सुव । तारा२३ ।
१२ १ २ २ १२ २ १२ २ १
ऐया२३त् । औ२३होवा । सुषावसोमम । द्रायिभा
१२ १ २ २ २ १२ २ १२
२३यिः । ऐया२३त् । औ२३होवा२३४३ ॥(१) सुषावसो
२ १ २ १२ २२ १२ २ २ १२ २ १२ २ १
ममद्रिभिरैयादौ । हो३वा । सुषावसोमम । द्रायिभा
१२ १ २ २ २ १ २२ १२ २
२३यिः । ऐया२३त् । औ२३होवा । नूनम्पुनानोविभिः
१ १२ १ २ २ १ २
परि । स्रावा२३ । ऐया२३त् । औ२३होवा । अदब्धः
१ १२ १ २ २
सुरभि । ता२३त् । ऐया२३त् । औ२३होवा२३४३ ॥(२)
१ २ १ २१२ २२ १२ २ २ १ २
अदब्धःसुरभिन्तरऐयादौ । हो३वा । अदब्धःसुरभि ।
१ १२ १ २ २ १२ २२ १
तारा२३ः । ऐया२३त् । औ२३होवा । सुतेचित्त्वाप्सु
२२ २ १ १२ २ १ २२ १२
मदामोश्र । धासा२३ । ऐया२३होवा । श्रीणन्तोगो
२ १ १२ १ २ २
भिरु । तारा२३म् । ऐया२३त् । औ२३होवा२३४३ ।
१
औ२३४५ । ई । डा(३) ॥ १८ * ॥ [१४]

---

* ऊ० गा० १२प्र० १अ० १८सा० ।

३ ४र ३र ४ ३र ४ ५ र ३
॥ उत्सेधम् ॥ परीतोषिञ्चतासुतम् । सोमः । य
२ ३र ४र ५ २ १
ऊ३४औहोवा । तमुऽहुवाऽ२यिः । हा३१उवा २ ३ ।
२ ५ ३ २ ४र ५र ४ ५ १
ऊ ३ ४ पा । दधाइन्वाऽया । औहोवाहायि । नारि
२र १ २ १ २र २ ५
योआ । प्सुवन्तारा । हा३१उवा२३ । अ३४पा ।
३ २ ४ र ५र ४ ५ ३ २ ४
सुषा३वसो । अहौवाहायि । ममा३द्रा५यिभा ६ ५ ६
४ ३र ४ ३र ४ ३ ४ ५ र ३ २ ३र ४र
यिः ॥(१) सुषावसोममद्रिभिः । सुषा । वसो३४औहो
५ २ १ २ ५
वा । ममद्रिभाऽ२यिः । हा३१उवा२३ । ऊ ३ ४ पा ।
३र २ ४ र ५र ४ ५ १ २ १ २
नूना३पुना । औहोवाहायि । नोअविभायिः । परि
१ २ २ ५ ३ २ ४ ५र
स्राव । हा३१उवा२३ । ऊ३४पा । अदा३ब्धः सु । औ
४ ५ ३ २ ४ ३ ४
होवाहायि । रभा३यित्ता५रा६५६ः ॥(२) अदब्धः सुर
३ ४ ५ ३ २ ३र ४र ५ २ १
भिन्तरः । अद । ब्धः सू३४औहोवा । रभिन्तराऽ२रः ।
२ ५ ३ २ ४ ५र ४
हा३१उवा२३ । ऊ३४पा । सुता३यिचित्त्वा । औहो
५ १ २ १ २र १ २र
वाहायि । आप्सुमदा । मोअन्धासा । हा३१उवा२

२ ५ ३र २ ४र ५ ५र ४ ५ ३
३। ऊ३४पा। ओणा३न्तोगो। औहोवाद्धायि। भि

२ ४
रू३त्ता५रा६५६म्(३)॥२०*॥[१५]

२ १ ४ र ५ १र २र
॥ पृश्नि॥ परायितो२३षिञ्चतासुन९ृहाउ। सोमो

१ २ १ २ १ २ १ २ २
यउत्तम९ृहविः। दधान्वा९ृ१या२३ः। होवा३हायि।

१ २र १ २ १ २ २ १
नारियोअ। प्रसवान्ता१रा२३। होवा३हायि। सुषा

२ १ २ २ १ २ १
वा१मो२३। होवा३हा। मामद्रिभिः। इडा२३॥(१)

२ १ ४र ५ २ १र २ १र २ १ २ १र
सुषावा२३सोममद्रिभिर्हाउ। सुषावसोममद्रिभिः। नू

२ १ १ २ १र २ १
नाम्पू१ना२३। होवा३हायि। नोद्मविभिः। परायि

२ १ २ २ १ २ १ २
स्रा१वा२३। होवा३हायि। अदाब्धा१ःसू२३। होवा३

२ १ २ १ २ १ ४
हा। राभिन्तरः। इडा२३॥(२) अदाब्धा२३ःसुरभि

र ५ १ २ १ २ १ २
न्तरोहाउ॥(२) अदब्धःसुरभिन्तरः। सुतायिचा१यि

१ २ २ १ २र र १ २
त्वा२३। होवा३हायि। अप्सुमदा। मोआन्धा१सा

* ऊ० गा० १२प्र० २अ० २०सा०।

१ २ २ १र २ १ २ २
२३। होवा३हायि। औणान्तो१गोर३। होवा३हायि।

१ २ १
भायिरुत्तरम्। इडा२३(३) ॥ ६ * ॥ [१५]

३ ४र१र ४ ५ र २ २ १
॥ वाम्रम् ॥ परीतोषिञ्चता। हा३हा३यि। सू२३

५ १र २ १
४। त९मुतोवा। सोमोहो२यि। यऊहो२। ता

७ १ १र १ २ ३
म९हावा२यिः। दाधन्वा९य। नरायियोआ। प्सु

२ २ ५ १ १ १ १
वाउवा३। ऊ३४पा। नरा२। सुपा२वासो२। मम।

३ ५र र ४ ३र ४ १र ४ ५र २ २
द्रा२यिभा२३४औहोवा ॥(१) सुषावसोममा। हा३हा

१ ५ १ १
यि। द्रा२३४यि। भिद्रिभोवाःसुषाहो२ई। वसाहो

१ ७ १ २र र १ २
२। मामद्रायिभा२यिः। ननम्पुना। नोआवायिभा

३२ २ ५ १ १ १
यिः। पराउवा३। ऊ२४पा। स्रवा२। आदा२व्यः

१ ३ ५र ८ ३ ४ ५
सू२। रभि। तार२रा२३४औहोवा ॥(२) अदब्धःसुर

२ २ १ ५ १
भि। हा३हा३यि। ता२३४। रस्तरोवा। अदाहो

ॐ ऊ० गा० १५प्र०१ख० ६सा०।

१ १ ७ १ र २ र
२यि। अः हृवो२। राभिन्तारा२ः। हृतेचित्वा। पु
१ २ ३ २ २ ५ १ १
मादा। मआउवा३। ऊ३४पा। धसा२। आयिणा
१ १ ३ ५र र २
२न्तोगो२। भिह। ता२रा२३४औहोवा। ऊ३२३
५
४पा(३) ॥ १२ * ॥ [१६]

५ २र १र २ र १
॥ मानवोत्तरम् ॥ हावायि। परीतोषिञ्चतासुतम्।
र ० २र १
होवायि। सोमोयउत्तमꣳहविः। दाधन्वाꣳयः। ना
० र २ ० ३ ५ २ १ २
रियोआ३१। प्सूवा२न्ता२३४रा। सुषावा२ ३ सो ३।
१ ३ ५र र ३ ५ १
मा२मा२३४औहोवा। द्रा२३४यिभीः ॥(१) होवायि।
२ १र २ १र २ १ २ १ र र
सुषावसोममद्रिभिः। होवायि। सुषावसोममद्रिभिः।
० २ र १ ० २ ० ३ ५
नूनम्पुना। नोअविभा३१यिः। परा२यिस्रा२३४वा।
२ १ २ १ ५र र ३ ५
अदाभ्वा२३ःह३। रा२३४औहोवा। ता२३४राः ॥(२)
१ २ १ २ १
होवायि। अदब्धःसुरभिन्तरः। होवायि। आदब्धः

* ऊ० गा० १५प्र० २अ० १२सा०।

१ ७र
सुरभिन्तरः। होवायि। आदव्यःसुरभिन्तरः। हते

२ र १ ७ २ ७र २ ५ २र १
चित्त्वा। आप्सुमदा३१। मोआ२न्वा२३४सा। श्रीणा

२ १ ३ ५र र २
न्तो २ ३ गो ३। भारयिहू२३४औहोवा। ता २ ३ ४

५
राम्(३) ॥ १३ * ॥ [१७]

१ २ १ २ र
॥ आनूपं वाध्र्यश्वम् ॥ परायिपरायि। तोषिन्वा ३

१ २ १ र २ १ २ २
ताहृ१ता२म्। सोमोयउ। तमा(७)हा१वा२रयिः। दा

२ १ र २ १ २ १ २ २
धा२न्वा(७)या२रः। नर्योअप्सुवन्ता२३रा। सुषावा३सो

१ ४ २ ५ १ २ १ २
३। मा२३मा३। द्रा३४५यिभो६हायि ॥(१) सूषासूषा।

र १ २ १ र २र १ २
वसोमा३माद्रा१यिमा२रयिः। हृषावसो। ममाद्रा१यि

१ १ १र ११ २
मा२रयिः। नूना२म्पूना२। नोअविभिःपरिस्रा२३वा।

१ २ २ १ ४ २ ५
अदाभ्या३ःहु३। रा२३भा३यि। ता३४५रो६हायि ॥(२)

१ २ २ २ १ २ १ २
अदाअदा। भ्यःसुरा३भायिन्ता१रा२ः। आदभ्यःसु।

* ऊ० गा० १५प्र० २ख० १३सा०।

१ २ १ १ १ २ २र
रभायिन्ता१रा२ः। हुते२चायित्वा२। अप्सूमदीमो

१ २ १र २ २ १ ४ २
अन्धा२३सा। श्रीणान्तो३गो३। भा२३यिहू३। ता

५
३४५रो६हायि(३) ॥ १४ * ॥ [१८]

३ २ २ ४ ५ २ ३
॥ यौधाजयम् ॥ परा३१यि। तो३षि। च। ताहू

५ १ २ १ ३ २ ३
२३४ताम्। सोमो३। यजु२। तमा३४५म्। हा२

५ २ १ २र १ २ १र ३ २
३४वो:। दधान्वा२ऽया:। न। य्यीआ२। दस्तुवा३४५।

३ ५ २ १ ३ २ ३
ता२३४रा। सुषा२। वासो२। ममा३४५। द्रा२३४

५ ३ २ २ ४ऽ ५ २ ३ ५
यिभी:॥(१) सुषा३१। वा३सो। मम्। आद्रा२३४यिभायि:।

१ २ १ ३ २ ३ ५ १र १ २
हूषा३। वसो२। ममा३४५। द्रा२३४यिभी:। नूनामु

१ २ १ ३ २ ३ ५
ना। न:। अविभा२यि:। परा३४५यि। स्ना२३४वा।

२ १ ३ २ ३ ५
अदा२। ब्या:हू२। रभा३४५यि। ता२३४रा: ॥(२)

३ २ २ ५ ५ २ ३ ५ १ २
अदा३१। ब्या३:सू। र। भिन्ता२३४रा:। आदा३।

* ऊ० गा० १५प्र० २ख० १४सा०।

१ ३ २ ३ ५ २ १ २ १
व्यःस्व२ । रभा३४५यि । ता२३४राः । सुतायिचित्त्वा ।

२ १ ३र २ ३ ५ २र
अ । प्सुमदा२ । मोआ३४५ । धा२३४सा । श्रीणा२ ।

१ ३ २ ३ ५
तोगो२ । भिष्ठ३४५ । ता२३४राम्(३) ॥ ५ * ॥ [१९]

५ र २ ४ ५ ४र ५ १ र २
॥ द्वैगतम् ॥ परीतो३षिञ्चतासुताम् । सोमोयउ ।

१ २ ३ २ १ २ २ १र
तमा९त्त्वा१वा२यिः । दधा३ । हौ३हो३वा । न्वा९

र र ७ १ १ ३ ५र र
योनर्य्योअप्सुअन्तारा२ । सुषा२३ । वा२सो२३४औहो

२ १ ३ १ १ १ १ ५ र २ ४र ५
वा । ए३ । ममा२द्रिभा२३४५यिः ॥(१) सुषावा३सोम

४ ५ १ र २ र १ २ ३र २
मद्रिभायिः । स्वषावसो । ममाद्रा१यिभा२यिः । नूना

ऽ २ २ १ र र ० १
२म् । हौ२हो३वा । पुनानोअविभिःपारिस्रावा२ । अ

१ ३ ५र र १ १ ३
दा२३ । व्धा२ःसू२३४औहोवा । ए३ । रभा२यिन्तरा

१ १ १ १ ५ २ ४ ५ ४ ५ १ २
२३४५ः ॥(२) अदब्धा३ःसुरभिन्तराः । आदब्धःसू । र

१ २ ३ २ ऽ २ २ १ र
भायिन्ता१रा२ः । सुता३यि । हौ३हो३वा । चित्त्वा

---

* ऊ० गा० २६प्र० १अ० ५सा० ।

प्सुमदामोअन्धासा २ । औणा२३ । तो२गो२३४औ

होवा । ए३ । भिष्ट२न्तरा२३४५म् (३) ॥ ६ * ॥ [२०]

॥ कण्वरथन्तरम् ॥ पारीतोषिञ्चतासुताम् । सों

मोयऊ । ता३मा९ह्वा३वायिः । दधन्वा९योनर्य्योअप्सु

वन्तरा२३४ऐही । सुषावा२३४सो । ममा३१उवा२३ ।

ए३ । द्रिभिरा ॥ (१) स्वषावसोममद्रिभायिः । सुषावसो ।

मा३माद्रा३यिभायिः । नूनम्पुनानोअविभिःपरिस्रवा२३

४ऐषी । अदब्धा२३४ःस्व । सू । रभा३१उवा२३ । ए३ ।

तरआ ॥ (२) आदब्धःसुरभिन्तराः । अदब्धःस्व । रा३

भायिन्ता३राः । सुतेचित्त्वाप्सुमदामोअन्धसा२३४ऐही ।

औणन्तो२३४गो । भिष्ट३आउवा२३ । ए३ । तरमा (३)

॥ १८ † ॥ [२२]

---

* ऊ० गा० १६प्र० १ख० ६सा० ।

† ऊ० गा० १६प्र० १ख० १८सा० ।

अथ तृचात्मके तृतीय-सूक्ते—

प्रथमा ।

१ २ ३ १ २ २ ३उ ३ २ ३
असाविसोमोअरुषोवृषाहरी

१ २ ३ २ ३ १र २र
राजेवदस्मोअभिगाअचिक्रदत् ।

२ २उ ३ १ २ ३ १ २ ३ १र
पुनानोवारमत्येष्यव्ययꣳश्येनो

२र ३ १ २ ३ १ २
नयोनिङ्घृतवन्तमासदत् ॥ १ * ॥

"सोमः" "असावि" अभिषुतोऽभूत् । कीदृशः सोमः? "अरुषः" आरोचमानः, "वृषा" वर्षकः, "हरिः" हरितवर्णः; स च राजेव "दस्मः" दर्शनीयः सन् "गाः" उदकानि "अभि" लक्ष्य "अचिक्रदत्" शब्दं करोति स्व-रस-निर्मोक-समये, पश्चात् पुनानः "अव्ययम्" अविमयं "वारं" वालं दशापवित्रम् "अत्येषि" हे सोम! अतिक्रम्य गच्छसि । ततः "श्येनो न" श्येन इव "योनिं" स्वीयं स्थानं "घृतवन्तम्" उदकवन्तम् "आसदत्" प्रविशति ॥

"अत्येषि"-"पर्येति"—इति पाठौ, "आसदन्"-"आसदम्"—इति च ॥ १ ॥

---

* ऋ० आ० ६, २, २, ९ (२भा० १९१ पृ०) = ऋ० वे० ७, ३, ७, १ ।

अथ द्वितीया।

३ १ २ ३ १ २ ३१ २ ३ २ ३
पर्जन्यःपितामहिषस्यपर्णिनो

१ २ ३ २ ३ २ ३ १ २
नाभापृथिव्यागिरिषुक्षयन्दधे।

१ २ ३१ २ ३ १उ ३ १ २ ३
स्वसारआपोअभिगाउदासर

२र २र ३ १ २ ३ २
न्त्सङ्गावभिर्वसतेवीतेअध्वरे ॥ २ * ॥

यस्य "महिषस्य" महतः "पर्णिनः" पर्णवतः पतनवतो वा सोमस्य "पर्जन्यः" "पिता" जनकः "सः" सोमः "पृथिव्याः" † "नाभा" नाभौ नाभिस्थानीये ‡ हविर्द्धाने "गिरिषु" गिरि-सम्बन्धिषु ग्रावसु "क्षयं" निवासं "दधे" धारयति अभिषव-समये। तथा "स्वसारः" अङ्गुलयः "आपः" वसतीवर्यः ¶ "गाः" आशिरार्थाः स्तुतयो वा § "अभि" आभिमुख्येन "उदासरन्" उद्गच्छन्ति गच्छन्तु, "वसते", "सम्" गच्छते च, "ग्रावभिः" साकम्। कुत्र? "वीते" कान्ते "अध्वरे" यज्ञे॥

"उदासरन्"-"उतासरन्"—इति पाठौ, "वीते"-वीथे"—इति च॥ २॥

---

* ऋ० वे० ७, ३, ७, २।

† 'पृथिव्याः समुत्पन्नः'—इति वि०।

‡ 'नाभा—नाभि-स्थानीयः'—इति वि०।

¶ 'अप्सु आत्मरूपः'—इति वि०।

§ 'गाः—सोमस्य रश्मयः'—इति वि०।

अथ तृतीया ।

२ १ २ ३ १र २र ३ १ २ ३
कविर्वेधस्या पर्य्येषि माहिन

२ १ २ ३ २ ३१ २र
मत्यो न मृष्टो अभि वाजमर्षसि ।

३ १ २ २ १ २
अपसेधन्दुरिता सोम नो मृड

३ १र २र ३ १ २ ३ १ २
घृता वसानः परि यासि निर्णिजम् ॥ ३ * ॥ १३

हे "सोम!" "कविः" क्रान्तदर्शी सन् "वेधस्या" यागविधानेच्छया "माहिनं" मंहनीयं पवित्रं "पर्य्येषि" परिगच्छसि, पश्चात् "मृष्टः" प्रक्षालितः "अत्यो न" † अश्व इव "वाजं" सङ्ग्रामम् ‡ "अभ्यर्षसि"। सोम! "दुरिता" अस्मदीयानि दुरितानि "अपसेधन्" परिहरन् ¶ "नः" अस्मान् "मृड" सुखय "घृतावसानः" घृतानि उदकानि वसानः आच्छादयन् "परि यासि" अभिगच्छसि । किन्तत्? "निर्णिजम्" पवित्रम् ॥

"सोम नो मृड घृता"-"सोम मृडय घृतम्"—इति पाठौ ॥३॥ १३

इति सामवेदार्थप्रकाशे उत्तरायन्यस्य दशमस्याध्यायस्य नवमः खण्डः ॥ ९ ॥

---

* ऋ०वे० ७, ३, ७, ३ ।

† 'अत्यः—अतीत्य गच्छति'—इति वि० ।

‡ 'वाजम्—अन्नं चरु-पुरोडाशादिलक्षणम्'—इति वि० ।

¶ 'अपसेधन्—एष हवी (भा० आ०) अस्मभिः कृतः संवर्द्धति'—इति वि० ।

अथ द्वितीया।

३ १ २ ३ १ २ ३१ २ ३ २ ३
पर्जन्यः पिता महिषस्य पर्णिनो

१ २ ३ २ ३ २ ३ १ २
नाभा पृथिव्या गिरिषु क्षयन्दधे।

१ २ ३ १ २ ३ २उ ३ १ २ ३
स्वसार आपो अभि गा उदासर

२र २र ३ १ २ ३ २
न्त्सं ग्रावभिर्वसते वीते अध्वरे ॥ २ * ॥

यस्य "महिषस्य" महतः "पर्णिनः" पर्णवतः पतनवतो वा सोमस्य "पर्जन्यः" "पिता" जनकः "सः" सोमः "पृथिव्याः" † "नाभा" नाभौ नाभिस्थानीये ‡ हविर्द्धाने "गिरिषु" गिरिसम्बन्धिषु ग्रावसु "क्षयं" निवासं "दधे" धारयति अभिषव-समये। तथा "स्वसारः" अङ्गुलयः "आपः" वसतीवर्यः ¶ "गाः" आशिरार्थाः स्तुतयो वा § "अभि" आभिमुख्येन "उदासरन्" उद्गच्छन्ति गच्छन्तु, "वसते", "सम्" गच्छते च, "ग्रावभिः" साकम्। कुत्र? "वीते" कान्ते "अध्वरे" यज्ञे॥

"उदासरन्"-"उतासरन्"—इति पाठौ, "वीते"-वीथे"—इति च॥ २॥

---

* ऋ० वे० ७, ३, ७, २।

† 'पृथिव्याः समुत्पन्नः'—इति वि०।

‡ 'नाभा—नाभि-स्थानीयः'—इति वि०।

¶ 'अप्सु भ्रातृरूपः'—इति वि०।

§ 'गाः—सोमस्य रश्मयः'—इति वि०।

अथ तृतीया ।

३ १२ ३ १र २र ३ १ २ ३
कविर्वेधस्या पर्य्येषि माहिन

२ १ २ ३ २ ३ १ २र
मत्यो न मृष्टो अभि वाजमर्षसि ।

३ १ २ ३ १ २
अपसेधन् दुरिता सोम नो मृड

३ १र २र ३ १ २ ३ १ २
घृता वसानः परि यासि निर्णिजम् ॥ ३ * ॥ १३

हे "सोम!" "कविः" क्रान्तदर्शी सन् "वेधस्या" यागविधानेच्छया "माहिनं" मंहनीयं पवित्रं "पर्य्येषि" परिगच्छसि, पश्चात् "मृष्टः" प्रक्षालितः "अत्यो न" † अश्व इव "वाजं" सङ्ग्रामम् ‡ "अभ्यर्षसि"। सोम! "दुरिता" अस्मदीयानि दुरितानि "अपसेधन्" परिहरन् ¶ "नः" अस्मान् "मृड" सुखय "घृतावसानः" घृतानि उदकानि वसानः आच्छादयन् "परि यासि" अभिगच्छसि। किन्तत्? "निर्णिजम्" पवित्रम् ॥

"सोमनोमृडघृता"-"सोममृडयघृतम्"—इति पाठौ ॥३॥ १३

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य दशमस्याध्यायस्य

नवमः खण्डः ॥ ९ ॥

---

* ऋ०वे० ७, ३, ७, ३।

† 'अत्यः—अतीत्य गच्छति'—इति वि०।

‡ 'वाजम्—अन्नं चरु-पुरोडाशादिलक्षणम्'—इति वि०।

¶ 'अपसेधन्—एष हतो (भू० आ०) अंशुभिः हतः संवर्द्धति'—इति वि०।

२र र २ र र
॥ महासामराजम् ॥ हाउहोवा३हायि । असावि

ऽ १ २ ४ २र १ १ १ १ १ १ २र र
सोमो३आ । रुषो३वा३ । षाहरा२३४५यिः । राजेव

र ऽ १ २ ४ २ ३ १ १ १ १ २ र
दस्मो३आ । भिगा३ । आ३ । चिक्रदा२३४५त् । पुना

र र ऽ १ २ ४ २ ३ १ १ १ १ २र
नोवारा३मा । जिया३यिषो३ । अव्यया२३४५म् । श्ये

र र १ २ ४ २र २
नोनयोनो३घा । तवा३न्ता३म् । आसदा३हाउ ॥(१)

२ २ऽ १ २ ४ २ ३ १ १ १ १
पर्ज्जन्यःपिता३मा । हिषा३स्या३ । पर्णिना २ ३ ४ ५ः ।

२र र र ऽ १ र ४ २ ३ १ १ १ १
नाभापृथिव्या३गायि । रिषू३त्ता३ । यन्दधा२३४५यि ।

२ र र र १ र ४ २र ३ १ १ १ १
स्वसारआयो३आ । भिगा३ऊ३त् । आसरा२३४५न् ।

२ र १ २र ४ २
सङ्गावभिवी३सा । नेवा३यिते३ । अध्वरा३२उ ॥(२)

र र ऽ १ २ ४ २र ३ १ १ १ १ २ र
कविर्वेधस्या३पा । रिया३यिषो३माहिना२३४५म् । अत्यो

र ऽ १ २ ४ २ ३ १ १ १ १ २र
नमृष्टो३आ । भिवा३जा३म् । अर्षसा२३४५यि । अप

१ २र ४ २र ३ १ १ १ १ २र
सधन्दू३रायि । तासो३मा३ । नोमृडा२३४५ । हाउ

र २ २ र १ २ ४ २
घोवा३हायि। घृतावसाना३:पा। रिया३सौ३। नि

२ १ १ १ १
र्णिजा३माउवा२३४५(३) ॥ ८ * ॥ [१]

३ ४र ३र ४र २र ४ १र ४
॥ द्विरभ्यासाल्लौशम् ॥ असाविसोमोअरुषोवृषावृ

४र ३ २ ३ १ १ १ ३र र २ र
षा। हरायिः। हरा२३४यिः। राजे३१२३४। वदस्मो

र १ २ १ २ ३ २ २र र
अभिगाअचि। क्रदात्क्रदात्। पुना३१२३४। नोवार

र १ २ १ २ ३र २ २ र
मत्येष्य। व्ययांव्ययाम्। श्येनो३१२३४। नयोनिकृत

३ २ ४ ४ ३ ४ ३र ४ ३ ४
वं। तमा३सा५दा६५६त् ॥(१) पर्जन्यःपितामहिषस्य

५ २ २ १ १ १ १ ३र २ २ र
प। र्णिना२३४५:। नाभा३१२३४। पृथिव्यागिरिषुक्षयम्।

१ २ १ २ ३ २ २ र र र र १
दधायिदधायि। स्वसा३१२३४। रआपोअगाउदा। स

२ १ २ १ २ २ र र १र २ ४
रान्सरान्। सङ्गा३१२३४। वभिर्वसतेवो। तेआ३ध्वा

४ ३ र ४ र १र ४ ५र र ३ २
५रा६५६यि ॥(२) कविर्वेधस्यापरियेषिमा। ह्विनाम्।

२ १ १ १ १ २ २ २ र र
ह्विना२३४५म्। अत्यो३१२३४। मन्द्रोअभिवाजम्।

---

* क्र० ग्रा० ५प० २ख० ८सा०।

१ २ १ २ ३ २ २र र र
षसायिषसायि । अपा३१२३४ । सेधन्दुरितासोमनः ।
१ २ १ २ २ २ २र २ ३ २
मृडाम्मृडा । घृता३१२३४ । वसानःपरिया । सि ना३
४
यिर्णापृयिजा६पृ६म(३) ॥ २ * ॥ [२]

२ र १ २र १
॥ ऐडमायास्यम् ॥ असावायिसो२३ । सोअह्नषा२
२ २र २र र १ २र २
३ः । ए३ । वृषाह्नरिरे३ । राजेवादा२३ । स्मोअभा
२ २ २ र १ २ १
यिगा२३ः । ए३ । अचिक्रदद३ । पुनानोवा२३ । रमता
२ २ २र र १ २
यिये२३ । ए३ । षिअव्ययमे३ । श्येनोनायो२३ । नि
१ २ २र २ १
कृतावा२३ । ए३ । तमासददे३४३ ॥(१) पर्ज्जन्याःपा२
२र १ २ २ २र र
३यि । तामहायिषा२३ । ए३ । सुपर्णिनए३ । नाभा
१ २र १ २
पार्था२३यि । व्यागिरायिषू२३ । ए३ । त्रयन्दधए३ ।
२ र १ २र १ २ २ र
स्वसाराआ२३ । पोअभायिगा२ ३ः । ए३ । उदासरन्ने
२ र ३ २ १ २
३ । सङ्गावाभा२३यिः । वसतायिवा२३यि । ए३ । पो

* ऊ० गा० ८प्र० १अ० २सा० ।

अभायिगा२३ः। ए३। उदासरन्ने३। सङ्गा्वाभा२३

२र
यिः। वसतायिवा२३यि। ए३। तेअध्वरए३४३॥(२)

२ १ २र १ २ २र
कविर्वायिधा२३। स्यापरायिये२३। ए३। विमाह्नि

२ र १ २र १ २ २
मे३। अत्योनामा२ ३। ष्टोअभायिवा२३। ए३। ज

२ १ २ १ २
मर्षसिए३। अपसायिधा२३न्। दुरितासा२३। ए३।

२र २ र १ २ १ २
मनोम्रुडए३। घृतावासा२३। नःपरायिया२३। ए३।

२ १
सिनिर्णिजमे३४३। ओ२३४५ई। डा(३)॥ ४ *॥ [३]

२ ३ २ ३र४र
॥ वासिष्ठम्॥ हायि। उङ्कवायि। असा३४औहो

५ १ २ १ २ ३ ४र ४ ३र २
वा। विमो। मो३अरु। षोवृषाह्वरायिः। राजे३ ४

३र ४र ५ १ २ १ २ ३ ४ ५ ३ २
औहोवा। वदा। सो३अभि। गाअचिक्रदात्। पुना

३र ४र ५ १र २ १ २ ३ ४ ५ ३र
३४औहोवा। नोवा। रा३मति। एषिअव्ययाम्। मध्ये

२ ३र ४र ५ १ २ १ २ ३ २ ४
नो३४औहोवा। नयो। निघूत। व। तमा३मा५दा६ ५

* ऊ० गा० १७५० २ऋ० ४सा० ।

३ २ ३र ४र ५ १ २ १
इत् ॥(१) पर्ज्जा३४औहोवा। न्यःपायि। ता ३ मह्नि।
१ ३ ४ ५ ३र २ ३र ४र ५ १ १ १
षस्यपर्णिनाः। नाभा३४औहोवा। पृथायि। व्या३गि
२ ३ ४ ५ ३ २ ३र ४र ५ १ १
रि। षुक्षयन्दधायि। स्वसा३४औहोवा। रआा। पो
१ २ ३ ४र ५ ३ २ ३र ४र ५ १
३अभि। गाउदासरान्। सङ्गा३४औहोवा। वभायिः।
२ १ र २ ३र २ ४ ३ २ ३र ४र
वसते। वीं। तेआ३ध्वा५रा६५६यि ॥(२) कवा३४औहो
५ १र २ १ २र ३ ४र ५ ३ २
वा। वेधा। स्या३परि। पृषिमाह्निनाम्। अत्यो ३ ४
३र ४र ५ १ २ १ २र ३ ४ ५ ३ २
औहोवा। नमा। ष्टो३अभि। वाजमर्षसायि। अषा
३र ४र ५ १र २ १ र २र ३ ४र ५ २
३४औहोवा। सेधान्। दुरिता। सोमनोमृडा। हा
३ २ ३ २ ३र ४र ५ १ २ १
यि। उऊवायि। घृता३४औहोवा। वसा। नःपरि।
२ ३ २ ४
या। सिना३यिर्णा५यिजा६५६म्(३) ॥ १७ * ॥ [४]

२ १ २ १
॥ सौमानानिषेधम् ॥ असो। वाह्वायि। वायि
र र २र १ १र र
सोमोअरुषो। वृषाहारा रयिः। राजेवदस्मोअभिगाः।

---

* ऊ० गा० २३प्र० ७ख० १७सा० ।

२ १ १ २ १ २ ३ ४र
अचिक्रादार२३त्। पू२३ना। नो२३वा३४। रमतिये
५ २ २ १ २ १ २ ३
षिस्र। व्या३याम्। ष्या२३यिनो। ना२३यो३४। नि
४५ ३२ ४ २१ २
ष्कृतव। तमा३सा५दा६५६त्॥(१) पज्जौं। वाद्दायि।
१ र २ १ १र र
न्याःपितामह्हिषा। सुपर्णायिना२ः। नाभापृथिव्यागि
२ १ १ २ १ २
रिषू। त्वयन्दाधा२३यि। स्वा२३सा। रा२३ऋा३४
३र४ ३ ४र ५र २ २ १ २ १ २
पोऋभिगाउदा। सा३रान्। सा२३ग्रा। बा२३भा३४
३ ४र५र ३र २ ४ २ १
यिः। वसतेवो। तेआ३ध्वा५रा६५६यि॥(२) कवो।
२ १ र २ र १
वाद्दायि। वायिधस्यापरियायि। षिमाद्दायिना२म्।
१ र र २ १ १ २
आत्यौनम्हष्टोऋभिवा। जमर्षासा२३यि। ऋा२३पा।
१ २ ३ ४र र ५ २ २ १
मा२३यिधा३४न्। दुरितानोमनः। मा३र्डा। घा२३
१ २ ३ ४ ५र ३ २ ४
र्णा। वा२३मा३४। नःपरिया। सिना३यिणी५यिजा
६५६(३)॥ २०*॥ [५] १३

---

* ऊ० गी० १३प्र० २ अ० २०सा०।

अथ दशमे खण्डे—

प्रगाथात्मके प्रथम-सूक्ते,

प्रथमा।

१ २ ३ २ ३ १र २र
आयन्तइवसूर्य्यंविश्वेदिन्द्रस्यभक्षत।
१ २ २ १र २र ३ १ २ ३ १ २ ३ १र २र
वसूनिजातोजनिमान्योजसाप्रतिभागन्नदीधिमः॥ १* ॥

हे अस्मदीया जनाः! "आयन्त इव" सूर्य्यं यथा समाश्रिता रश्मयः सूर्य्यं भजन्ते, तथा "इन्द्रस्य" "विश्वेत्" विश्वान्येव धनानि "भक्षत" भजत। "वसुजातः" प्रादुर्भूत इन्द्रः यानि "वसूनि" धनानि "ओजसा" बलेन "जनिमा" जनिष्यमाणानि करोति अतो "भागं न" पित्र्यं भागमिव तानि धनानि "प्रति दीधिमः" प्रतिधारयेम॥

"जातोजनिमानि"-"जातेजनिमानि"—इति पाठौ॥ १॥

अथ द्वितीया।

१ २ ३ १र २र ३ १र २र ३ १ २
अलर्षि†रातिंवसुदामुपस्तुहिभद्राइन्द्रस्यरातयः।
१ २ ३ १ २ ३ १र २र ३ १ २ ३ १ २ ३ १ २
योअस्यकामंविधतोनरोषतिमनोदानायचोदयन्॥२‡॥ १४

हे स्तोतः! "अलर्षिरातिम्" अपापक-दानम् अपापिष्ठस्य दातारमित्यर्थः [अलर्षि-पद-समानार्थमनर्श-पदं यास्केन व्याख्या-

---

* छ० आ० ३, २, ३, ५ (२भा० ५५१ पृ०) = ऋ० वे० ७, ३, ३, ४।

† "अलऋषि"—इति क० पु० पाठः।

‡ ऋ० वे० ७, ०, ३, ४।

तम्—"अनर्शरातिमनश्लील-दानमश्लीलं पापकम्"-इति (निरु० नै० ६,२३ ) ] "वसुदां" धनस्य दातारमिन्द्रम् "उप स्तुहि"* यतः "इन्द्रस्य" "रातयः" दानानि "भद्रा" कल्याणानि महदैश्वर्यकारीणीत्यर्थः। "यः" इन्द्रः स्वकीयं "मनः" "दानाय" अभीष्ट-प्रदानाय "चोदयन्" प्रेरयन् "विधतः" परिचरतः "अस्य" स्तोतुः "कामम्" इच्छां "न रोषति" न हिनस्ति। तमिन्द्रमुपस्तुहीति सम्बन्धः ॥

"अलर्षिरातिम्"—इति छन्दोगाः पठन्ति, "अनर्शरातिम्"—इति बह्वृचाः ; "योअस्य"-"सोअस्य"—इति च ॥ २ ॥ १४

२र २ १
॥ आयन्तीयम् ॥ आयन्तइवसू१रायाम् । विश्वा२
१ १ १ २ २ २ २र
यिदिद्रा२। स्यभा२त्ताता। वामूनिजातोजनिमा। नि
१ २ १ २र १ १ २ १र
योजा१सा२। प्रतिभागन्नदी२धिमः। प्रा२३नी। भा
२ २ १ ३ २ १ ५ २
गान्ना३दा। ऊम्। धिमा३ः। ओ२३४वा॥(१) प्रति
२ २ १ १र १
भागन्नदा१यिधायिमाः। प्रता२यि। भागा२म्। न
१ २ २ १ २ २ १ २
दा२यिधायिमाः। आक्षर्षिरातिम्बसदाम्। उपास्त्व१

* 'उपस्तुहि—समोदं स्तिवा स्तुहि'—इति वि० ।

२ १र २र१२ १ २ १ २
हायि। भद्राइन्द्रस्यरातयः। भार३द्राः। इन्द्रास्यार
२ १ ३२ १ ५ २र
रा। ऊम्। तयार३ः। औ२३४वा॥(२) भद्राइन्द्रस्य
२ १ १ १ १
रा२तायाः। भद्रा२इन्द्रा२। स्यरा२तायाः। याऽभ्र
२ र१ २ १२ ११र१र र२र १
स्यकामम्बिधतः। नरोषा१ता२यि। मनोदानायचोद
२ १ २ १र २ २ १ ३२
यन्। मा२३नाः। दानाया३चो। ऊम्। दया३।
१ ५ ३१११११
औ२३४वा। हो२३४५(३)॥ ८ *॥ [१]

२र २र १ २ १
॥ निषेधम ॥ आयन्तइवा३सूरियाम्। विश्वायिन्द्रा।
२ १ १२ ११४ ५ २ ३
स्यभक्ता२। इन्द्वा३। वासू३नायिजा। हाहौ३४
५ १ २१ २र१ २ १२ १२
हा। तोजनिमा। नियोजा२३सा। इन्द्वा३। प्राता
४५ २२ ५ ३२ ४
३यिभागाम्। हाहो२३४हा। नदा३यिधा५यिमा६५
३१११११
इः। हो२३४५(३)॥ २ †॥ [२] १४

---

* ऊ० गा० ५प्र० २अ० ८सा०।

† ऊ० गा० १प्र० २अ० २सा०।

अथ प्रगाथात्मके द्वितीय-सूक्ते--

प्रथमा ।

१ २ ३ १ २ ३ १ २ ३ १ २
यतइन्द्रभयामहेततोनोअभयङ्कृधि ।
१ २ ३ १ ३ ३ १ २ २ २ ३ ३ १ २ २
मघवञ्छग्धितवतन्नऊतयेविद्विषोविमृधोजहि ॥१*॥

हे "इन्द्र !" "यतः" हिंसकान् "भयामहे" वयं, ततः "नः" अस्मभ्यम् "अभयं" "कृधि" कुरु। हे "मघवन्" धनवन्निन्द्र ! "नः" अस्मानुद्दिश्य "तत्" तस्यै "तव ऊतये" त्वत्कर्त्तृकायै रक्षायै "शग्धि" शक्तो भव। किञ्च "वि द्विषः" अस्मद्द्वेष्टॄन् विजहि ; "वि मृधः" अस्मद्धिंसकान् विजहि ॥

"ऊतये"-"ऊतिभिः"—इति पाठौ ॥ १ ॥

अथ द्वितीया ।

१ २ २ ३ १ २ ३ २ ३ ३ १ २ ३ २
त्वꣳहिराधसस्पतेराधसोमहःक्षयस्यासिविधर्त्ता ।
१ २ ३ १ २ ३ १ २
तन्त्वावयम्मघवन्निन्द्रगिर्वणःसुतावन्तोहवामहे ॥२†॥१५

हे "राधसस्पते" धनस्य स्वामिन् ! "त्वं हि" त्वं खलु "महः" महतः "राधसः" धनस्य "क्षयस्य" गृहस्य च ‡

---

* छ० आ० ३, २, ४, २ ( १भा० ५६४ पृ० ) = ऋ० वे० ६, ४, ३७, ३ ।

† ऋ० वे० ६, ४, ३७, ४ ।

‡ 'क्षयो निवासः, तस्य' —इति वि० ।

"विधर्त्ता असि हि" अस्मभ्यं दातुं धारको भवसि खलु। हे "गिर्वणः" गीर्भिर्वननीय! "मघवन्" धनवन्निन्द्र! "तं" तादृशं "त्वा" त्वाम् "वयं" "सुतावन्तः" अभिषुत-सोमाः "हवामहे" आह्वयामः।

"राधसस्पते"-"राधस्पते"—इति पाठौ, "विधर्त्ता"-"विधर्त्ते"—इति च ॥ २ ॥ १५

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य दशमस्याध्यायस्य दशमः खण्डः * ॥ १० ॥

१ २ १ २२ १ २२ २
॥ समन्तम् ॥ यतइन्द्रभयामहायि। ततोनोआभ

१ १ २ १ २
यङ्कधायि। मघवा२३का। ग्धायितवतत्। नऊताया।

२ २ ३२ २ १ २ १ २ २
औहो३४वाहायि। वि। द्वायिषो२३वी३। होवा३हा

२ १२ २ १ २२ १ २२
३हायि। न्मृधोजा१२हा३४३यि ॥(१) विद्विषोविमृधोज

१ २ २ १२ २
हायि। विद्विषोवायिमृधोजहायि। तुवꣳहा२३यिरा।

१ २ ३२ २ ३२ २ १ २
धसोमाहा। औहो३४वाहायित्त। यास्या२३सी३।

---

* 'उक्तो माध्यन्दिनः पवमानः नवममहः। वामदेव्यं मैत्रावरुणं साम, आयन्तीयं ब्रह्मसाम, गायत मच्छावाकं साम च'—इति वि०।

१ २ २ १ २ १ २ २र २ १
होवा३हायि। विधा२३र्त्ता३४३ ॥(१) त्वयस्यासोविधर्त्ता।
र २ १ २ १ २ ३र २
तन्वावा२३याम। माघवन्नि। द्रुगायिर्वाणा। औहो
३र २ १ २ १ २ २
३४वाहायि। सु। नावा२३न्ना३। होवा३हायि। ह
१र २ १
वामा२३हा३४३यि। औ२३४५ई। डा(३) ॥ १०* ॥ [१] १५

अथैकादश-खण्डे—

त्वंसोमेति-त्वचात्मकं प्रथमं सूक्तमाह,

तत्र प्रथमा।

१ २ २ १ ३ १र २र ३ २
त्वꣳसोमासिधारयुर्म्मन्द्रओजिष्ठोअध्वरे।
१ २ ३ १ २
पवस्वमꣳहयद्रयिः ॥ १¶ ॥

हे "सोम!" अभिषूयमाण-पवमान! "मन्द्रः" मादयितृतमः "ओजिष्ठः" ओजस्वितमः त्वम् "अध्वरे" हिंसा-रहितेऽस्मदीये यज्ञे "धारयुः" अभिषव-धारा-कामः "असि" भवसि।

---

* ऊ० गा० ४प्र० २अ० १०सा०।

† 'इदानींसामैवः पवमानः'—इति वि०।

‡ 'त्वं सोमासि धारयुरिति अध्वलक्त प्रभृतीनि सामानि ब्राह्मणोक्तार्थानि'—इति वि०।

¶ ऋ० वे० ७, २, २३ १।

३

ततः "त्वं" "मंहयद्रयिः" स्तोतृभ्यः प्रदीयमान-धनः सन्* "पवस्व" द्रोणकलशे ग्रहादिषु दशापवित्रेण पूतो भव [ यद्वा, "धारयुः" तद्वदर्थे भाष्यत इति मत्वर्थीयो युस् ]। हे सोम! त्वं धारावानसि ततः पवस्वेति सम्बन्धः॥ १॥

अथ द्वितीया।

२ १ २ ३ १ २ ३ १ २ ३ १ २
त्वꣳसुतोमदिन्तमोदधन्वान्मत्सरिन्तमः।
१ २ २ १र २र
इन्दुःसत्राजिदस्तृतः॥ २† ॥

हे सोम! "सुतः" अभिषुतः "त्वं" "मदिन्तमः" अतिशयेन मदयुक्तोऽसि। कीदृशस्त्वम्? "दधन्वान्" यज्ञस्य धारकः, "मत्सरिन्तमः" अतिशयेन मदकारी,‡ "इन्दुः" दीप्तः, "सत्राजित्" बहूनां जेता,¶ "अस्तृतः" केनाप्यहिंसितः॥

"मदिन्तमः"-"नृमादनः"—इति पाठौ, "इन्दुःसत्राजिदस्तृतः"—"इन्द्रायसूरिरन्धसा"—इति च॥ २॥

अथ तृतीया।

१ २ ३ १र २र ३क२र ३ १ २
त्वꣳसुष्वाणोअद्रिभिरभ्यर्षकनिक्रदत्।
१ २ ३ २ ३ १ २
द्युमन्तꣳशुष्ममाभर॥ ३§ ॥ १६

* 'यद्यपि मंहतिः पूजार्थः तथाप्यत्र लाभार्थो द्रष्टव्यः'—इति वि०।

† ऋ० वे० ७, २, १३, २।

‡ 'मत्सरिन्तमः—भक्षणीयतमः—इति वि०।

¶ 'सत्राजित्—सदा जेता अथवा सहजेता'—इति वि०।

§ ऋ० वे० ७, २, १३, ३।

हे "पवमान" सोम! "अद्रिभिः" ग्रावभिः "सुष्वाणः" सुन्वानः अभिषूयमाणस्त्वं "कनिक्रदत्" भृशं शब्दं कुर्वन् "अभ्यर्ष" कलशं पात्राणि चाभिगच्छ। किञ्च "द्युमन्तं" दीप्तियुक्तं "शुष्मं" शत्रूणां शोषकं बलं वा "आभर"* ॥

"आभर"-"उत्तमम्"—इति पाठौ ॥ ३ ॥ १६

२ ३र ४ ५ र

॥ आश्वसूक्तम् ॥ आश्रौहोवाहायि। तुवꣳसोमा।

२ १ २र र ३र २ २र र १ र

सिधा। रयुः। ऐहीयैहौ१। मान्द्रओजिष्ठोआध्वरे।

२र र ३र २ १ १ १

ऐहीयैहौ१। आ२यि। पावा२स्वामा२। हयत्।

३ ५र र २ ३र ४ ५

रा२या२३४औहोवा॥(१) आश्रौहोवाहायि। तुवꣳसु

२ १ २र र ३र २ २र

ताः। मदायि। तमः। ऐहीयैहौ१। दाधन्वान्मत्स

१ २र र ३र २ १ १

रायिन्तमः। ऐहीयैहौ१। आ२यि। आयिन्दू२ःसा

१ २ ५र र २ ३र

ना२। जिद। स्ता२र्त्ता२३४औहोवा॥(२) आश्रौ

४ ५ २र १ २र र ३र

होवाहायि। तुवꣳसुष्वा। णोआ। द्रिभिः। ऐहीयै

२ १ १ २र र ३र २

हौ१। आभियर्षकनायिक्रदत्। ऐहीयैहौ१। आ२

* स्वर्विदमिति प्रतीक-ग्रहणं स्वर्गस्य वेत्तारमिति तद्व्याख्यानञ्चात्र विवरणे प्रामादिक इव उपलक्ष्यते।

यि। द्यूमा२न्नाष्ठ२। अमा। भा२रा२३४औहोवा। भुक्ष्वाकृता२३४५:(३) ॥ ११* ॥ [१]

॥ शाम्मदम् ॥ तुव७ सोमासिऐ। हौऐहौ२३४या। धारयुरै२हौ३या। मन्द्रओजिष्ठोअध्वरऐ२हौऐ२हौ३या। प्रावास्वामा३१२३। ह्वयो२३४वा। रा५योद्दा यि ॥(१) तुव७ सुतोमऐ। हौऐहौ२३४या। दिन्तमरै२हौऐ२हौ३या। दधन्वान्मत्सरिन्तमऐ२हौऐ२हौ३या। आयिन्दू:साना३१२३। जिहो२३४वा। स्वा५नोई्द्दा यि ॥(२) तुव७ सुषाणऐ। हौऐहौ२३४या। अद्रिभिरै२हौऐ२हौ३या। अभियर्षकनिक्रदरै२हौऐ२हौ३या। द्यूमान्नाष्ठ ३ १ २ ३। अमो २ ३ ४ वा। भा५रोद्दा वि(३) ॥ १२† ॥ [२]

---

* ऊ० गा० ५प्र० २अ० ११सा०।

† ऊ० गा० ५प्र० २अ० १२सा०।

॥ दावसुनिधनम् ॥ तुवꣳसोर२३मासिधारयुर्हाउ ।
मान्द्र ओजि । ष्ठो आध्वा१रा२३यि । होवा३हायि । प
वास्वा१मा२३ । होवा३हा । इयत् । रा२या२३४औ
होवा ॥(१) तुवꣳमूर२३तोमदिन्तमोहाउ । दधन्वान्मत्स
रायिन्ता१मा२३ः । होवा३हायि । इन्दूःसा१त्रा२३ ।
होवा३हा । जिद । स्ता२र्त्ता२३४औऔहोवा ॥(२) तु
वꣳमूर२३षाणो अद्रिभिर्हाउ । आभियर्ष । कनायिक्रा१
दा२३तु । होवा३हायि । द्युमान्ता१ꣳशूर२३ । होवा
३हा । पमसा । भा२रा२३४औहोवा । ए३ । दाव
सूर३४५(३) ॥ १२* ॥ [३]

॥ प्रतीचीनेडकाणीतम् ॥ त्वꣳसोमासि । धा२रयूः ।
मान्द्र ओजि । ष्ठो आध्वरा२३४यि । हाहोयि । पवस्व

* ऊ० गा० ५प्र० २ख० १२मा० ।

२ २ १ ४ ५ १ २
माꣳहा३यात्। रयायिः। औ२३होवा॥(१) त्वꣳसु
१२ २ १ २५ १ ७
तोम। दा२यिन्तमाः। दाधन्वान्म। त्सरायिन्तमा२
२र २ १ २ २ १ २
३४ः। हाहोयि। इन्दुःसत्राजी३दा। स्तुता। औ३
४ ५ १ २र १ २
होवा॥(२) त्वꣳसुष्वाणः। आ२द्रिभायिः। आभियर्षी
१ ७ २र २ १ २ २
कनायिक्रदा२३४त्। हाहोयि। द्युमन्तꣳशुष्मा३मा।
१ २ ४ ५ ४ ५
भरा। औ३होवा। ई३डा(३)॥ १४*॥ [४]

२ र र रर १२ १
॥ हाविष्कृतम्॥ त्वꣳसोमासिधाहाउरायूः। मन्द्र
र र २ १
ओजायि। ष्ठोआ३व्वा२३रायि। पवा२हो१। स्वा२३
२ १ ३ ५र र २ र
मा। हयत्। रा२या२३४औहोवा॥(१) त्वꣳसुतोम
र र १ २ १ र २ १
दाहाउतामाः। दधन्वान्मा। त्सरिन्तार३माः। इन्दू
२ १ २ ५र र
२र्हो१यि। सा२३त्रा। जिद्द। स्ता२त्ता२३४औहो
२ र र र १ २ १
वा॥(२) त्वꣳसुष्वाणआहाउद्रायिभायिः। अभियर्षा।

---

* ऊ० गा० ५प्र०२अ० १४सा०।

२ २ १२
कनिक्का२३द्रात्। द्युमा२ह्वो१। तार३७ष्णू। यमा।
३ ५र ५र २ २३१११११
भा२रा३३४औहोवा। ह्विष्कृते२३४५(३) ॥१५*॥[५]१६

अथ तृचात्मके द्वितीय-सूक्ते—

प्रथमा।

१२ ३१२ ३२३ १ २ ३१२
पवस्वदेववीतयइन्दोधाराभिरोजसा।
२ ९ २ १२
आकलशम्मधुमान्त्सोमनःसदः ॥ १† ॥

हे "इन्दो" सोम! "देववीतये" देवानां भक्षणाय "ओजसा" बलेन "धाराभिः" आत्मीयाभिः "पवस्व" क्षर। हे "सोम!" "मधुमान्" मदकर-रसवान् त्वं "नः" अस्मदीयं "कलशं" द्रोणाभिधानम् "आसद" आसीद [ सदेर्लुङि रूपम् ] ॥ १ ॥

अथ द्वितीया।

१२२१ २३१२२ ३१२
तवद्रप्साउदप्रुतइन्द्रम्मदायवावृधुः।
२ ३ १ २ ३१ २९१२
त्वान्देवासोअमृतायकम्पपुः ॥ २‡ ॥

---

* ऊ० गा० ५प्र० २ख० १५सा०।

† छ० आ० ६, २, ३, ६ (२भा० ११३ पृ०) = ऋ० वे० ७, ५, १०, २।

‡ ऋ० वे० ७, ५, १०, ३।

"उदप्रुतः" वसतीवर्य्याख्यमुदकं प्रति गच्छन्तः* [यद्वा, उदकस्य निर्गमयितारः] "तव" स्वभूताः "द्रप्साः" द्रुतगामिनो रसाः† "मदाय" मदार्थम् इन्द्रम् "वावृधुः" वर्द्धयन्ति । ततः "देवासः" देवा इन्द्रादयः "कं" सुखकरं‡ "त्वाम्" "अमृताय" अमरणार्थं "पपुः" पिबन्ति ॥ २ ॥

अथ तृतीया ।

१ २ ३ २ २ ३ २
आनःसुतासइन्दवःपुनानाधावतारयिम् ।
३ १ २ ३ १ २
वृष्टिद्यावोरीत्यापःस्वर्विदः ॥ ३¶ ॥ १७

हे "सुतासः" अभिषूयमाणाः ! हे "इन्दवः" सोमाः पात्रेषु क्षरन्तो वा "रीत्यापः" यैः पृथिवीं प्रति स्रवणशीला आपः, तादृशा हे सोमाः ! "पुनानाः" पूयमानाः यूयं "नः" अस्मभ्यं "रयिम्"§ "आ धावत" आगमयत । कीदृशाः ? "वृष्टिद्यावः"‖ वृष्टिमभि द्यौर्यैः क्रियते, वृष्ट्यभिमुख-द्युलोकवन्तः "स्वर्विदः" सर्वस्य लम्भकाः** ॥ ३ ॥ १७

* 'उदप्रुतः—उदकेन प्लाविताः'—इति वि० ।

† 'द्रप्साः—द्रव्यभूताः सोमाः'—इति वि० ।

‡ 'कं—जातिभूतम् अथवा कम् उदकभूतम्—इति वि० ।

¶ ऋ० वे० ७, ५, १०, ४ ।

§ 'रयिं—सोमाख्यं धनम्'—इति वि० ।

‖ 'वृष्टिद्यावोरीत्यापः—यथा द्युलोके भवान् वृष्टिः रीतिभिः सङ्घातः'—इत्यादि वि० ।

** 'स्वर्विदः—स्वर्गस्य वेत्तारः'—इति वि० ।

॥ वैश्वमनसम् ॥ पवस्वदेववीता३यायि। आयिन्दो

धारा२। भिरो३४५। जमन्त्राकलशम्मधुमान्त्सोर२३४५।

मना२ः। मादा२ग्रा२३४औहोवा ॥(१) तवद्रप्सोउदप्रु

३ताः। आयिन्द्रम्मदा२। यवा३४५। वृधुरात्वान्देवा

सोअमृता२३४५। यका२म्। पापूरारा२३४औहोवा ॥(२)

आनःसुतासइन्दा३वाः। पूनानाधा२। वता३४५। रयि

मावृष्टिव्यावारीत्यापा२३४५ः। सुवा२ः। वोयिदार२आर

आर३४औहोवा। ऊ२३४५(३) ॥ १७* ॥ [१]

॥ सुज्ञानम् ॥ पवस्वदा। ववीतयायि। इन्दोधा

रा२। भिरोजमा। आकलाशा२म्। मधु। मार

न्त्सोर३४औहोवा। मनःमदए३ ॥(१) तवद्रप्साः। उद

प्रुताः। इन्द्रम्मादा२यिवावृधः। तुवान्दायिवा२। सा

* ऊ० गा० प्र० ५ अ० १७सा०।

१ ३ ५र र १ २ २र
अ। मा२र्त्ता२३४औहोवा। तकम्यपुरे३॥(२) आनः
१ २र १ र १
सुता। सइन्दवाः। पुनानाधा२। वतारयायियिम्।
२ १ २ १ ३ ५र र १ २
वृष्टिद्यावा२ः। रीति। अ२पा२३४औहोवा। सुवर्वि
१ १ १ १ १
दए३उपा२३४५(३)॥ १८*॥ [२] १७

अथ तृचात्मके तृतीय-सूक्ते —

प्रथमा।

२ ३ १ २ ३ १र २र ३ १ २ ३ १ २
परित्यꣳहर्यतꣳहरिम्बभ्रुम्पुनन्तिवारेण।
२ ३ २उ ३ २उ ३ १ २ ३ १र २र
योदेवान्विश्वाꣳइत्परिमदेनसहगच्छति॥ १†॥

"हर्यतं" सर्वैः स्पृहणीयं "हरिं" हरितवर्णं "बभ्रुं" बभ्रुवर्णं च "त्यं" तं सोमं "वारेण" वालेन पवित्रेण "परि पुनन्ति" परिशोधयन्ति "यः" सोमः "विश्वान्" एतत्सर्वानिन्द्रादीन् देवान् अनेन "मदेन" मादकेन रसेन "सह" "परि गच्छति" ॥ १ ॥

---

* ऊ० गा० ११प्र० २अ० १९सा०।

† ऋ० आ० ६, २, १, ८ (२भा० १६७पृ०) = पुनरिहैव ८, २, ८, ३ = ऋ० वे० ७, ४, २४, १।

अथ द्वितीया।

२उ ३ १२ ३ १२ ३ १ २

द्विर्यम्पञ्चस्वयशसꣳसखायोअद्रिसꣳहतम्।

३ १र २र ३ २ २ ३ १२ ३ १ २

प्रियमिन्द्रस्यकाम्यम्प्रस्नापयन्तऊर्म्मयः॥ २* ॥

"द्विः पञ्च"† दश-सङ्ख्याकाः "सखायः" समान-ख्याना अङ्गुलयः ‡ "स्वयशसं" स्वभूत-यशस्कम् ¶ "अद्रिसंहतम्" ग्रावभिरभिषुतम् "इन्द्रस्य प्रियं" "काम्यं" सर्वैः काम्यमानम् "ऊर्मयः" § [द्वितीयैकवचने प्रथमा-बहुवचनम्] ऊर्मिं प्रभूततरं "यं" सोमं "प्र स्नापयन्ते" वसतीवरीभिः प्रकर्षेण सेवयन्ति [यद्वा, ऊर्मयइत्यङ्गुलि-विशेषणं प्रभूता इति]; तं सोमं पुनन्तीति पूर्वेण सम्बन्धः॥

"सखायः"-"स्वसारः"—इति पाठो, "प्रस्नापयन्तऊर्मयः"-"प्रस्नापयन्त्यूर्मिणम्"—इति च॥ २॥

अथ तृतीया।

१ २ ३ १ २ ३ १र २र

इन्द्रायसोमपातवेवृत्रघ्नेपरिषिच्यसे।

१ २ ३ १ २ ३ १ २ ३ १२

नरेचदक्षिणावतेवीरायसदनासदे॥ ३ ‖॥ १८

* ऋ० वे० ७, ४, २२, ६।

† 'द्विः—द्विःकृत्य। यं सोमं। पञ्च ऋत्विजः'—इति वि०।

‡ 'सखायः—ऋत्विजः'—इति वि०।

¶ 'स्वयशसं—स्वयशसा सम्पन्नम्'—इति वि०।

§ 'ऊर्मयः—उदक-सङ्घाताः'—इति वि०।

‖ ऋ० वे० ७, ४, २४, ४।

हे "सोम !" "वृत्रघ्ने" वृत्रस्य हन्त्रे "इन्द्राय" [ षष्ठ्यर्थे चतुर्थी ] इन्द्रस्य "पातवे" पानार्थं "परिषिच्यसे" परितः पात्रेषु सिच्यसे वसतीवरीभिर्वा। किञ्च "दक्षिणावते" ऋत्विग्भ्यो दक्षिणा-दानेन तद्वते, "वीराय" विक्रान्तायेन्द्राय हवींषि दातुं "सदनासदे" यज्ञ-यज्ञे सीदते,* "नरे"† मनुष्याय यजमानाय तस्मै फल-प्रदानार्थं परिषिच्यसे ॥

"वीराय"-"देवाय"—इति पाठौ ॥ ३ ॥ १८

५ ३ २ ४ ५
॥ गौरीवितम् ‡ ॥ परि। त्यꣳहा३। र्यतꣳहरायिम्।
१ २ २ १ २ २ २ ४२
बभ्रुम्पुनन्तिवारेणार ३। योदेवान्वा३१२३यि। श्वाꣳ
१२ २ ४ ५ ४
आ५यित्यरायि। मादेनसा३१२३। हगोवा। क्वा५तो
५ ५ ३ २ ५ १ २
इहायि ॥(१) द्वियम्। पन्त्वा३। स्वयशसाम्। सखा
२ १ २ ४
योअद्रिसꣳहतार३म्। प्रायमिन्द्रा३१२३। स्यका५मि
१ २ २ ४ ५ ४ ५
याम्। प्राप्तापया३१२३। तओवा। मा५योइहायि ॥(२)
५ २ ३ २ ४ २ ५ १ २
इन्द्रा। यसो३। मपातवायि। वृत्रघ्ने परिषिच्यसा२३

---

* 'सदनासदे—यानि यज्ञे सदनानि द्रोणकलश-प्रभृतीनि, तेषु आसीदति।' इति वि०।

† 'नरे—नराकारे'—इति वि०। ‡ "महागौरीवितम्"—इति ख०-पु०-पाठः

यि । नारेचदा३१२३ । श्रिणा५वनायि । वाश्रिरायसा ३१२३ । इनोवा । सा५दोईस्वायि(३) ॥ १८* ॥ [१]

॥ निद्दवम् ॥ आयिहो३ । आयिही । एद्दिया । ओ२३४वा । हायि । परित्य९ हर्यता३९ हारा३यिम् । हारायिम् । हरा । ओ२३४वा । हायि । बभ्रुम्पुन न्तिवा३रेणा३ । रेणा । रेणा । ओ२३४वा । हायि । योदेवान्विश्वा९ ई३त्पारा३यि । पारायि । परा । ओ२३४वा । हायि । मदेनसहगा३च्छाता३यि । च्छातायि । च्छता । ओ२३४वा । हायि ॥(१) हिर्यम्पञ्चस्वया३ ग्रासा३म् । ग्रासाम् । ग्रसा । ओ२३४वा । हायि । सखायोअद्रिसा३९ हाता३म् । हाताम् । हता । ओ २३४वा । हायि । प्रियमिन्द्रस्यका३मा३या३म् । मा

* ऊ० गा० ५प्र० २ख० १८वा० ।

२ ३ २ ३ ५ २ २ २
याम्। मिया। ओ२३४वा। हायि। प्रज्ञापयन्त ऊ

३ १ २ १ २ ३ ५ २ २
र्म्मीयाऽः। मया। ओ२३४वा। हायि॥(२) इन्द्रा

२ २ १ २ १ २ ३ २ ३ ५
यसोमपा३तावा३यि। तावायि। तवा। ओ२३४वा।

२ २ ३ १ १ १ २ ३ २
हायि। वृत्रघ्नं परिषी३च्यासा३यि। च्यासायि। च्यसा।

३ ५ २ २ २ १ २ १ २
ओ२३४वा। हायि। नरे चदक्षिणा३वाता३यि। वाता

३ २ ३ ५ २ २ २ २ १
यि। वता। ओ२३४वा। हायि। वीरायसदना३सा

२ १ २ ३ २ ३ ५ २
दा३यि। सादायि। सदा। ओ२३४वा। हायि।

१ २ १ २ ३२ १ ३ ५ २
आयिही३। आयिही। एहिया। ओ२३४वा। हा

५२ २ ३ १ १ १ १
३४। औहोवा। ई२३४५(३)॥ १८*॥ [२]

१ २ १ २ १ २
॥ यद्वाहिष्ठीयम्॥ परित्यꣳहर्य्यतꣳहरिम्। परि

१ २ १ २ १२ २
त्यꣳहोवा। यंतꣳहरायिम्। बभ्रुम्पू२३ना। तिवारे

२ २ २ २ १ २
णा। योदेवार३न्वायि। श्वाꣳदूत्परायि। मदेना२३

सा। इगच्छा२३ता३४३यि ॥(१) द्वियम्मन्त्वस्वयशसम्।

द्वियम्मन्त्वोवा। स्वयशसाम्। सखायो२३आ। द्रि

सञ्हताम्। प्रियमा२३यिन्द्रा। स्यकामियाम्। प्रखा

पा२३या। तऊर्म्मा२३या३४३ः ॥(२) इन्द्रायसोमपात

वे। इन्द्रायसोवा। मपातवायि। वृत्रघ्ना२३यिपा।

रिषिच्यसायि। नरेचा२३हा। क्षिणावतायि। वीरा

या २ ३ सा। दनासा२३दा३४३यि। औ २ ३ ४ ५ई।

डा(३) ॥ २०* ॥ [३]

॥ आसिताद्यम् ॥ परित्यञ्हर्य्यताम्। हरायिम्।

बभ्रुम्पुनन्तिवा२३रेणा। योदे२वान्वा२यि। श्वाञ्इ

त्परायि। मादे२नासा२। इगोवा३औ२३४वा। च्छा

पूताइ३हायि ॥(१) द्वियम्पन्त्वस्वया। शसाम्। सखाये

---

* सा० गा० ५प्र० १ख० २०सा०।

अद्रिस७हा२३ताम्। प्राया२मायिन्द्रा२। स्यकामि याम्। प्रास्ना२पाया२। तओवा३ओ२३४वा। माप् योह्वायि॥(२) इन्द्रायसोमपा। तवायि। वृत्रघ्नेप रिषिच्या२३सायि। न्तारे२चादा२। क्षिणावतायि। वाधिरा२यासा२। इनोवा३ओ२ ३ ४ वा। साप्दोह् हायि(३)॥ १*॥ [४]

॥ साध्रम्॥ परित्या३७हर्य्यन७हरायिम्। बभ्रू पुना२। निबा३४५। इ२३४णा। योदेवान्विश्वा७ इत्परा२३४५यि। मादाओ२३४वा। नासाओ२३४वा। ह्वगा५क्रतायि॥(१) द्विर्य्यम्पा३स्वयशसाम्। सखा योश्वा२। द्रिसा३४५। हा२३४ताम्। प्रियमिन्द्रस्यका मिया२३४५म्। प्रास्नाओ२३४वा। पायाओ२३४वा।

---

* ऊ० गा० ६प्र० १अ० १सा०।

४ ५ र २ ४र ५ ४र ५ २१ २र
तऊ५र्मयाः ॥(२) इन्द्रायाऽ३सोमपातवाऽयि। वृत्राघ्नेपा
२ २ ३ ५ १र२१ २र २ ११
२। रिषाऽ३४५यि। च्याऽ२३४से। नरेचदक्षिणावताऽ२३
११ १ २ ३ ६ १ २ ३ ५ ४
४५यि। वायिराऔ२३४वा। यासाऔ२३४वा। दना
४
५सदायि। होऽ५इ। डा(३) ॥ २* ॥ [५]

२१ ४५ २
॥ वसिष्ठस्याकूपारम् ॥ परित्याऽ२३ऽहर्य्य। तऊ
६ ५ १ १ २र१र २र र१
हाऽ२३४रायिम्। बभ्रूऽ२म्बुना। तिवारेणा। योदेवान्वाऽ२
र १ २र१ १ ४
यि। श्वाऽइत्परायि। मदेवासाऽ२३। हाऽ२३गाऽ३।
२ ५ २ १ ४ ५ २ २
च्छाऽ३४५तोऽ६हायि ॥(१) द्विर्य्यम्याऽ२३ऽस्व। यशाऽ२३४
५ ५ १र १ १ २ १
साम्। सखाऽ२योऔ। द्रिसऽहताम्। प्रियमायि
र १ २र १ १ ४
न्द्राऽ२। स्यकामियाम्। प्रक्षापायाऽ२३। ताऽ२३जऽ३
२ ५ २ १र ४र ५ २र ३
माऽ३४५योऽ६हायि ॥(२) इन्द्रायाऽ२३सोम। पाताऽ२३४
५ १ १र २ १ २र १
वायि। वृत्राऽ२घ्नेपा। रिपिच्छ्यसायि। नरेष्वादाऽरक्षि

* ऊ० गा० ६प्र० १स० २सा० ।

२ १ २र २ १ १ ४ २

णावतायि । वीरायासा२३ । दा२३ना३ । सा ३ ४ ५

५

दो६हायि(३) ॥ ३* ॥ [६]

२ २ २ ४ ५

॥ व्यावास्वम् ॥ परा३१यि । त्या३उह । र्य्यंतम् ।

२ ४ ५ १ २र

हा ३ रिम् । एह्यिया । वा । भ्रुम्युनन्तायि । वा ।

१र १र २ २ १र २ ४

रेणा२ । एह्यिया२ । योदेवान्वायिस्वा२उआ३यित् ।

५ २र १र २ १

पा २ ३ ४ रायि । ऐहा२यि । एह्यिया२ । मदेनस

२ ४ २ ५ २ २

हा३गा३ । च्छा ३ ४ ५ तो ६ हायि ॥(१) दिव्या ३१ म् ।

२ ४ ५ २ ४ ५ १ २ २

पा३न्त । स्वय । शा३सम् । एह्यिया । सा । स्वायोभद्रा

२ १ १र १ २ ४

यि । स । हता२म् । एह्यिया२ । प्रियमिन्द्रास्या३का

५ २र १र २ १

३ । मा२३४याम् । ऐहा२यि । एह्यिया२ । प्रस्वाप

२ ४ २ ५ ३ २ २

यान्ता३ऊ । मा३४५योऽ६हायि ॥(२) इन्द्रा ३ १ । या३

४र ५र २ ४र ५ १ २ २

सो । मपा । ता३वे । एह्यिया । वा । चघ्नपरायि । पि ।

---

* ऊ० गा० ६प्र० १अ० ३खा० ।

१ १र २१ २ ४
च्यसा२यि । एह्रिया२ । नरेचदाचा३यिणा३ । वार
५ २र १र २ २ १ २ ४
३४तायि । ऐहा२यि । एह्रिया२ । वीरायसादा३ना
२ ५
३ । सा३४५दौ६हायि(३) ॥ १* ॥ [७]

२ २ १
॥ आन्धीगवम् ॥ परित्य(ं)हर्यता१(ं)हारायिम् । ब
२ १ १र २ २र १र
भ्रुम्पु । नन्ता२३यिवा । ऊम्मा२१ऽ२ । रेणायोदेवाञ्चि
२र १ २ ३ १ १ १ १ १ २ २ १
श्वा(ं)इत्परा२३४५यि । मादा३उवा । ना२सा । हा२
२ १ २ ४ ५ २
३गा । च्छता । औ३होवा ॥(१) द्विर्यम्पञ्चस्वया१शा
२ १ २ २ १ १
साम् । सखायः । अद्रा२३यिसा । ऊम्मा२१ऽ२ । ह
२ १ २ ३ १ १ १ १ १ २ २
तम्प्रियमिन्द्रस्यकामियारे३४५म् । प्रास्ना३उवा । पा२
१ २ १ २ ४ ५ २ २ २
या । ता२३ऊ । मया । औहोवा ॥(२) इन्द्रायसो
२ १ २ २ १
मपा१तावायि । वृत्रघ्ने । परा२३यिषा । ऊम्मा२१ऽ२ ।
१ २ २ २ १ २र ३ १ १ १ १ १ २
च्यसेनरेचदक्षिणावतार३४५यि । वायिरा३उवा । या२

* ऊ० गा० १९प्र० २ख० १सा० ।

१ २ १ २ ४ ५ ४
सा। दा२३ना। सदा। औ३ होवा। चो५ ई।

डा(३) ॥ २* ॥ [८]

१ २ २ २ १
॥ आसिताश्वम् ॥ इन्द्रायसोमपा। तवायि। वृत्र

२ २ १ १ १२
घ्ने परिषिच्यार२३सायि। नारे२चादा२। त्रिणावता

१ १ २ १ ५ ४
यि। वायिरा२यासा२। दनोवा३ओ२३४वा। सा५

५ २ २२ १ २
दो६हायि ॥(१) तᳪसखायःपुरू। रुचाम्। वयंयूय

२ २ १ १ १
न्वसूरा२३याः। आभ्या२मावा२ जगन्वियाम्। सा

१ १ २ १ ५ ४ ५
ने२मावा२। जपोवा३ओ२३४वा। स्ताप्यो६हायि ॥(२)

१२१ २ १ २
परित्यᳪहर्यताम्। हरायिम्। बभ्रुम्पुनन्तिवा२२३

२ १ १ २ १ १
णा। योदे२वान्वा२यि। श्वाᳪइत्परायि। मादे२ना

१ २ १ ५ ४ ५
सा२। हगोवा३ओ२३४वा। क्का५तो६हायि(३)॥१६†॥[९]

---

* ऊ० गा० १२प्र० २खा० २सा०।

† ऊ० गा० १४प्र० २खा० १६सा०।

३ र २र १ ४र र ५
॥ ऐडकौत्सम् ॥ इन्द्राहोयार२३। सोमपातवई्या।
२ १र २ र १ र २ १र २ १
वृत्रघ्ने परिषिच्यसे। नारेचद। क्षिणावार२३तायि। वा
२ २ १ २ २ १र २
यिरा२३हा। यासा२३हा। इनासा२३दा२३४३यि ॥(१)
३ २र १ ४ र ५ २ १ २र १ २र १ २
तꣳसहोखा२३। यःपुरूरुचमोया। वयंयूयश्चसूरयः।
१ र २ र १ २ १ २ २ १ २
श्राश्यामवा। जगन्त्या२३याम्। साना३हायि। मावा
२ १ २ ३ र २ १
३हा। जपस्ता२३या३४३म् ॥(२) परीहित्वा२३म्।
४ ५ २ १ २ १र र २ १ र २र
हर्यतꣳहरिमोया। बभ्रुम्पुनन्तिवारेण। योदेवान्वि।
१ २ १ २ २ १ २ २ १
श्वाꣳइत्या२३रायि। मादा३हायि। नासा३हा। हग
२ २
च्छा२३ता३४३यि। ओ२३४पुई। डा(३)॥१७*॥[१०]
१ र २ र १र २ १
॥ प्रुद्धाप्रुद्धीयाद्यम् ॥ इन्द्रायसोमपातवायि। वृत्र
र २ १ २ १ र २ १र २ र
घ्नेपरिषिच्या२३सायि। नरेचदक्षिणावार२३तायि। वी
१र २ १ ३र २ ५र र २ १ १ १ १
राया२३सा३। दार। नासा३४औहोवा। दा२३४५

* ऊ० गा० १४प्र० २अ० १७सा०।

१ २र १२११ र २१र २
यि ॥(१) तꣳसखायःपुरुरूचाम् । वयंयूयन्चसूरा२३याः ।
१र र२१ २ १र २ २
अभ्यामवाजगन्ध्या२३याम् । सनेमा२३वा३ । जा २ ।
१२ ५र र ३ १ १ १ १ १२१ २ १
पस्ता३४औहोवा । या२३४५म् ॥(२) परित्यꣳहर्य्यतꣳ
२१ २ १र २ १र र र २र
हरायिम् । बभ्रुम्पुनन्तिवारे२३णा । योदेवान्विश्वाꣳ
१ २ १र २ १ ३ २ ५र
इत्या२३रायि । मदेना२३सा३ । हा२ । गच्छा३४औ
र ३ १ १ १ १
होवा । ता२३४५यि(३) ॥ १८* ॥ [११]

२ र १ र २र २र २
॥ कौत्सावम् ॥ इन्द्रायसौहो । मापातवायि । वृ
र १ २ ४ २ र १ र
त्रघ्ने पा३ । रायिषा३यिच्या५सा६५६यि । नरेचहौहो ।
१र १र २र र १ २ ४
क्षीणावतायि । वीरायसा३ । दाना३सा५दा६५६यि ॥(१)
२ १र र २र १र १ र १ २
तꣳसखायौहो । पूरूरूचाम् । वयंयूया३म् । चासू३
४ २ र १ र २र १ २ र
रा५या६५६: । अश्वामवौहो । जागन्धियाम् । सन
१ २ ४ २ १ र
मवा३ । जापा३स्ता५या६५६म् ॥(२) परित्यꣳहौहो ।

* ऊ० गा० १४प्र० २ख० १८सा० ।

२र १ २ १ २ ४
यीतꣳहरायिम्। बभ्रुग्पुना३। तायिवा३रेपूणा६५६।
२र र १र र २र १ २ र १ २
योदेवान्वैःह्वौ। स्वाꣳइत्परायि। मदेनसा३। हागा
४
इच्छापूता६५६यि(३) ॥ १८* ॥ [१२]

२ र १ २ २ ऽ
॥ रयिष्ठम् ॥ इन्द्रायसो। मपाता३वायि। औ३
२ २ १र २ ३ ११११ २ र
हो३वा। वृत्रघ्नेपरिषिच्यसा२३४५यि। वृत्रघ्नेपा। रि
१ २ २ ऽ २ २ १ र २ १ २र ३ ११
षायिच्या३सायि। औ३हो३वा। नरेचदक्षिणावता२३
११ २ र १ २ २ ऽ २ २
४५यि। नरेचदा। क्षिणावा३तायि। औ३हो३वा।
र १र २ र १ ३ ११११ २र र १ २ २
वीरायसदनासदा२३४५यि। वीरायसा। दनासा३दा
ऽ २ २ २ र १ ३ २ २
यि। औ३हो३वा॥(१) तꣳसखायाः। पुरूरुचाम्।
ऽ २ २ १ २र १ २र १ ३ ११११ २ र
औ३हो३वा। वयंयूयञ्चसूरया२३४५ः। वयंयूयाम्।
१ २ २ ऽ २ २ १ र २ १र २ ३ १ १
चसूरा३याः। औ३हो३वा। अश्यामवाजगन्धिया२३
११ २ र १ २ २ ऽ २ २
४५म्। अश्यामवा। जगान्धा३याम्। औ३हो३वा।

* ऊ० गा० १४प्र० ३ख० १८सा०।

१र२१र २ ३ १ १ १ १ २र १ २ २
सनेमवाजपस्तियार३४५म्। सनेमवा। जपास्ता३याम्।
५ २ २ २ १ २ २
औ३हो ३ वा ॥(२) परित्यꣳहा। यंताꣳहा३रायिम्।
५ २ १ १ २ १रर३ १ १ १ १ २
औ३हो३वा। बभ्रुम्पुनन्तिवारिणार३४५। बभ्रुम्पुना।
१ २ २ ५ २ २ १र२र१र २र १ २ ३ १ १
तिवारे३णा। औ३हो३वा। योदेवान्विश्वाꣳइत्परार३
१ १ २र र र र १ २ २ ५
४५यि। योदेवान्वायि। श्वाआयित्पा३रायि। औ३
२ २ १र २ १ २ ३ १ १ १ १ २र
हो३वा। मदेनसहगच्छतार३४५यि। मदेनसा। ह
१ २ २ ५ २ २ ५ २ २ ५ २
गाच्छा३तायि। औ३हो३वा। औ३हो३वा। ई३या।
५ २ ५ २ २
ई३या३४। हा। हाउवा३। ऊ३२३४पा(३) ॥२०*॥[१३]

४ ३ ४ २ ४र
॥ यज्ञायज्ञीयम्॥ इन्द्राऽ५य। सो३मा३पाता
५ १ र २ १ २ २ १ १
वायि। वार्त्रघ्नेपा। री३षायिच्या३सायि। नरे२च।
२ १ २ २ १ र
दक्षार३यिणा। ऊम्मायि। वा३तायि। वायिरायस
३ २ १ २ १र र र
दनारसदाउ॥(१) दायिताम्। सखायःपुरुहूतंवयंयु

* ऊ० गा० १४प्र० २अ० २०सा०।

२ १२ २ १ १ २ २
याम्। चाइसूरा३याः। अद्माऽ२म। वाजा२३गा।
१ २ २ १ २ २ ३ २
ऊम्मायि। धा३याम्। सानेमवाजपार२स्तियाउ ॥(२)
१ २ १ २ १ २ २
याम्पा। रित्यऽ५हर्य्यतऽ५हरिम्बभ्रुम्पुना। नोऽ३वारे२णा।
१२ १२ २ १ २ २
योदे२वान्। विश्वाऽ५२३त्था। ऊम्मायि। पा३रायि।
१ २ ३ २
मादेनसहगा२स्त्वताउ(३) ॥ २१* ॥ [१४]

१ २ १ २ १ २ १
॥ ऊर्द्ध्वत्वाष्ट्रीसाम ॥ परित्यऽ५हर्यतऽ५हरायिम्। बा
१ ३ २ ३ ५ १२ २२ २२ २२
भ्रु२म्पुना२। निवा३४५। रे२३४णा। योदेवान्विश्वाऽ५
१२ ३ १११ ३२ २१ २ १ २
इत्परा२३४५यि। मदेनसा। हगच्छा२३ता३४३यि ॥(१)
१ २ १ २ १ १ १२ ३ २
द्विर्य्यम्पञ्चस्वयशसाम्। साखा२यो३आ२। द्रिसा३४५।
६ ५ २ १ २ १२ ३ ११११ ३ २ २
हा२३४ताम्। प्रियमिन्द्रस्यकाम्मियार२३४५म्। प्रस्नाप
१ २ १२ २ १ २ २ २ १२ २ १
या। तऊम्मी२३या३४३ः ॥(२) इन्द्रायसोमपातवायि।
१ १२ ३ २ ३ ५ १ २ २ १
वार्त्रा२घ्नेपाः२। रिपा२३४यि। च्या२३४से। नरेचद

* ऊ० गा० १४प्र० २अ० २१सा०।

त्विणावतार२३४५यि । वीरायसा । दनासार२३दा३४३यि ।

औ२३४५ई । डा(३) ॥ ८* ॥ [१५]

॥ यज्ञायज्ञीयम् ॥ परा५यित्यम् । हा३र्यी३तं

हारायिम् । बाभ्रुम्पुना । ती३वारे३णा । योदे२वान् ।

विश्वं२३आ । ऊम्मायि । पा३रायि । मादेनसहगा

२च्छताउ ॥(१) नायिद्दायिः । यम्पञ्चस्वयशसं सखा

योआ । द्रो३साहा३ताम् । प्रिया२मि । द्रस्या २ ३

का । ऊम्मायि । मा ३ याम् । प्रास्नापयन्तऊ २ र्मा

याउ ॥(२) याआयि । द्रायसोमपातवेवृत्रघ्नेपा । री३

षायिच्या३सायि । नरे२च । दक्षा२३यिणा । ऊम्मा

यि । रा३तायि । वायिरायसदना२सदाउ । वा ३४५ (३)

॥ ८† ॥ [१६]

---

* ऊ० गा० १७प्र० १ख० ८सा० ।

† ऊ० गा० १७प्र० १ख० ६सा० ।

२ १ ४
॥ आसितोत्तरम् ॥ परायित्यार२३ऽहर्य्य तऽहरिऽ
५ १ र १ १ २ २
हाउ। बभ्रुम्पुनन्तिवारि २ ३ णा। योदेवा३न्वा३यि।
१ २ २ ५ १ २ २ २ १ ५
श्वाऽइत्पार२३४रायि। मदेना३सा३। हगोर३४वा।
४ ५
ह्वापुनोई हायि(३) ॥ २* ॥ [१७]

२ १ २
॥ वाङ्निधनक्रौञ्चम् ॥ परायित्याऽहा३१२३४। यं
५ ३ २ २ १ २ ५र ३र
तम्। हरा३यिम्। बभ्रु म्पु ना३१२३४। तिवा। रे
२ २र १ २ २ ५ ३ २
णा३। योदेवान्वा३१२३४यि। श्वाऽइत्। परा३यि।
२ १ २ ४ २ १ २
मदेनामा३१२३। हगापुक्तनाउ ॥(१) दिर्यम्यान्वा३
५ ३ २ २ १र र २
१२३४। स्वय। भसा३म्। सखायोआ३१२३४। द्रि
५ ३ २ २ १ २ ५र ३
स। हता३म्। प्रियामायिन्द्रा३१२३४। स्यका। मि
२ २ १ २ ४
या३म्। प्रस्तापाया ३ १ २ ३। तऊपुम्म याउ ॥(२)
२ १ २ ५र ३ २ २ १ र २
इन्द्रायासो३१२३४। मपा। तवा३यि। वृत्रघ्नेपा३१२

* ऊ० गा० १७प्र० २ख० १सा०।

५ ३ २ २ १ २ ५र
३४। रिषि। च्यसा३यि। नरेचारा३१२३४। स्विणा

३ २ २र १र २ ४
वता ३ यि। वीरायासा ३ १ २ ३। दना ५ सहाउ।

वा(३) ॥ ४* ॥ [१८] १८

अथ तृचात्मके चतुर्थ-सूक्ते—

प्रथमा।

१ २ ३ २उ ३ २ ३ २ ३ २ ३ १र २र
पवस्वसोममहेदक्षायाश्वोननिक्तोवाजीधनाय ॥ १† ॥

हे "सोम !" "अश्वो न" अश्वइव "निक्तः" वसतीवरीभि-रद्भिर्निर्णिक्तः,‡ "वाजी" वेगवान् त्वं "महे" महते "दक्षाय" बलाय¶ "धनाय" धनार्थं "पवस्व" क्षर ॥

"महे"—"क्रत्वे"—इति पाठौ ॥ १ ॥

अथ द्वितीया।

१ २ ३ २ ३ १ ३ १ २ ३ २ ३ १ २ ३ २ ३ १ २
प्रतेसोतारोरसम्मदायपुनन्तिसोमम्महेद्युम्नाय ॥ २§ ॥

---

* ऊ० गा० २०प्र० २अ० ४सा०।

† ऋ० शा० ५, १, ५, ४ (१भा० ८७४ पृ०) ऋ० वे० ७, ५, २०, १०।

‡ 'अश्वो न निक्तः—न-शब्द उपमार्थीयः अश्वइव स्नापितः'—इति वि०।

¶ 'दक्षाय—समर्धये अथवा दक्षिणे श्रौतकर्मणे यजमानाय'—इति वि०।

§ ऋ० वे० ७, ५, २१, १।

"सोतारः" अभिषोतारः ऋत्विजः, हे सोम! "ते" तव स्वभूतं "रसं"* "मदाय" मदार्थं "पुनन्ति"। तदेवोच्यते— "महे" महते "द्युम्नाय" ["द्युम्नं द्योततेर्यशो वान्नं वेति (निरु० नै० ५,५) यास्कः] अन्नाय यशसे वा पुनन्ति सोमं शोधयन्ति यद्वा, सोममभिषूयमाणं रसं पुनन्तीति एकवाक्यतया योजनीयम्॥

"प्रते"-"तन्वे"—इति पाठौ॥ २॥

अथ तृतीया।

१ २ ३ १र २र
शिशुञ्जज्ञानꣳहरिम्मृजन्ति

३ १ २ ३ १ २ ३ २ ३ १ २
पवित्रेसोमन्देवेभ्यइन्दुम्॥ ३†॥ १९

"शिशुम्" एषां पुत्रभूतं‡ "जज्ञानं" जायमानं "हरिं" हरितवर्णम् "इन्दुं" दीप्तं सोमं "देवेभ्यः" "पवित्रे"¶ "मृजन्ति" ऋत्विजा मार्जयन्ति॥ ३॥ १९

२र २ र २ र १
॥ विधर्म्मम्॥ ओहोइवा। ओहोइवा। ओहो

---

* 'रसं—वीर्यम्'—इति वि०।

† ऋ० वे० ७, ५, २१, २।

‡ 'शिशुं—शंसनीयम्'— इति वि०।

¶ 'पवित्रे—वालमये'—इति वि०।

२ ५र ५ १ २ र १ २ २र २ १ १ १ १
२वा२३४औहोइवा। पवस्वसोममन्द्रायाा २ ३ ४ ५।

१ २र १ २ १र १र ३ १ १ १ १ १ र २र १र २र १ २ १
अश्वोननिक्रोवा२जीधना२या२३४५। प्रतेसोनारोरसम्म

र २ १ १ १ १ २ १ २ १र २ १र २ १र १ १ १ १ १
दाया२३४५। पुनन्तिसोममन्द्युम्नाया२३४५। शिशु

२ र १ २ ३ १ १ १ १ २ १ २र १र २ र १र २ १ १ १
ञ्जज्ञानंहरिम्मृजन्ती२३४५। पवित्रेसोमदेवेभ्यइन्दू२३

१ १ १ २ र ३ १ १ १ १ २ १र २र २ १ १ १ १
४५म्॥(१) पवस्वसोमा२३४५। मन्द्रायाा२ ३ ४ ५।

१ २र १ २ २ २र १र ३ १ १ १ १ १ र २र १र २
अश्वोननिक्राः। वाजीधना२या२३४५। प्रतेसोनारा

१ १ १ १ १ २ १ र २ १ १ १ १ २ १ २ १र १ १ १ १
२३४५ः। रसम्मदाया२३४५। पुनन्तिसोमा२३४५म्।

२ १र २ १र १ १ १ १ १ २ ३र २ २
मन्द्युम्नाया२३४५॥(२) शिशुञ्जज्ञाना१म्। हरिम्मृज

३ १ १ १ १ २ १ २र १र १ १ १ १ २र १र २ ३ १ १ १ १
न्ती२३४५। पवित्रेसोमा२३४५म्। देवेभ्यइन्दू२३४५म्।

२र २ र १ २ ५र ५ २ १ २
ओहो२वा। २। औहो२वा२३४औहोइवा। ए३। विश्व

३ १ १ १ १
म्र्भा२३४५(३)॥ ४* ॥ [१] १९

* ऊ० गा० ६प्र० १ख० ४सा० ।

अथ तृचात्मके पञ्चम-सूक्ते—

प्रथमा ।

२ ३ २ ३ २ ३ १ २ ३ १२ ३१२

उपोषुजातमप्तुरङ्गोभिर्भङ्गम्परिष्कृतम् ।

१ २ ३ १ २

इन्दुन्देवाअयासिषुः ॥ १* ॥

"जातम्" प्रादुर्भूतम् "अप्तुरं" वसतीवरीभिः प्रेरितम् "भङ्ग" शत्रूणां भञ्जकम् "गोभिः" गोविकारैः पयोभिः "परिष्कृतम्" अलङ्कृतम् "इन्दु" सोमं "देवाः" इन्द्रादयः "उपायासिषुः" उपगच्छन्ति ॥ १ ॥

अथ द्वितीया ।

१२ ३१२ ३ २ ३ १ २ ३ १ २

तमिद्वर्द्धन्तुनोगिरोवत्सꣳसꣳशिश्वरीरिव ।

१२ ३१२ ३ १ २

यइन्द्रस्यहृदꣳसनिः ॥ २† ॥

"यः" सोमः "इन्द्रस्य" "हृदंसनिः"‡ हृदयस्य सम्भक्ता भवति "तमित्" तमेव सोमं "नः" अस्माकं "गिरः" स्तुतिरूपा वाचः "संवर्द्धन्तु" संवर्धयन्तु । तत्र दृष्टान्तः—"वत्सं"

---

* छ० आ० ६, १, १,१ ( २भा० ४३ पृ० )=इहैव १, २, १८, २ (२भा०२६३ पृ०) = ऋ० वे० ७, १, २०, ३ ।

† ऋ० वे० ७, १, २०, ४ ।

‡ 'हृदंसनिः—हृदिलाभः स्थितः'—इति वि० ।

वालं "शिश्वरीरिव" यथा शिश्वर्यौ बद्धपयस्कामातरौ वत्सं सम्यक् वर्द्धयन्ति तद्वदित्यर्थः ॥ २ ॥

अथ तृतीया ।

१ २ ३ १र २र ३ १ २ २ २ ३ १ २
अर्षानःसोमशङ्गवेधुक्षस्वपिप्युषीमिषम् ।

१ २ ३ १ १
वर्द्धासमुद्रमुक्थ ॥ ३* ॥ २०

हे सोम !" त्वं "नः" अस्माकं† "गवे" "शं" सुखम्‡ "अर्ष" चर¶। अपिच "पिप्युषीम्" प्रवृद्धाम्§ "इषम्" अन्नं‖ "धुक्षस्व" प्रपूरय**। किञ्च हे "उक्थ्य" प्रशस्य !†† "समुद्रम्"‡‡ "वर्द्ध"¶¶ वर्द्धय ॥

"अर्षानः"-"अर्षाणः"—इति पाठौ, "उक्थ्य"-"उक्थ्यम्"—इति च ॥ ३ ॥ २०

* ऋ० वे० ७, १, २०, ५ ।

† 'नः अस्मभ्यम्'—इति वि० ।

‡ 'शंगवे—गवां सुखार्थम्'—इति वि० ।

¶ 'अर्ष—गच्छस्व द्रोणकलशम्'—इति वि० । मूले त्वर्षादिति दीर्घान्तः पाठः "द्व्यचोऽतस्तिङः (६, ३, १३५)"—इति तत्र दीर्घः ।

§ 'पिप्युषीं—पान-समर्थाम्'—इति वि० ।

‖ 'सोमलक्षणं'—इति वि० ।

** 'धुक्षस्व—दुह्यस्व'—इति वि० ।

†† 'उक्था—उक्थानि सामानि'—इति वि० । एवञ्च "उक्था"—इति विवरण-पाठो गम्यते परं तत् प्रामादिकम् एव संहिता-पद-पुस्तकेषु तथा पाठादर्शनात् ।

‡‡ 'समुद्रं—द्रोणकलशम्'—इति वि० ।

¶¶ "वर्द्धा"—इति संहितायां दीर्घः ।

॥ अध्यम् ॥ उपोषुजा २ तम्। अप्तुरोवा। गोभि
भङ्गाम्। परिष्कृताम्। इन्दुदेवाअ। या२३। सि
षाउवा। अूधिया २ ॥(१) तमिद्वर्धा २ न्तु। नोगिरो
वा। वत्सꣳसꣳआयि। अवरीरिवा। यइन्द्रस्यव। हा
२३म्। सनाउवा। अूधिया २ ॥(२) अर्वानःसो २ म।
शंगवोवा। धुक्ष्वपायि। प्युषीमिषाम्। वर्धासमु
द्रम्। उ२३। क्थियाउवा। अूधिया २। ए२३हिया
३४३। ओ२३४५ई। डा(३) ॥ ५* ॥ [१]

॥ प्रतीचीनेडक्काशीतम् ॥ उपोषुजातम्। आ २
प्तुराम्। गोभिर्भङ्गम्। परायिष्कृता२३४म्। वाहो
यि। इन्दुदेवाआ२या। सिषूः। औ२३होवा ॥(१)
तमिद्वर्धन्तु। नो २ गिराः। वात्सꣳसꣳयि। अवरायि

* ऊ० गा० ३प्र० १अ० ५सा०।

रिवा२३४। हाहोयि। यद्रन्द्रस्याहाहा२हौम्। सनायिः।
औ२३होवा ॥(२) अर्षानःसोम। शा रङ्गवायि। धूच
स्वपि। प्र्‌षायिमिषा२३४म्। हाहोयि। वहीसम्
द्रा३म्। क्षियया। औ३होवा। ईडा(३) ॥ ११* ॥[२]२०

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य दशमस्याध्यायस्य-
एकादशः खण्डः† ॥ ११ ॥

---

अथ द्वादश-खण्डे‡—

आघायेअग्निमिति त्र्यृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा।

आघायेअग्निमिन्धतेस्तृणन्तिबर्हिरानुषक्।
येषामिन्द्रोयुवासखा॥ १¶ ॥

---

* ऊ० गा० १९प्र० २श्च० ११सा०।

† 'यज्ञायज्ञीयमग्निष्टोमसाम'—इति वि०।

‡ 'इदानीमुक्थानि'-इति वि०।

¶ ऋ० आ० २, १, ४, ९ (१भा० ७२० पृ०) =ऋ० वे० ६, ८, ४२, १= य० वे०
७, ३२।

"ये" ऋषयः "आ घा" आभिमुख्येन खलु "अग्निम्" "इन्धते" दीपयन्ति, येषाञ्च "युवा" नित्य-तरुणः "इन्द्रः" "सखा" भवति, ते "आनुषक्" आनुपूर्व्येण "बर्हिः स्तृणन्ति"॥ १ ॥

अथ द्वितीया ।

३ २उ ३ १ २ ३ १ २ ३ २ ३ १र २र

बृहन्निदिध्म एषाम्भूरिशस्तं* पृथुःस्वरुः ।

२ ३ २ ३ २ ३ १ २

येषामिन्द्रोयुवासखा ॥ २† ॥

"एषाम्" ऋषीणाम्‡ "इध्मः"¶ "बृहत् इत्"§ महान् खलु, "भूरि" बहु "शस्त" स्तोत्र-स्वरूपञ्च "पृथुः" महान् । सिद्धमन्यत् ॥ २ ॥

अथ तृतीया ।

१ २ ३ २ ३ २उ ३ २ ३ १ २ ३ १ २

अयुद्धइद्युधावृतꣳशूरआजतिसत्वभिः ।

२ ३ ३ ३ १ ३ १ २

येषामिन्द्रोयुवासखा ॥ ३ ‖ ॥ २१

---

* "शस्त"—इति ऋ०-पाठः ।

† ऋ० वे० ६, ३, ४२, २ ।

‡ 'येषां—यजमानानाम्'—इति वि० ।

¶ 'इध्मः—इन्धनार्थीयः'—इति वि०

§ 'इत्—इति पदपूरणः'—इति वि० ।

‖ ऋ० वे० ६, ३, ४२, ३ ।

"युवा इन्द्रः येषां सखा" तेष्वन्तर्भूतः कश्चित् "अयुद्ध इत्" प्रागयोद्धैव सन् "युधावृतं" योद्धृभिर्भटैरावृतं शत्रुं "सत्वभिः" आत्मीयैर्बलैः "शूरः" सन् "आजति"* नमयति ॥ २ ॥ २१

२र ३ र १ २ १
॥ ऐध्मवाहाद्यम् ॥ आघाये अग्निमिन्धानायि । वृण
र २ १ १र
न्निबर्हिरानुषाक् ॥(१) बृहन्निद्धिधाआयिषाम् । भूरिश्च
२ र १ २ १र र
त्त्वमपृथुःस्वरुः ॥(२) अयुद्धइद्युधावार्त्तम् । शूरआज
२१ १र र र
तिसत्वभायिः । येषामिन्द्रोयुवाइत्वा । ऊवायि । ऊ
५ ४ ५
वो२३४ । वा । साधूखोईहायि(३) ॥ ६† ॥ [१] २१

अथ यएकइति तृचात्मकं द्वितीयं सूक्तम्,

तत्र प्रथमा ।

२उ ३ २ ३ १ २ ३ १ २ १ २ ३ १ २
यएकइद्विदयतेवसुमर्त्तायदाशुषे ।
१ २ १ १ २ ३ १ २ ३ २
ईशानोअप्रतिष्कुतइन्द्रोअङ्ग ॥ १‡ ॥

---

* 'अजक्षेपणे'—इति वि० ।

† ऊ० गा० ६प्र० १अ० ६खा० ।

‡ छ० आ० ४, २, ५, ८ ( १भा० ७९८ पृ० )=ऋ० वे० १, ६, ६, २ ।

"यः" इन्द्रः "एकइत्" एकएव "दाशुषे" हविर्दत्तवते "मर्त्ताय" मनुष्याय यजमानाय "वसु" धनं "विदयते" विशेषेण ददाति "अङ्ग" [—इति क्षिप्र-नाम (निरु० नै० ५, १७)] "अप्रतिष्कुतः" परैरप्रतिशब्दितः प्रतिकूल-शब्द-रहित इत्यर्थः। एवम्भूतः स "इन्द्रः" क्षिप्रम् "ईशानः" सर्व्वस्य जगतः स्वामी भवति ॥ १ ॥

अथ द्वितीया।

२ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २
यश्चिद्धित्वाबहुभ्यआसुतावाँ आविवासति।

३ १२ ३२ ३ १ २ ३ १ २ ३ १
उग्रन्तत्पत्यतेशवइन्द्रोअङ्ग ॥ २* ॥

"बहुभ्यः" मनुष्येभ्यः सकाशात् "यः चित् हि"† यएव खलु यजमानः "सुतावान्" अभिषुत-सोम-युक्तः सन्। हे इन्द्र! "त्वा" त्वाम् "आ विवासति" परिचरति [विवासतिः परिचरणकर्म्मा (निघ० ३. ५, १०)] "तत्" तस्मै यजमानाय "उग्रम्" उद्गूर्णं "शवः" बलम् "इन्द्रः" "अङ्ग"‡ क्षिप्रं "आ पत्यते" आपतयति प्रापयति ॥ २ ॥

---

* ऋ० वे० १, ६, ६, ४।

† 'चित्-हि—इति पदपूरणौ'—इति वि०।

‡ 'अङ्गशब्दः पुत्रवाची'—इति वि०।

अथ तृतीया ।

१ २ ३ २ ३ १ २ ३ १ २ ३ २
कदामर्त्तमराधसम्पदाक्षुम्पमिवस्फुरत् ।

३ १ २ ३ १ ३ १ २ ३ २
कदानःशुश्रवद्गिरइन्द्रोअङ्ग ॥ ३* ॥ २२

"अराधसं" हविर्लक्षणेन राधसा धनेन रहितमयष्टारमित्यर्थः† । एवंविधं "मर्त्तं" मनुष्यम् "इन्द्रः" "पदा" पादेन "क्षुम्पमिव" अहिच्छत्रमिव‡ "कदा" वा "स्फुरत्" स्फुरिष्यति बधिष्यति ? यथा अहिच्छत्रं मण्डलाकारेण शयानं कश्चिदनायासेन हन्ति एवमिन्द्रोऽपि कदास्मच्छत्रून् हनिष्यतीत्यर्थः [ स्फुरति-स्फुलतीति बध-कर्म्मसु ( निघ० २,१९,१५-१६ पठितत्वात् ) ]। "नः" अस्माकं यष्टॄणां "गिरः" स्तुति-लक्षणा वाचः "इन्द्रः" "कदा" कस्मिन् काले "अङ्ग" क्षिप्रं "शुश्रावत्" श्रोष्यतीति वितर्क्यते [ अत्र निरुक्तम्—"क्षुम्पमहिच्छत्रकम्भवति यत् क्षुभ्यते * * * कदा मर्त्तमनाराधयन्तं पादेन क्षुम्पमिवावस्फुरिष्यति कदा नः श्रोष्यति गिर इन्द्रो अङ्ग ( निरु० नै० ५, १७ )" -इति क्षिप्र-नामैतत् ॥ ३ ॥ २२

२ ३ २ ३ ३
॥ त्रैककुभम् ॥ यएकइद्दिवायाऽऽनायि । वास्तुमर्त्ता
१ २ १ २ ५ १ २ ३ २ १ २
याऽऽदा । ऊम् । प्र२ ३ ४षाम् । आयिशानोअप्रति

* ऋ० वे० १, ६, ६, ३ ।

† 'यस्य यज्ञार्थं राधसम्भव न भवति, सोऽराधः'—इति वि० ।

‡ 'क्षुम्पम् प्रसिद्धमौषधं दुर्बलं दृढं, यथा मर्दन्ति बलिनः'—इति वि० ।

ष्कुतः। आयिशा। वोअप्रतायि। ष्कू२३४ताः ॥(१)
यश्चिद्धित्वा। बहुभ्याइआ। सुतावाᳫँआवोइवा। ऊम्।
सा२३४तायि। उग्रन्तत्यत्यतेशवः। ऊग्रम्। तत्यत्यता
यि। शा२३४वाः ॥(२) कदामर्त्तमराधाइसाम्। पदा
क्षुम्पामोइवा। ऊम्। स्फू२३४रात्। कदानःशुश्रव
द्गिरः। कादा। नःशुश्रवात्। गा२३४यिराः। आ
यिन्द्रोअ। गा२। या२३४औहोवा। ई२३४
ङ्गाः(३) ॥ ७* ॥ [१] २२

अथ गायन्तीति-तृचात्मकं सूक्तं तृतीयम्†,

तत्र प्रथमा।

गायन्तित्वागायत्रिणोर्चन्त्यर्कमर्किणः।
ब्रह्माणस्त्वाशतक्रतउद्वᳫँशमिवयेमिरे ॥ १‡ ॥

* ऊ० गा० ६प्र० १अ० ७सा०।

† 'तृतीयमुक्थम्'—इति वि०।

‡ छ० आ० ३, १, १, १ (१भा० ६९४ पृ०) = ऋ० सं० १, १, १९, १।

हे "शतक्रतो" बहुकर्मन् बहुयज्ञ वा इन्द्र! "त्वा" त्वाम् "गायत्रिणः" उद्गातारः "गायन्ति" स्तुवन्ति; "अर्किणः" अर्चन-हेतु-मन्त्र-युक्ता होतारः "अर्कम्" अर्चनीयम् इन्द्रम् "अर्चन्ति" स्तोत्र-शस्त्र-गतैर्मन्त्रैः प्रशंसन्ति; "ब्रह्माणः" ब्रह्म-प्रभृतयः इतरे ब्राह्मणाः "त्वाम्" "उद्येमिरे" उन्नतिं प्रापयन्ति। तत्र दृष्टान्तः—"वंशमिव" यथा वंशाग्रे नृत्यन्तः शिल्पिनः प्रौढं वंशमुन्नतिं कुर्वन्ति, यथा वा सन्मार्गवर्त्तिनः स्वकीयं कुल-मुन्नतं कुर्वन्ति, तद्वत्। एतामृचं यास्क एवं व्याचष्टे—"गायन्ति त्वा गायत्रिणः प्रार्चन्ति तेऽर्कमर्किणो ब्रह्माणस्त्वा शतक्रत उद्ये-मिरे वंशमिव। वंशो वनशयो भवति वनच्छ्रूयत इति वेति" (निरु० नै० ५,५)। अर्क-शब्दञ्च बहुधा व्याचष्टे—"अर्को देवो भवति यदेनमर्चन्त्यर्को मन्त्रो भवति यदनेनार्चन्त्यर्कमन्नं भवत्य-र्चति भूतान्यर्को वृक्षो भवति संवृतः कटुकिम्ना (निरु० नै० ५,४"—इति ॥ १ ॥

अथ द्वितीया।

२उ ३ १२ २र३ १र २र ३ १ २
यत्सानोःसान्वारुहोभूर्य्यस्पष्टकर्त्वम्।
२उ ३ १ २ ३ १ २ ३ १ २
तदिन्द्रोअर्थञ्चेततियूथेनवृष्णिरेजति ॥ २* ॥

"यद्" यदा "सानोः सानु" यजमानः सानोः सानु, सोम-वल्ली-समिदाद्याहरणाय पर्वतप्रदेशम् "आरुहः" आरूढवान्।

* ऋ० वे० १, १, १८, २।

तथा "भूरि" बहुकर्म यागरूपम् "असृष्ट" सृष्टवान् उपक्रान्तवानित्यर्थः। "तत्" तदानीम् "इन्द्रः" "अर्थं" यजमानस्य प्रयोजनं "चेतति" जानाति। ज्ञात्वा च "वृष्णिः" कामानां वर्षिता सन् "यूथेन" मरुद्गणेन सह* "एजति" कम्पते,† अस्य स्थानाद् यज्ञभूमिमागन्तुमित्यर्थः॥

"सानोःसान्वारुहः"-"सानोः सानुमारुहत्"—इति पाठौ॥२॥

अथ तृतीया।

२ ३उ   ३ १ २ ३ १ २ ३ १ २   ३ २
युङ्क्ष्वाहिकेशिनाहरीवृषणाकक्ष्यप्रा।
१ २   ३ १र २र
अथानइन्द्रसोमपागिरामुपश्रुतिंचर॥३‡॥२९

हे "सोमपाः" सोम-पान-युक्तेन्द्र! "हरी" त्वदीयावश्वौ "युङ्क्ष्व¶ हि"§ सर्वथा संयोजय। "अथ" अनन्तरं "नः" अस्मदीयानां "गिरां" स्तुतीनाम् "उपश्रुतिं" समीपे श्रवणमुद्दिश्य "चर" तत्प्रदेशे गच्छ। कीदृशौ हरी? "केशिना" स्कन्ध-प्रदेशे लम्बमान-केश-युक्तौ, "वृषणा" सेचन-समर्थौ युवानौ,

---

* 'यूथेन—देवसङ्घातेन'—इति वि०।

† 'एजति—आगच्छति'—इति वि०।

‡ ऋ० वे० १, १, १९, ३=य० वे० ८, ३४।

¶ संहितायां "युङ्क्ष्वा"—इति दीर्घान्तः तत्र "द्व्यचः (६,३,१३५)"—इति दीर्घः।

§ 'हीति पदपूरणः'—इति वि०।

"कच्यप्राः" अश्वस्योदर-बन्धन-रज्जुः कच्यः,तस्य पूरकौ पुष्टाङ्गा-वित्यर्थः॥

"युङ्क्षा"-"युक्ष्वा"—इति पाठौ॥

युङ्क्ष्वा—सति शिष्टत्वेन प्रत्यय-स्वरः (३, १, ३) श्रियते, "द्व्यचोऽतस्तिङः (६, ३, १३५)"—इति संहितायां दीर्घत्वम्। केशिना—प्रशस्ताः केशाः अनयोः सन्तीति मत्वर्थीय इनि-प्रत्ययः, "सुपांसुलुगित्यादिना (७, १, ३९) द्विवचनस्या-कारादेशः। वृषणा—वृषु मृषु सेचने (भ्वा० प०) "कनि-न्यु-वृषि-तक्षि-राजि-धन्वि-द्यु-प्रति-दिवः"—इति कनिन्,"ञ्नि-त्यादिर्नित्यम् (६, १, १९७)"—इत्याद्युदात्तः, "वा षपूर्वस्य निगमे (६, ४, ९)"—इति उपधायाः पक्षे दीर्घाभावः, पूर्व-वदाकारः (७, १, ३९)। कच्यप्राः—कच्ययोर्भवं कच्यं सूत्रं तत् प्रातः पूरयतः पुष्टत्वादिति कच्यप्रौ, प्रा पूरणे (अदा० प०), "आतोऽनुपसर्गे (३, २, ३)"—क-प्रत्ययः, कृदुत्तरपद-प्रकृति स्वरेणान्तोदात्तत्वम् (६,२,१३९)"—आकारः पूर्ववत् (७, १, ३९)। अथा—"निपातस्य च (६, ३, १३६)"—इति संहि-तायां दीर्घः। नः—"अनुदात्तं सर्वमपादादौ (८, १, १८)" —इत्यनुवृत्तौ "बहुवचनस्य वस्नसौ (८, १, २१)"—इति नसादेशोऽनुदात्तः। इन्द्र!—सोमपा!—इत्युभौ "आमन्त्रि-तस्य च (८, १, १९)"—इति सर्वानुदात्तौ। गिरां—"सा-

वैकाचस्तृतीयादिर्विभक्तिः (६, १, १६८)"—इति विभक्तिरु-दात्ता। उप—शब्दो निपातत्वादाद्युदात्तः (फि० ४, १२), स्तुति-शब्देन प्रादिसमासे कृदुत्तरपदप्रकृतिस्वरत्वे प्राप्ते तादौ-चनितिकृत्यचौ इति तु वर्जिततादि-परत्वात् गतेः प्रकृतिस्वरः पर-निपातः॥ ३॥ २३

१२ १ २ २ १ १ १

॥ उद्वंशीयम्॥ गायन्तित्वागायत्रिणा३। अर्च्च

१ १२

न्त्यर्क्कमर्का२३यिणाः। ब्रह्माणस्त्वा२हो१यि। शतक्रा२

२ १ १ १ २ २ ४

३ताउ। उद्वंशमिवया३यिमो३रे। उद्वंशा२३४मो।

१ ३ २ १ १ १ १ २

वाया३उवा३। उप्। मा३यिरो३५हायि॥(१) यत्सा

१२ २ २ २ १ २ १ १

नोस्नान्वारुह्‌आ। भूर्य्यस्पष्टकर्त्तू२३वाम्। तदिन्द्रा

२ १ २१२ २ २

२हो३यि। अर्थंचेता२३तायि। यथेनवृष्णिस१यिजा३

१ १२ ३ ५ १ ३ १ २ १

तायि। यूथेना२३४वृ। ष्णायिरा३उवा३। उप्। जा

१ ३१२ १२ १ २२ १ २२१ १२

३रनो३५हायिः॥(२) युञ्जाहिकेशिनाहरी३आ। वृषणा

२ १ २ २ १

कक्षिया२३प्रा। अथानो२हो३यि। इन्द्रोसोमा२३पाः।

१र २ २ १ २ २ ५ १ ऽ
गिरामुपश्रुताऽयिन्वाइरा। गिरामू२३४पा। सूताइउ
२ २ १ २
वा३। उप्। चाऽ२रो३५हायि(३)॥ ८* ॥ [१]

५र २ १ २
॥ हिरण्यस्तस्त्वाष्ट्रीसाम ॥ गाय। तित्वा२। हा३
२ ३र ११ ५ २ १ १ २
हा। गायत्रायिणा२३४ः। अर्च। तिया३। हा३हा।
३ २ १ ५र २ १ १ २
कमर्कायिणा२ ३ ४ः। ब्रह्मा। णस्त्वा२। हा३हायि।
३ १ १ ५ २ १ २ १ २
शतक्राता२३४उ। उद्व। शमा३यि। हा३हायि। व
२ १ ५ ४ ५ ५ र ३र
या३हो२३४। वा। मायुयिरो६हायि ॥(१) यत्सा। नो
२ २ २ ३ २र १ ५ र २ १
सा३। हा३हा। नुवारुहा२३४ः। भूरि। अस्पा३।
२ २ ३ २ १ ५ ३र २ २
हा३हा। ष्टकर्त्त्वा२३४म्। तदि। न्द्रोअ२। हा
२ ३ २र १ ५र ३ २ १ २
३हा। थश्चेताना२३४यि। यूथे। नवा३। हा३हा।
३ २ १ ५ ४ ५ ५ र
ष्णिरा३हो२३४। वा। जायुतो६हायि ॥(२) युञ्जा।

---

* ऊ० गा० ६प्र० १अ० ८सा० ।

३ २ २ २ ३ २र १ ५ २र
हिंका३। हा३हायि। श्रिनाहारा२३४यि। वृष। णा

२ २ २ १ ५र ३ २
का३। हा३हा। त्नियाप्रा२ ३ ४। अथा। नस्रा३।

२ २ ३ २र १ ५र ३ २ २
हा३हायि। द्रसोमापा२३४ः। गिराम्। उपा३। हा

२ ३ २ १ ५ ४ ५
३हायि। श्रुता३यिꣳहो२ ३ ४। वा। चा५रो६हा

यि(३) ॥ १* ॥ [२]

५र ३ २ ४र ५ १
॥ गौरीवितम् ॥ गाय। तित्वा३। गायत्रिणाः। अ

१ र २ ४
र्चन्त्यर्कमर्किणा२३ः। ब्रह्माणस्त्वा३१२३। शतापूक्रता

१ २ ४ ५ ४ ५
उ। ऊद्वꣳशमा३१२३यि। वयोवा। मा५यिरो६हा

४ ५ २र २ ४ र ५ १र
यि ॥(१) यत्सा। नोः सा३। नुवारुहाः। भूर्य्यस्पष्ट

१ र २ ४
कर्त्तुवा२३म्। तादिन्द्रोअा३१२३। थचे५तताथि।

१र र २ ४ ५ ४ ५ ५ र
यूथेनवा३१२३। ष्णिरोवा। जा५तो६हायि ॥(२) युङ्क्षा।

३ २ ४ र ५ १ र १
हिंका३यि। श्निनाहरायि। वृषणाकक्षियप्रा२३। आ

* ऊ० गा० ९३प्र० १अ० १मा०।

२ २ ४ १ २ २
थानश्रा३१२३यि । द्रसो५मपाः । गायिरामुपा३१२३ ।
३ ५ ४ १
श्रुतोवा । चा५रोईहायि(३) ॥ ५* ॥ [३) २३

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य दशमस्याध्यायस्य
द्वादशः खण्डः† ॥ १२ ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः ॥ ५ ॥

॥ इति पञ्चमः प्रपाठकः ॥ ५ ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-
श्रीवीर-बुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणा-
चार्य्येण विरचिते माधवीये सामवेदार्थ-प्रकाशे
उत्तराग्रन्थे दशमोऽध्यायः‡ ॥ १० ॥

—ooo—

---

* ऋ० गा० १३प्र० १अ० ५सा० ।

† 'द्वादशाहस्य नवममह्न षट्चत्वारिंशत् सौमिकम्—इति वि० ।

‡ 'पञ्चमः प्रपाठकः समाप्तः' इति वि०, मूल-पदपञ्चादिसम्मतञ्चैतत् ।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्म्ममे तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ ११ ॥

## ॥ अथैकादशोऽध्याय आरभ्यते* ॥

तत्र

प्रथम-खण्डे—

सुषमिद्ध इति चतुर्ऋचं प्रथमं सूक्तम्,†

तत्र प्रथमा ।

१ २     २ १   २   ३ १   २   ३   १ २
**सुषमिद्धो‡न आवह देवां अग्ने हविष्मते ।**
१ २     ३ १   २
**होतः पावक यक्षि च ॥ १¶ ॥**

हे "अग्ने !" "सुसमिद्धः"§ एतन्नामकस्त्वं "नः" अस्म-

---

* इदानीं दशममहरर्त्याग्निष्टोमः । * * * । तस्य बहिष्पवमानं द्वितीय-प्रभृतीनां पञ्चानामह्नामनुरूपं * * * तदर्चं सर्वं प्रथमादधीतत्वात्,—इति वि० ।

† इदानीं सुषमिद्धो न आवह इति हयमत्र्याख्यानि भवन्ति—इति वि० ।

‡ "सुसमिद्धो"—इति ऋ०-पाठः ।

¶ ऋ० वे० १, १, २४, १ ।

§ 'सुष्ठु, समिद्धः सुसमिद्धः'—इति वि० । ऋग्वेदीय-पाठ तद्वत्स्यैवाय प्रतीक-ग्रहणं कृतं सायणेन सुषमिद्ध इति, मूलपाठस्तु मूर्द्धण्य-मध्यः सुषमिद्ध इति "पूर्वपदात् (८, ३, १०६)"—इति च तत्र सत्वम् ।

दीयाय"* "हविष्मते" यजमानाय तदनुग्रहार्थं "देवान्" "आवह"। हे "पावक" शोधक! "होतः" होमनिष्पादकाग्ने! "यक्षि च" यज च†॥ [सुसमिद्धः—समः क्रियाविशेषणत्वेन गतिसञ्ज्ञकत्वात् प्रादिसमासः, शोभन-वाचिनः सु-शब्दस्य तु "विशेषणं विशेष्येण बहुलम् (२, १, ५७)"—इति समिद्ध-पदेन कर्मधारयः समासः, सु-शब्दः प्रातिपदिक-स्वरेणान्तोदात्तः, "कर्मधारयेऽनिष्ठा (६,२,४६)"—इति पूर्वपदप्रकृतिस्वरत्वं, क्रिया-विशेषणत्वे हि सु-शब्दस्य गतित्वात् प्रादिसमासे "गतिरनन्तरः (६, २, ४९)" इति "समो यदुत्तर इति समो यदुत्तरत्वं तदेव क्तदुत्तर-प्रकृति-स्वरत्वेन (६, २, १३९) स्यास्यतीति सु-शब्दोऽनुदात्तः स्यात्। देवाँ अग्ने—"दीर्घादटि समानपादे (८, ३, ९)"—इति नकारस्य रुत्वम्, "अत्रानुनासिकः पूर्वस्य तु वा (८, ३, २)"—"आतोऽटि नित्यम् (८, ३, ३)"—इत्यनुनासिकः। हविष्मते—हविरस्यास्तीति मतुप्, "तसौ मत्वर्थे (१,४,१९)"—इति भत्वेन पदत्व-बाधितत्वात् रुत्वम्। होतः—पावक—एतच्छब्दयोरामन्त्रितयोः पृथक् पृथगेव क्रियान्वये परस्पर-सामर्थ्यात् पराङ्गवद्भावाभावान्न तन्निबन्धनमैकस्वर्यम् नच द्वितीयस्यामन्त्रितस्याष्टमिक-(८, १, १९)—निघातेनैकस्वर्यम् "आमन्त्रितं पूर्वमविद्यमानवद् (८, १, ७२)"—इति पूर्वस्याविद्यमानत्वेन पदादपरत्वात् पादादित्वाच्च परस्य सामानाधिकरण्येऽपि होतरित्यस्य विशेषत्वे समानमेवाविद्यमानवत्वम्,

---

* 'नः—अस्मभ्यम्'—इति वि०।

† 'यक्षि च—यज भक्षणे, देवानावह भक्षय च'—इति वि०।

अतएवाविद्यमानवत्त्वात् सामर्थ्येऽपि न पराङ्गवद्भाव,—इति नैक-स्वर्य-सिद्धिः, अतो होतरिति विशेष्यम्; अतः पुनातीति पावकः —इत्यवयव-प्रसिद्ध-स्वीकारेण विशेषणत्वाद्धोतरिति विशेष्यम्, तच्च सामान्यवचनम् इति "नामन्त्रिते समानाधिकरणे (८, १, ७३)"—इत्यविद्यमानवत्त्व-प्रतिषेधात् पदात्परत्वादपादादित्वाच्च द्वितीयामन्त्रितस्याष्टमिक-निघातेन वा पराङ्गवद्भावे सति शेष-निघातेन वा सर्वानुदात्तत्व-सिद्धिः। यक्षि—"यजेर्लोपः सिपि बहुलञ्छन्दसि (२, ४, ७३)"—इति शपो लुक्, व्रश्चादिना (८, २, ३६) षत्वम्, "षढोः कः सि (८, २, ४१)"—इति कत्वम्, सेर्हिरादेशश्छान्दसत्वान्न भवति, सिपः पित्त्वेनानुदात्तत्वाद्धातुस्वरएव (६, १, १६२) शिष्यते, न च "तिङ्ङतिङः (८, १, २८)"—इति निघातः पूर्वस्य पावकेत्यामन्त्रितस्य विद्यमानवत्त्वेन पदादपरत्वात्, अतएव तस्याव्यवधायकत्वे होतरित्यतः निघातः स्यादितिचेत् न, यक्षि पदापेक्षया होतरित्यस्यापि पूर्वत्वेनाविद्यमानत्वात्; ननु "नामन्त्रिते समानाधिकरणे (८, १, ७३)"—इति तस्य नित्यमविद्यमानत्वम्, न च पावक-पदस्याविद्यमानवत्त्वेन समानाधिकरण-परत्वाभावः; यक्षि-पदस्यैव हि कार्यं प्रति पावक-पदं पूर्वत्वादविद्यमानवत् स्यात्, होतः-पदमविद्यमानवत्त्व-प्रतिषेधं प्रति तु परत्वाद्विद्यमानवदेवेति भवत्येव होतरित्यस्याविद्यमान वत्त्व-प्रतिषेधः, अतस्तस्याविद्यमानवत्त्वात्तदपेक्षया यक्षीति निघातः प्राप्नोत्येव? सत्यम्;—अत्र यक्षीत्यस्य च-शब्द-परत्वात् "चादिषु च (८, १, ५८)"—इति निघात-प्रतिषेधो भविष्यतीत्यदोषः ] ॥ १ ॥

अथ द्वितीया।

१ २ ३ १ ३ २ १ २

मधुमन्तन्तनूनपाद्यज्ञन्देवेषुनःकवे।

२ १ २ ३ १२

अद्याकृणुह्यूतये ॥ २* ॥

हे "कवे" मेधाविन्नग्ने! "तनूनपात्"†—एतन्नामकस्त्वम् "अद्य" अस्मिन् "नः" अस्मदीयं "मधुमन्तं" रसवन्तं "यज्ञ" यजनीयं हविः "देवेषु" "कृणुहि" कुरु प्रापयेत्यर्थः। किमर्थम्? "ऊतये" अस्मद्रक्षणाय॥

"ऊतये"-"वीतये"—इति पाठौ॥२॥

अथ तृतीया।

२ ३ १ २ ३ २ ३ २ ३ २ ३ १२ ३२

नराशꣳसमिहप्रियमस्मिन्यज्ञउपह्वये।

१ २ ३ १ २

मधुजिह्वꣳहविष्कृतम्॥ ३‡ ॥

"इह" देवयजन-देशे "अस्मिन्" वर्त्तमाने यज्ञे "नराशं-

---

* ऋ०वे० १, १, २४, १।

† "तनूनपादाज्यं भवति नपादित्यनन्तरायाः प्रजाया नामधेयं निर्णततमा भवति गौरत्र तनूरुच्यते तनो अस्यां भोगास्तस्याः पयो जायते पयस आज्यं जायते। अग्निरिति शाकपणिरापोऽत्र तन्व उच्यन्ते तत अन्तरिक्षे ताभ्य ओषधिवनस्पतयो जायन्त ओषधिवनस्पतिभ्य एष जायते। * * *।"—इति निरु० दै० २, ५-६।

‡ ऋ० वे० १, १, २४, ३।

सम्"*—एतन्नामकमग्निम् "उपह्वये" आह्वयामि। कीदृशम्? "प्रियं" देवानां प्रीति-हेतुं, "मधुजिह्वं" मधुर-भाषि-जिह्वोपेतं माधुर्य्य-रसास्वादक-जिह्वोपेतं वा, "हविष्कृतं" हविषो निष्पादकम् ॥ ३ ॥

अथ चतुर्थी।

अग्ने सुखतमे रथे देवाꣳ ईडित आवह।
अग्निर्होतामनुर्हितः ॥ ४† ॥ १

इष्ट-शब्दाभिधेय हे "अग्ने!" "ईडितः" अस्माभिः स्तुतः सन्‡ "सुखतमे" अतिशयेन सुख-हेतौ कस्मिंश्चित् "रथे" "देवान्" स्थापयित्वा कर्म-भूमौ "आ वह" [ इष्ट-शब्दाभिधेयत्वमत्र सूचयितुमीडित इति विशेषणम् ]। "मनुर्हितः" 'मनुना' मन्त्रेन मनुष्येण वा यजमानादि-रूपेण 'हितः' अत्र स्थापितः त्वं "होता" देवानामाह्वातासि ॥ ४ ॥ १

* "नराशंसो यज्ञ इति कात्थक्यो नरा अस्मिन्नासीनाः शंसन्ति। अग्निरिति शाकपूणिर्नरैः प्रशस्यो भवति"—इत्यादि निरु० दै० २, ६-७।

† ऋ० वे० १, १, २४, ४।

‡ 'ईडितः—प्रीणितः'—इति वि०।

अथ यदद्येति तृचात्मकं द्वितीयं सूक्तम्,*

तत्र प्रथमा।

२ ३ १ २ उ ३ २ ३ १ २ ३ १ २ ३ २
यदद्यसूरउदितेनागामित्रोअर्यमा।
३ १ २ ३ १ र २ र
सुवातिसविताभगः॥ १† ॥

"यत्" धनं "नः" अस्माकम् अपेक्षितं "तत्" "अद्य" अस्मिन् काले "सूरे" "उदिते" सति प्रातःसमये "अनागाः" पाप-हन्ता, "मित्रः", "अर्यमा", "सविता", "भगः" च—एतत् प्रत्येकं "सुवाति" प्रेरयत् [ अथवा अनागा मित्रो अर्यमा भवतु, तदीप्सितं भगो भजनीयः सविता सुवाति प्रेरयतु ] ॥ १ ॥

अथ द्वितीया।

३ १ २ ३ २ उ ३ १ र २ र
सुप्रावीरस्तुसक्षयःप्रनुयामन्त्सुदानवः।
२ ३ १ २ ३ १ २
येनोअꣳहोतिपिप्रति ॥ २‡ ॥

"सक्षयः" स-निवासः "सुप्रावीरस्तु" सुष्ठु प्रकर्षेण रक्षितास्तु [ प्र-शब्द आदरार्थः ]। "प्र" प्रकर्षेण "नु" क्षिप्रं भवत्विति शेषः। कदा? इत्युच्यते— हे "सुदानवः" सुदानाः! युष्माकं

* 'मैत्रावरुणमाज्यम्'—इति वि०।

† ऋ० वे० ५, ५, ८, ४।

‡ ऋ० वे० ५, ५, ८, ५।

"यामन्" यामनि गमने सति, कीदृशानां गमने ? ये यूयमागत्य "नः" अस्माकम् "अंहः" पापम् "अति पिप्रति" अतिपारयथ, तेषां गमनमिति ॥ २ ॥

अथ तृतीया ।

३ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ २
उत स्वराजो अदितिरदब्धस्य व्रतस्य ये ।

३ १र २र
महो राजान ईशते ॥ ३ * ॥ ७

"उत" अपि च "ये" मित्रादयस्त्रयः "स्वराजः" सर्वस्य स्वामिनः "अदितिः"† येषाञ्च माता, सन्ति ; ते "अदब्धस्य" अहिंसितस्य रक्षकस्य "महः" महतः‡ "व्रतस्य" अस्य कर्मणः¶ "राजानः" स्वामिनः, ते "ईशते" समर्था भवन्ति अभिमतं दातुमिति शेषः । [ अथवैवं योज्यम्—'ये' मित्रादयोऽदितिश्च 'अदब्धस्य' व्रतस्य 'स्वराजः' ईश्वरास्ते "महः" महतः अस्मदभिमतधनस्य "राजानः" स्वामिनः सन्तः "ईशते" अस्मभ्यं दातुम् ॥ ३ ॥ ७

---

* ऋ० वे० ५, ५, ९, २ ।

† 'अदितिः—अदीनत्व-सम्पन्नाः'—इति वि० ।

‡ 'महः—अभिमान-सम्पन्नाः'—इति वि० ।

¶ 'व्रतस्य—कर्मणः यज्ञस्य वा'—इति वि० ।

उत्त्वेति दृचात्मकं प्रथमं सूक्तम्,*

तत्र प्रथमा ।

१ २ ३ १ २ ३ १र २र
उत्त्वामन्दन्तु सोमाः कृणुष्वराधो अद्रिवः ।
१ २ ३ १ २
अवब्रह्मद्विषोजहि ॥ १ † ॥

हे इन्द्र ! "त्वा" त्वां "सोमाः" "उत्" उत्कृष्टं "मन्दन्तु" मादयन्तु । हे "अद्रिवः !" वज्रवन्निन्द्र ! त्वं "राधः" अन्नं "कृणुष्व" अस्मभ्यं कुरु । किञ्च "ब्रह्मद्विषः" ब्राह्मण-द्वेष्टॄन् "अव जहि" ॥

"सोमाः"—"सोम"—इति पाठौ ॥ १ ॥

अथ द्वितीया ।

३ २ ३ २ ३ २ ३ २ ३ १ २ २ १ २
पदापणीनराधसोनिबाधस्वमहाँ असि ।
२उ ३ २ ३ १ २
नहित्वाकश्चनप्रति ॥ २ ‡ ॥

"पणीन्" लुब्धान्¶ "अराधसः" यष्टव्य-धन-रहितान् केवल-धनान् "पदा" पादेनातिक्रम्य "निबाधस्व" नितरां

* 'ऐन्द्रमाज्यम्'—इति वि० ।

† छ० आ० ३, १, १, १ ( १ भा० ४२२५० ) = ऋ० वे० ६, ४, ४३, १ ।

‡ ऋ० वे० ६, ४, ४३, २ ।

¶ 'पणीन्—पणस्वभावान्'—इति वि० ।

वाधस्व। हे इन्द्र! त्वं "महान् असि" "त्वा" त्वया "प्रति" प्रतिनिधि-सदृशः "कश्चन" कश्चिदपि देवोऽसुरो मनुष्यो वा "न हि" नास्ति खलु॥

"पणीनराधसः"-"पणीरराधसः"—इति पाठौ॥ २॥

अथ तृतीया।

१ २ ३ १ २ ३ १ ३ १र २र
त्वमीशिषे सुतानामिन्द्र त्वमसुतानाम्।

२उ ३ १ २
त्वꣳराजा जनानाम्॥ ३ *॥ ३

हे "इन्द्र!" "त्वं" "सुतानाम्" अभिषुतानां सोमानाम् "ईशिषे" ईश्वरो भवसि, तथा "त्वम्" "असुतानाम्" वर्त्तमानानाञ्च ईशिषे, किञ्च "त्वं" सर्वेषां "जनानां" "राजा" भवसि॥ ३॥ ३

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य एकादशस्याध्यायस्य प्रथमः खण्डः†॥ १॥

---

* ऋ० सं० ६, ४, ४३, ३।

† 'इन्द्राग्नी आगतमित्यस्याशाकलाम'—इति वि० अतः परं अवच्छार्थमिति शेषः। 'एतत् प्रातःसवनम्'—इति च वि०।

अथ द्वितीय-खण्डे*—

आजागृविरिति तृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा।

१९ २र७ १ २ ३ १ २ ३ १र
आजागृविर्विप्रऋतम्मतीना५ं

२र ३ १ २ ३ १ २
सोमःपुनानोअसदच्चमूषु।

१ २ ३ १ २ ३ २ ३ १ २
सपन्तियम्मिथुनासोनिकामा

३ १ २ ३ १ २ ३ १ २
अध्वर्यवोरथिरासःसुहस्ताः॥ १ †॥

"जागृविः" जागरणशीलः "ऋतम्" ऋतानां सत्य-भूतानां "मतीनां" स्तुतीनां "विप्रः" ज्ञाता स "सोमः" "पुनानः" पूयमानः सन् "चमूषु" चमसेषु "आ सदत्" आसीदति, "मिथु-नासः" परस्परं सङ्गताः, "निकामाः" नितरां कामयमानाः "रथिरासः" यज्ञ-नेतारः "सुहस्ताः" कल्याण-पाणयः "अध्व-र्यवः" पवित्रेण "यं" सोमं "सपन्ति" स्पृशन्ति [सप समवाये (भ्वा० प०)। 'सपतिः स्पृशति-कर्म्मा'—इति नैरुक्ताः‡]॥

"ऋतम्"-"ऋता"—इति पाठौ॥ १॥

---

* 'इदानीं माध्यन्दिनं सवनमभिधीयते'—इति वि०।

† ऋ० वे० ७, ५, १८, २।

‡ 'सपति'—रिति परिचरण-कर्मसु (३, ५) स्पृशति-कर्मसु च (३, १४) इत्युभयत्र निघण्टौ।

अथ द्वितीया।

१ १ २ २उ २ २३ १ २ २
सपुनानउपसूरेदधान

१र २र३ १ २ ३ १र २र
ओभेअप्रारोदसीवीषआवः।

३ २ ३ १ २ ३ १ २ ३ १
प्रियाचिद्यस्यप्रियसासऊती

३ २र २र३ २ ३१र २र
सतोधनङ्कारिणेनप्रयꣳसत्॥ २ *॥

"पुनानः" पूयमानः "दधानः" यज्ञादि-कर्म-धारकः "सः" सोमः "सूरे" प्रेरके इन्द्रे "उप" गच्छति। किञ्च "उभे रोदसी" द्यावा-पृथिव्यौ "आ अप्राः" स्व-महिम्ना आ पूरयति। तथा "सोमः" "आवः" स्व तेजसा मां विवृणोति [वृणोतेः "मन्त्रे घसेति (२, ४, ८१) च्लेर्लुक्, "छन्दस्यपि दृश्यते (६, ४, ७३)"—इत्यडागमः। "पूर्वपदात् (८, ३, १०६)"—इति स-इत्यस्य सांहितिकं षत्वम्] "प्रिया" [षष्ठ्या आकारः (७, १, ३९)] प्रियस्य "यस्य" "सतः" विद्यमानस्य सोमस्य [यद्वा, 'प्रिया' प्रियाणि प्रयच्छतः सोमस्य] "प्रियसासः" अत्यन्तं प्रियतमा धाराः "ऊती" ऊत्यै रक्षणाय भवन्ति "सः" सोमः "नः" अस्मभ्यम् "धनं" "प्रयंसत्" प्रयच्छतु [यच्छतेर्लेटि सिब्यडागमः]। तत्र दृष्टान्तः—"कारिणे न" यथा कारिणे भृतकाय भृतिं प्रयच्छति तद्वत्।

* ऋ० वे० ७, ४ १८, ३।

"दधानओभे"-"दधानोभे"—इति पाठौ, "सतोधनं"-"सतूधनम्"—इति च ॥ २ ॥

अथ तृतीया।

१ २ ३ १२ २१ ३ १ २ ३
सवर्ड्डितावर्ड्डनःपूयमानः

१ २ ३ २ ३ १ ३ १ २
सोमोमीढ्वाँअभिनोज्योतिषावीत्।

१ २ ३ १ २ ३ १ २ १ २
यत्रनःपूर्वपितरःपदज्ञाः

३ १ २ ३ १२ २१ ३ १
स्वर्विदोअभिगाअद्रिमिष्णन् ॥ ३ * ॥ ४

"वर्द्धिता" देवानां स्व-कला-प्रदानेन वर्द्धयिता "वर्द्धनः" स्वयं वर्द्धमानः "पूयमानः" पवित्रेण पूयमानः "मीढ्वान्" कामानां सेक्ता "सः" सोमः "नः" अस्मान् "ज्योतिषा" स्व-तेजसा "अभ्यावीत्" अभिरक्षतु "यत्र" यस्मिन् सोमे प्रसन्ने सति "पदज्ञाः" पणिभिरपहृतानां गवां पदानि जानन्तः "स्वर्विदः" सर्वज्ञाः स्वयं जानन्तो वा "नः" अस्माकं "पूर्वे" चिरन्तनाः "पितरः" अङ्गिरसः "गाः" पशून्† लब्धुम् "अद्रिम्" शिलोच्चयम् "अभि" लक्ष्य गन्तुम् "इष्णन्" ऐच्छन् ॥

"यत्रनः"-"येनानः"—इति पाठौ, "इष्णन्"-"षाणन्"—इति च ॥ ३ ॥ ४

---

* ऋ० वे० ७, ४, १८, ४।

† 'गाः-उदकानि रश्मयो वा'—इति वि०।

५र र ३ २ ४ ५
॥ गौरीवितम् ॥ आजा । गृवा३यिः । विप्रज्ञनाम् ।
१ र र र र र र १ २
मतीनाꣳसोमःपुनानोअसदच्चमूषू२३ । सापन्तिया ३ १
४ र र २ १ २
२३म् । मिथुनासोनिकामापुध्वर्य्या । वोरयिरा३१२३ ।
४ ५ ४ ५ ३र २ ४
सःसोवा । हाउ५स्तोई२हायि ॥(१) सप्रु । नाना३ः । उ
र५ १ र र र र र र र १
पसूरायि । दधानःओभेअप्रारोदसीवीषआवार२३ः । प्रा
र र ४ र र र र १ र
याचिद्या३१२३ । स्यप्रियसासजतीसाउ५तोधा । नाक्का
२ ४ ५ ४ ५ ५
रिणा३१२३यि । नप्रोवा । याउ५ꣳसोई२हायि ॥(२) सव
३ २ ४ ५ १ र र र र र र र
ह्विता३ । वर्द्धनःपू । यमानःसोमोमीढाꣳअभिनोज्यो
र १ २ ४र र
तिषावा२३यित् । याचनःपू३१२३ । वंपितरःपदत्वाःहु५
१ २ ४ ५ ४
वर्वायि । दोअभिगा३१२३ः । अद्रोवा । आउ५यिष्मो
५
ई२हायि(३) ॥ १४ * ॥ [१]

१ २ १ २
॥ अग्नम् ॥ आजा । गृविर्विप्रश्च्तताम् । मती३

---

* ऊ० गा० ६प्र० १ख० १४सा० ।

२   २ १ २ १   २ १   २ ३ ४ ५   १
नाम् । सोमःपुना । नो३ग्रस । दक्षमूषू । स्वपन्ति

२   ०   २   १ २ १   १ १ २
यम्मिथुनासो । निकाऽ२३माः । अध्वर्य्यवो । रथिरा ।

२   २ ४   १ १   १२   २
सा२४३: । सूऽ२क्वाप्रक्ता६५६: ॥(१) सापू । नानभ्रपसू

२   २   २ १२ २ १   २ १ २   २ ३ ४
रे । ढधाइनाः । ओभिअप्राः । रोऽ२हसी । वीवश्चा

५   १ २   ०   २   १२ २ १
वाः । प्रियाचिद्यस्यप्रियसा । सऊ२३वो । सतोधनाम् ।

२२ १ २   २   २ ४   १ २
कारिणे । ना२४३ । प्राऽ२सा५ॱसा६५६न् ॥(२) सावा ।

१ २   २ २   २ १२ २२ १   १ १
धितावर्द्धनःपू । यमाइना: । सोमोमोक्षाॱ । अभि

२ ३ ४ ५   १   २ २ १   ०   २
नः । ज्योतिषावीत् । यन्नःपूर्वपितराः । पदाऽ२३ज्ञाः ।

१ २ १   २ १ २   २   २   ४
स्वर्विदो । अभिगाः । आ३४३ । द्राइयिमा५यिष्णा

६५६न्(३) ॥ ५ * ॥ [२]

४२ ३   ४ २   ४
॥ यज्ञायज्ञीयम् ॥ आजाऽ५ग्रु । वा३र्वा३यिप्रज्ञ

५   १ २ २   २   २२   २ १ २ २
नाम् । मातीनाॱसोमःपुनानोग्रसा । दाऽ२क्षामू३षू ।

---

* ऊ० गा० १०प्र० २ख० ६सा० ।

सपार२न्तियम्मिथुनासोनि । कामार२३श्रा । ऊम्मायि ।
घ्वा३य्यौ । वोरयिदासः सूर२हन्ताउ ॥(१) तासाः । पुन ।
नउपद्ध२रे२दधानश्रोभेश्रप्रारोदसी । वो३ षाम्मा ३ वाः ।
प्रिया२श्चिद्वस्यप्रियसासः । ऊती२३सा । ऊम्मायि ।
तो३धा । नाञ्जारिषिम्प्रार२यं३उ ॥(२) साम्राः । वर्द्धिं
तावर्द्धनःपूयमानःसोमोमीढ्वाँ३अभिनो । ज्यो३तीषा३वी
त् । यन्ना२नःपूर्वेपितरःप । दज्ञा२३ःसू । ऊम्मायि ।
वा३वायि । दोश्रभिगाश्राद्रा२यि । मिष्णाउ । वार३
४५(३) ॥ १३* ॥ [३]

॥ गोष्ठङ्गम् ॥ आजाक्षुविर्विप्रः । ऋताइम् । सा
२३४ । तोना३सोमः । पूना । नोश्रसद्ध्नमृषुसपन्ति
यम्मिथुनासोनिकामा२ध्वर्य्यौ२ । हा२ऊऊवायि । वोरा

---

* ऊ० गा० १८प्र० २ख० १३सा० ।

र २ १ ५ ४ ५
थि। रास:सोवा३औ२३४वा। हा५स्तो ६ हायि॥(१)
३ ४ १र ४ ५ ३र २ १ र ५ र र
समुनानउप। ह्वरा३थि। दा२३४। धानओभेक्र।
४ ५ १ र र र र र र र १र
प्रारो। दसीवीषच्चाव:प्रियाचिद्यस्यप्रियसासऊतीसा२तो
१ र २ १ ५
धा२। हा२ऊऊवायि। नक्षारिणेनप्रोवा३औ२३४वा।
४ ५ ३ ४ ३र४ ५ ३ २ १
या५ऽसो६हायि॥(२) सवर्धितावद्व। नःपू३। या२३
र ५ र र र ४ ५ १ र र र र
४। मानःसोमोमी। द्वाऽश्वा। भिनोज्योतिषावीद्य
र र र १ १
चनःपूर्वेपितरःपदज्ञाःस्व२र्वा२थि। हा२ऊऊवायि।
र र २ १ ५ ४ ५
हो३अभिगाअद्रीवा३औ २ ३ ४ वा। आ५ यिवृणो६हा
यि(३)॥ १०*॥ [४] ४

अथ माचिदन्यदिति प्रगाथात्मके द्वितीयसूक्ते—

प्रथमा।

१ २ ३ १ २र ३ १ २ ३ १ २
माचिदन्यद्विशऽसतसखायोमारिषण्यत।
२ ३ १ २ ३ १ २ ३ १ २ ३ १ २र ३ १ २
इन्द्रमित्स्तोतावृषणऽसचासुतेमुहुरुक्थाचशऽसत॥१†॥

---

* ऊ० गा० ११प्र० २ख० १०सा०।

† ऋ० सं० ३, १, ५, १० (१अ०. ५०० ऋ०) = म० ८ सू० ५, ७, १०, १।

हे "सखायः" समान-ख्यानाः स्तोतारः! इन्द्र-स्तोत्रात् "अन्यत्" स्तोत्रं "मा चित् विशंसत" मैवोच्चारयत, "मा रिषण्यत" मा हिंसिता भवत अन्यदीय-स्तोत्रोच्चारणेन वृथोपक्षीणा मा भवत, "सुते" अभिषुते सोमे "वृषणं" कामानां वर्षितारम् "इन्द्रम् इत्" इन्द्रमेव हे प्रस्तोत्रादयः! "सचा" सह "स्तोत" स्तुत। हे प्रशास्त्रादयः! "उक्था च" उक्थानि शस्त्राणि च इन्द्रविषयाणि यूयं "मुहुः" पुनः पुनः "शंसत" ॥१॥

अथ द्वितीया।

२ १ २ ३ १ २ ३ १ ३ १ २र ३ १ १
अवक्रक्षिणं वृषभं यथाजुवं गां न चर्षणीसहम्।
३ १ २ ३ १ २ ३ १ २र ३ १ २
विद्वेषणꣳ संवननमुभयङ्करं मꣳहिष्ठमुभयाविनम् ॥२*॥५

"वृषभं यथा" वृषभमिव "अवक्रक्षिणम्" अवचर्षणशीलं शत्रूणां हिंसितारं "जुवं" शीघ्रकारिणं "गां न" गामिव वृषभमिव† "चर्षणीसहम्" मनुष्याणां शत्रुतानामभिभवितारं, "विद्वेषणं" विद्वेष्टारं शत्रूणां, "संवननं" सम्यक् सम्भजनीयं स्तोतृभिः "उभयङ्करं" निग्रहानुग्रहयोरुभयोः कर्त्तारं "मंहिष्ठं" दातृतमम् "उभयाविनं" दिव्य-पार्थिव-लक्षणेन उभय-विधानेनोपेतम् [ यद्वा, स्थावर-जङ्गम-रूपेण द्विप्रकारेण रक्षितव्येनोपेतम्। अथवा उभयविधैः स्तोतृभिर्होतृभिश्चोपेतम् ]—एवं विधमिन्द्रमभिस्तोतेति पूर्वेणान्वयः ॥

* ऋ० वे० ५, ७, १०, २।

† 'गां न—न-शब्द उपमार्थीयः। गामिव पृथिवीमिव'—इति वि०।

"जुवं"-"जुर"—इति पाठौ, "संवननं"-"संवनना"—इति च॥२॥५

२र १२ २२ ४
॥मैधातिथम्॥ माचिदन्यदोहायि। विशा३सा
५ १र १ २ १ २
ता। सखाया२हो१यि। माऔ३हो। रायिषाउवा।
१ २ १ र र २ २ १ २
ष्याताउवा। इन्द्रमित्स्तोतावृषणाऔ३हो। साचाउ
१ २ १ र २ २ १ २र १
वा। सुताउवा। मुहुरुक्थाऔ३हो। चशा। औहो।
३र १ ५ ४ ५ २ १ २
वाहो२३४वा। सा५तो६हायि॥(१) मुहुरुक्थोहायि।
३ १ ४ ५ १ २ १ २
चशा३साता। मुहुरु३हो१। क्थाऔ३हो। चाशा
१ २ १ २ २ १ २
उवा। साताउवा। अवक्रक्षिणंवृषभाऔ३हो। याथा
१ २ १र २ २ १ ३र १
उवा। जूवाउवा। गान्नचाऔ३हो। षणा। औहो।
३र ५ ४ ५ २र १ २
वाहो२३४वा। सा५हो६हायि॥(२) गान्नचोहायि।
३ २ ४ ५ १र २ २ १
षणा३यिसाहाम्। गान्ना२हो१यि। चाऔ३हो। षा
२ १ २ १ र २ २
णाउवा। साहाउवा। विद्वेषणासंवननमाऔ३हो।

१ २ १ २ १ २ १ २
भायाउवा। काराउवा। काराउवा। मꣳहिष्ठमाऔ

२ १ २र १ ३र ५ ४
३हो। भया। औहो। वाहो२३४वा। वा५यिनो

५
६हाथि(३) ॥ १५* ॥ [१] ५

अथ उदुत्यइति प्रगाथात्मकं तृतीयं सूक्तम्,

तत्र प्रथमा।

१ २ १र २र २ २ २ १ २
उदुत्येमधुमत्तमागिरःस्तोमासईरते।

२ १ २ ३ १र १र ३ २ ३ १ २
सत्राजितोधनसाअक्षितोतयोवाजयन्तोरथाइव ॥ १† ॥

"त्ये" ते प्रसिद्धाः "मधुमत्तमाः" अतिशयेन मधुराः "गिरः" स्तुति-रूपया वाचा "स्तोमासः" त्रिवृदादि-स्तोमाश्च "उदीरते" हे इन्द्र! त्वामुद्दिश्य उद्गच्छन्ति ऊर्द्ध्वं प्रसरन्ति [ईर गतौ आदादिकः (धा०)]। तत्र दृष्टान्तः—"सत्राजितः" सहैव शत्रून् जयन्तः "धनसा" धनानि सम्भजन्तः [वन षण सम्भक्तौ (भ्वा० प०), "जन-सन-खन-क्रम-गमो विट् (३, २, ६७), "विड्वनोरनुनासिकस्यात् (६, ४, ४१)"—इत्यात्वम्, "अक्षितोतयः" अक्षिताः क्षय-रहिताः ऊतयो रक्षा येषां ते तथोक्ताः [अवियो भावे निष्ठा, "निष्ठायामण्यदर्थे (६, ४, ६०)"—इति

* ऊ० गा० ६प्र० १ख० १५सा०।

† छ० आ० ३, २, १, ९ (१भा० ५१९ पृ०) = ऋ० वे० ५, ७, १७, ५।

पर्युदासाद्दीर्घाभावः अतएव "क्षियो दीर्घात् (८, २, ४६)" —इति निष्ठा-नत्वाभावश्च "वाजयन्तः" वाजमन्नमिच्छन्तः, वाचि "न छन्दस्यपुत्रस्य (७, ४, ३५)"—इतीत्व-दीर्घयोः प्रतिषेधः ], एवङ्गुणविशिष्टाः "रथाइव" ते यथा विविधमितस्तत उत्तिष्ठन्ति तद्वदुदीरतइत्यर्थः ॥ १ ॥

अथ द्वितीया।

१ २ २ १ २ ३ १ २ २ २ ३ २ ३ १ २
कण्वाइवभृगवःसूर्याइवविश्वमिद्धीतमाशत।
१ २ १ २ ३ २ २ १२ ३ १ २
इन्द्रꣳस्तोमेभिर्महयन्तआयवःप्रियमेधासोअस्वरन्॥२*॥६

"कण्वाः" कण्व-गोत्रोत्पन्ना ऋषयः "इव" स्तुवन्तः "भृगवः" भृगु-गोत्रोत्पन्ना ऋषयः† "धीतम्" आध्यातम् "विश्वमित्"‡ व्याप्तं तमेव "इन्द्रम्" "आशत" आनशिरे "सूर्य्याइव" यथा सूर्य्य-रश्मयः सर्वं जगद् व्याप्नुवन्ति, तद्वत्। अपिच "प्रियमेधासः" प्रिययज्ञाः एतत्सञ्ज्ञका वा¶ "आयवः" मनुष्याः तमेवेन्द्रं "महयन्तः" पूजयन्तः "स्तोमेभिः" स्तोत्रैः "अस्वरन्" अस्तुवन् [ स्वृ शब्दोपतापयोः भौवादिकः (प०) ॥ "आशत"-"आनशुः"—इति पाठौ ॥ २ ॥ ६

---

* ऋ० वे० ५, ७, २८, १।

† अत्राह यास्कः—"अर्चिषि भृगुः सम्बभूव भृगुर्भृज्यमानो न देहे"—इति निरु० नै० ३, १७। 'भृगवः—भर्जनकराः सूर्य्याइव यथा आदित्य-रश्मयः'—इति वि०।

‡ 'इत्—इति पाद-पूरणः'—इति वि०।

¶ अत्राह यास्कः—"प्रियमेधः प्रिया अस्य मेधाः"—इति निरु० नै० ३, १७।

५ ४ २ ४ ५ ४ ५ १
॥ अभीवर्त्तम् ॥ उद्धूइत्येइमाधुमत्तमोवा। गायिर

१२ २ १ २ १ २ २
स्तोमा। सत्रायिरा१ता २यि। साचाजिती३१२३४।

२ ४२ ५ २ १ २ २ १ २ ३ १
धनमाग्न। चितोता१या २ः। वाजायाश्न्तार:। रथा३:।

१ २ १ १ १ १ ५२ ४ २ ४ ५२ ४
आर२३४५यि। वार ३ ४ ५ ॥(१) वाजाइराइन्तोरथाद्भवो

५ १ २ १ २ १ २ २
वा। वाजयन्त:। रथाआ१यिवा २। काण्वाद्दना३१२३

३ ४ ५२ २ १ २ १ २
४। भृगव:स्व। रियाआ१यिवा २। विश्वामा१यिद्धी २।

१ २ १ २ १ १ ११ ५ ४ २ ४
नमा३। मा२३४५। ना२३४५ ॥(२) विश्वाइमाइयिद्धी

५२ ४ ५ १ २ २ १ २ १
नमाग्नतोवा। वायिश्वमिद्धी। नमाग्नाना २। वायिन्द्रं९

२ २ २ ४५ २ १ २ १
स्तोमा३१२३४यि। भिर्महय। नत्राया१वा २:। प्रिया

३२ २ १ ३ १ १
मा १ यिधा २। सोत्रा ३। स्वा २ ३ ४ ५। रा २ ३

१ १
४ पुन्(३) ॥ १६* ॥ [१] ६

---

* ऋ० मा० ६म० १ख० १६मा०।

अथ पर्यूष्विति तृचात्मकं चतुर्थं सूक्तम्—

तत्र प्रथमा ।

१ २ १ १र २ १ २ २ १ २ २१ २ २ १ २

पर्यू षु प्रधन्व वाजसातये परि वृत्राणि सक्षणिः ।

३ २ ३ १ २ ३ १ २

द्विषस्तरध्या ऋणया न ईरसे ॥ १* ॥

हे सोम ! "सु" सुष्ठु "वाजसातये" अस्मभ्यमन्नदानार्थं "परि प्रधन्व" परितः प्रगच्छ [ यद्वा, "वाजसातये" अन्नस्य लाभाय सङ्ग्रामं प्रगच्छ ]। किञ्च "सक्षणिः" सहनशीलस्त्वं "वृत्राणि" शत्रून् परिगच्छ । तदेवोच्यते—"नः" अस्माकम् "ऋणया" ऋणानां यापयिता विनाशयिता त्वं "द्विषः" शत्रून् "तरध्यै" तरीतुं हन्तुम् "ईरसे" परिगच्छति ॥

"ईरसे"-"ईयसे"—इति पाठौ ॥ १ ॥

अथ द्वितीया ।

१ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २

अजीजनो हि पवमान सूर्यं विधारे शक्मना पयः ।

१ २ ३ १ २ ३ १ २

गोजीरया रंहमाणः पुरन्ध्या ॥ २† ॥

हे "पवमान" सोम ! त्वं "पयः" पयस उदकस्य "विधारे" विधारके अन्तरिक्षे "शक्मना" सामर्थ्येन बलेन "सूर्यम्"

---

* छ० आ० ५, १, ५, २ (१ भा० ८७१ पृ०)=ऋ० वे० ७, ५, २२, १ ।

† ऋ० वे० ७, ५, २२, २ ।

"अजीजनः हि"* इत्यादितवान् भवसि खलु । कीदृशः ? "गोजीरया" स्तोतृभ्यो गवां प्रेरकेण स्तोतॄणां प्रेरित-पशुकेनेत्यर्थः, तादृशेन†; "पुरन्ध्या" बहुविध-प्रज्ञानेन युक्तः‡ "रंहमाणः" वेगं कुर्वाणस्त्वं सूर्य्यमजीजनः ॥ २ ॥

अथ तृतीया ।

२ ३ १ २ ३ १ २ ३ १ २
अनुह्वित्वासुतꣳसोममदामसि ॥ ३ ¶ ॥ ७

—इति तृतीयाया ऋचः प्रतीकमिदम् । सा चान्यत्र ( ५,१, ५, ६=१भा० ८७७पृ० ) व्याख्याता ॥ ३ ॥ ७

३ २ २ ४ ५ २
॥ श्यावाश्वम् ॥ परा३१यि । ऊ३पू । प्रथ । न्वा

४र ५ र र २ १ १र
३वा । एहियाजा । सातयेपा । रि । वृत्रा२ । एहि

१ २ ४ ५ २र
या२ । णिमच्चणायिर्द्वा३यिपा३ः । म२३४रा । ऐहा

१र ८ १ २ ४ २
२यि । एहिया२ । धिगाच्चयानाइ३ । रा३४पुनी

५ ३ २ २ ४ ५ २ ४र
इहायि ॥(१) अजा३१यि । जा३नो । हिप । वा३मा ।

---

* 'हि-इति पद-पूरणः'—इति वि० ।

† गोजीरया रंहमाणः—गोजीरेण संयुक्तया इच्छा वा सिध्यया, रंहमाणः वेगेन गच्छमानः'—इति वि० ।

‡ 'पुरन्ध्या—उदकेन'—इति वि० ।

¶ छ० आ० ५, १, ५, ६ (१ भा० ८७७पृ०)=ऋ० वे० ७, ५, १२, ३ ।

५ १ २ २र १र १र
एहिया। ना। हरियंवायि। धा। रैमा२। एहिया
२ १ २ ३ ५ २र
२। क्मनापृषोगो३जी३जी३। रा२३४या। ऐहा२यि।
१र १र २ ४
एहिया२। र्ंहमाणाःपू३रा३म्। धा३४५यो६
४ ३ २ २ ४ ५ २ ४
हायि॥(२) अनु३१। हा३यित्वा। सुतम्। सो३म।
५ १ २ २र १ १र
एहिया। षा। दामसिमा। हे। समा२। एहिया
२ १ २ ४ ५ २र
२। यराजियेवा३जा३। आ२३४भो। ऐहा२यि।
१र १र ५
एहिया२। पवमानाप्रा३गा३। हा३४५सो६हा
यि(३)॥ १८ *॥ [१]

२ र २ १ र
॥ आन्धीगवम्॥ पर्ष्युषुप्रधा१न्वावा। जसात।
र २ १ १र २ १ २ १ २ ३ १ १
येपा२३री। ऊम्मा२१ऽ३। वृत्राणिसत्त्वाणिदिंषस्तरा२३
१ १ १ २ २ १ २ १ २
४५। धारयाइउवार्णा२या। ना२३ई। रसा। औ
४ ५ २ र र २ २
३होवा॥(१) अजीजनो हिपा१वा[illegible]रि। पंवा२३

* ऊ० गा० ६प्र० १ख० १८सा०

यिधाऊम्मा२१ऽ२। रेभ्रक्मनापयोगोजीरयार ३ ४ ५।

रा१ऽहा२३उवा। मा२पगम्। पूर३राम्। धिया। औ

३होवा॥(२) अनुह्नित्वासुता१ऽसोमा। मदाम। इ

मा२३त्ते। ऊम्मा२१ऽ३। समर्थराज्येवाजा१ऽअभी२३

४५। पावा३उवा। मा२ना। प्रा२३गा। हसा। औ

३होवा। होप्५ई। डा(३)॥ १८*॥ [२]

॥ विराट्सुवामदेव्यम्॥ पाऽ५रि। ऊषू३ प्रा३ध

न्वावा। जा। सातयेपरिवृत्राणिसक्षणिर्द्विषस्त। रा।

औ३होहायि। जा। सातयेपरिवृत्राणिसक्षणिर्द्विषस्त।

रा। औ३होहायि। धियार३क्षणयाः। नऔहो३।

ऊम्मा२। राऽ२सो३५हायि॥(१) आऽ५जी। जनो३

यिपवमा। ना। हरियंविधारेभ्रक्मनापयोगोजीर।

---

* ऊ० गा० ६प्र० १ख० १८सा०।

या । औ३होवाहायि । ना । हरियंविधारेग्रक्मनापयोगो
जीर । या । औ३होवाहायि । र९ंहा२३माणः । पुरौ
हा३ । ऊ३म्मा २ । धाऽ२यो३५हायि ॥(२) आऽ५नु ।
हित्वा३ह३त९ंसोमा । मा । दामसिमहेसमर्य्यराज्ये
वाजा९ंअ । भा । औ३होवाहायि । मा । दामसिमहेसम
र्य्यराज्येवाजा९ंअ । भा । औ३होवाहायि । प्रवा२३मा
माना । प्रगौवो ३ । ऊ३म्मा २ । हाऽ २ यो ३ ५ हा
यि(३) ॥ ८* ॥ [३]

॥ गौरीवितम् ॥ परि । ऊषू३ । प्रधन्वावा । जसा
तयेपरिवृत्रा२३ । णायिसक्षणा३१२३यिः । द्विषाऽ५स्तरा ।
ध्याऋणया३१२३ः । नओवा । राऽ५सोऽ६हायि(१) ॥ ५† ॥ [४]

---

* ऊ० गा० ६प्र० २अ० ८खा० ।

† ऊ० गा० १०प्र० १अ० ५खा० ।

५ ४ १२र ४ ५ २१
॥ ओकोनिधनम् ॥ अजा३यिजनोद्विपवमा। नसू।
२र १ र १
रियंविधारे भक्मना २पाया २ः। गोजा२यिराया२।
१ ५ २१ २ ५र र ५र
र१ह्माऽ२३४णाः। पुरम्। धा२या२३४औहोवा। औ
र ३ ५
होवा। ओ२३४काः(२) ॥ ६ * ॥ [५] ७

अथ परिप्रधन्वेति तृचात्मकं पञ्चमं सूक्तम्—

तत्र प्रथमायाऋचः

२ ३ १ २
परिप्रधन्व ॥ १ † ॥

—इति प्रतीकमिदम्। सा चान्यत्र (५, १, ५, १=२भा० ८६८पृ०) व्याख्याता ॥ १ ॥

अथ द्वितीया।

२ १र २र २ १र २र ३
एवामृताय महे क्षयाय
२ २ १ २ ३ २ ३ १ २
सशुक्रोअर्षदिव्यःपीयूषः ॥ २ ‡ ॥

---

* ऊ० गा० २०प्र० २ख० ६सा०।

† छ० आ० ५, १५, १ (२भा० ८६८पृ० )=ऋ० वे० ७,५,२०,१।

‡ ऋ० वे० ७, ५, २०, २।

हे सोम! "शुक्रः" दीप्तः "दिव्यः" दिवि भवः "पीयूषः" देवैः पातव्यः "सः" त्वम् "अमृताय" अमरणाय "महे" महते "क्षयाय" निवासाय च "एव अर्ष" एवं पवस्व क्षर॥ २॥

अथ तृतीया।

२ १ २ १ २ २
इन्द्रस्तेसोमसुतस्यपेयात्

२ ३ १ २ ३ १ २ १ २
क्रत्वेदक्षायविश्वेचदेवाः॥ ३ *॥ ८

हे "सोम!" "सुतस्य" अभिषुतस्य "ते" तव स्वभूतं (रसमिति शेषः) "इन्द्रः" "पेयात्" पिबतु [पिबतेराशीर्लिङि रूपम्]। किमर्थम्? "क्रत्वे" क्रतवे प्रज्ञानाय "दक्षाय" बलाय "च" किञ्च, अमी "विश्वे" सर्वे "देवाः" च त्वदीयं रसं पिबन्तु॥

"पेयात्"-"पेयाः"—इति पाठौ॥ ३॥ ८

१ २ १
॥ वाङ्निधनंसौहविषम्॥ प। यैंपारी। प्रधन्वा।

२ १ २ २ २ १ २२ १
होवा३होयि। इन्द्रायसोमा। होवा३होयि। स्वादु

२ २ १ २ २ ३ ५ ४
र्मिंत्राया। होवा३हो२३यि। पूष्णौंवाओ२३४वा। भ

* ऋ० वे० ७, ५, २०, २।

गाप्याउ ॥(१) एव । एआयिवा । एव । एआयिवा । अमृताया । होवा ३ होयि । महेत्तयाया । होवा ३ होयि । सप्तुक्रोअर्षा । होवा३हो२३यि । दिव्यौवा ओ२३४वा । पीयूषाउ ॥(१) इन्द्रः । एआयिन्द्राः । इन्द्रः । एआयिन्द्राः । तेसोमा । होवा३होयि । सुतस्यपेयात । होवा३होयि । क्त्विदत्ताया । होवा ३ हो २ ३ यि । विश्वौवाओ २ ३ ४ वा । वदापृथिवाउ । वा(३) ॥ २०* ॥ [१]

॥ वारवन्तीयम् ॥ परिप्रधाऔहोहायि । न्वाइ२३४न्द्रा । यसोमा२३४हायि । स्वादुर्मित्रा३३ । औहोवा । इहा२३४हायि । उज्ञवा२३४या । पू । ष्णायिभगा३४ । औहोवा । इहा२३४हायि । औहो३१२३४ । या । ए

* ऊ० गा० ६प्र० १अ० २०सा० ।

हियाइहा॥(१) एवाम्र्तनाऔहोहायि। यामार२३४हे।
ञयायार२३४हायि। मघुङ्कोआ२३४। औहोवा। इहा
२३४हायि। उङ्कवा२३४र्षा। दिव्याःपीयू३४। औहो
वा। इहा२३४हायि। औहो३१२३४। वाः। एहिया
इहा॥(२) इन्द्रस्तेसोऔहोहायि। मास्त२३४मा। स्य
पेयार२३४हायि। क्रत्वेदक्षा३४। औहोवा। इहा२३
हायि। उङ्कवा२३४या। वि। श्वायिचद्रा३४। औहो
वा। इहा२३४हायि। औहो३१२३४। वा। एहियाइ
हा। होपूइ। डा(३)॥१०*॥[२]

॥ सफम॥ परिप्रा३धान्वाइं२३४न्द्रा। यसोमार३।
स्वार२३४दुः। मित्रा। यपूष्ण३भा३। गा३४५योइहा
यि(३)॥८†॥[३]

---

* ऊ० गा० ६प्र० २ख० १०सा०।

† ऊ० गा० १०प्र० १ख० ८सा०।

२ १ २ ५ १
॥ वाजदावर्यम् ॥ परिप्रधा। न्वार्इ२३४न्द्रा। या
२ ५ १ २
२सो२३४मा। स्वा२दूः। मा२३यित्रा। या
१ १र १ ५ ४ ५ १र २
२पू। स्तोभो२३४वा। गा५योई्हायि ॥(१) एवाम्हता।
१ २ ५ १ २ ५ १
या२मा२३४हे। चा२या२३४या। सा२ख्ये। क्रो२३
२ १ १ २ १ ५ ४ ५
श्रा। धा२दायि। व्यः पो२३४वा। यू५षोई्हायि ॥(२)
२ २ १ २ ५ १ २ ५
इन्द्रस्तेसा। मा२सू२३४ता। स्या२पे२३४यात्। क्रा२
१ २ १ २र १ ५ ४
त्वे। दा२३त्ता। या२सायि। स्व चो२३४वा। दा५
५
यिवोई्हायि(३) ॥ ७* ॥ [४]

२ १ १ ३ ५ ३ २
॥ स्वनिधनम् ॥ परीइहोयि। प्रधा२३४न्वा। इन्द्रा
१ २ ५ ३र २ १ २
३ हो। यसो२३४मा। स्वादू ३ होयि। मित्रा
५ ३र २ १ ३ ५ ४र ५र
२३४या। पूष्णे ३ होयि। भगा२३४या। पूष्णे
४र ५ ३र २ २ २ ४
भगाय। पूष्णा३४३। हो३४३यि। भा३गापूया ६

---

* ऊ० गा० १२प्र० १ख० ७गा०।

३२ २ १ २ ५ ३ २ १
५६ ॥(१) एवा३हौयि । अमृता२३४या । मह्वे३हौयि ।

२ ५ ३ २ १ २ ३ ५ ३ २ १
त्वया२३४या । सघ्र३हो । क्रोत्रा२२३र्षा । दिव्या३हो

२ ३ ५ ४ ३ २ ५ ३ १
यि । पीयू२३४षाः । दिव्यःपीयूषः । दिव्या३४३: ।

२ २ ४ ३ २ १ २ ३
हो३४३यि । पी३यू५षा६५६: ॥(२) इन्द्रा३हो । तेसो

५ ३ २ ० १ २ ५ ३ २ १
२३४मा । सुता३हो । स्वपे२३४यात् । क्रत्वे३हौयि ।

२ ५ ३ २ १ २ ५ ४ ३२
दक्षा२३४या । विश्वे३हौयि । चद्रा२३४यिवाः । विश्वे

४२ ५२ ३ २ २ २ ४
चद्देवाः । विश्वे ३४३ । हो३४३यि । चा३द्रा५यिवा६५

२ १ ३ १ १ १ १
६: । ए३ । सुवर्ज्योति२३४५(३) ॥ ४* ॥ [५]

१ २ १ २
॥ वाजजित् ॥ परिप्रधन्वा । होवा३हौयि । इन्द्रा

२ २ १ २ २ २
यसोमा । होवा३हौयि । स्वादुर्मित्राया । होवा ३

१ २ २ २ २ १ २ ५२
हौयि । पूष्णेभगाया । होवा३होर् । वा२३४औ

२ १२ २ २ २ १ २ २
होवा ॥(१) एवामृताया । होवा३हौयि । मह्वेत्वया

* ऊ० गा० १४प्र० १ख० ४सा० ।

या। होवा३होयि। सप्तऋषयः। होवा३होयि। दिव्यःपीयूषाः। होवा३हो२। वा२३४औहोवा॥ इन्द्रस्सोमा। होवा३होयि। सुनस्यपेयात्। होवा ३होयि। क्रत्वेदक्षाया। होवा३होयि। विश्वेचदेवाः। होवा३हो२। वा२३४औहोवा। वाजोजिगीवाविश्वाध ना२नी२३४५(२)॥ ६*॥ [६]

॥ पौष्कलम्॥ परिप्रा३ध। न्वाइ२३४न्द्रा। यसो। माखा२३४दूः। मित्रा। या२३४५। पू६५६। षणा गाया२३४५(१)॥ १९†॥ [७] ८

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य एकादशस्याध्यायस्य

द्वितीयः खण्डः॥ २॥

---

* ऊ० गा० १७प्र० २ख० ६सा०।

† ऊ० गा० २१प्र० १ख० १९सा०।

अथ तृतीय-खण्डे —

सूर्य्यस्येवेति तृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा ।

१ २   ३ १ २   ३ १ २
सूर्य्यस्येवरश्मयोद्रावयित्नवो

३ १ २ ३ १ २   ३ १ २
मत्सरासः*प्रसुतःसाकमीरते ।

१ २ ३ २उ ३ १ २   ३ २ ३
तन्तुन्ततम्परिसर्गासआशवो

१ २ ३ १ २ ३ २ ३ २ ३ २
नेन्द्राहतेपवतेधामकिञ्चन ॥ १† ॥

"सूर्य्यस्य" सर्वस्य प्रेरकस्य सुवीर्य्यस्यादित्यस्य "रश्मय इव" सर्वतो व्यापकाः किरणा इव "द्रावयित्नवः" सर्वत्र द्रवणशीलाः "मत्सरासः" मदकराः "प्रसुतः" प्रकर्षेण सुताः अभिषुताः [एकवचनं छान्दसम् (३, १, ८५)] "आशवः" ग्रहेषु चमसेषु च व्याप्ताः "सर्गासः" सृज्यमानाः सोमाः "ततं" विस्तृतं "तन्तुं" तन्तुभिः कृतं वस्त्रं दशापवित्रं "साकं" सह युगपत् "परि-ईरते" परितो गच्छन्ति । ते सोमाः "इन्द्राहते" इन्द्रं वर्ज-यित्वा अन्यत् "किञ्चन धाम"‡देव-शरीरं लक्षीकृत्य "न पवते"

* "प्रस्तुवः"—इति ऋ०-पाठः ।

† ऋ० वे० ७, २, १२, १ ।

‡ 'इन्द्रं मुक्त्वा नान्यत् सोमस्य स्थापनमस्ति'—इति वि० ।

न गच्छन्ति ॥ [इन्द्रस्य धाम्नो यष्टव्यत्वञ्च "अयामीन्द्रस्य प्रिय-धामानि"—इति मन्त्र-वर्णादवगम्यते ॥ १ ॥

अथ द्वितीया ।

१ २ ३ २ ३ १ २ ३ २ ३ १ २
उपोमतिःपृच्यतेसिच्यतेमधु

३ १ २ २ ३ १ २ २
मन्द्राजनीचोदतेअन्तरासनि ।

१ २ ३ १ २ ३ १ २ ३
पवमानःसन्तनिःसुन्वतामिव

१ २ ३ १उ ३ १ २
मधुमान्द्रप्सःपरिवारमर्षति ॥ २* ॥

अस्मिन् परिवाद-रूपे स्तोत्रे इन्द्रे "मतिः" स्तुतिरूपा "पृच्यते" स्तोतृभिः संयोज्यते [ पृची सम्पर्के ( दि० आ० ) ]। तथा "मधु" मद-करः सोमः इन्द्रार्थं "सिच्यते" अद्भिर्यव-सक्तुभिश्च सिक्तो भवति, ततः "मन्द्राजनी" [अज गति-क्षेपणयोः ( अदा० आ० )—इत्यस्य ल्युटि ङीपि रूपम्] मदकरस्य रसस्य प्रेरयित्री सोमधारा तस्येन्द्रस्य "आसनि" आस्ये "अन्तर्" मध्ये "चोदते" प्रेर्य्यते [ आस्य-शब्दस्य "पद्दन्नोमासित्यादिना ( ६, १, ६३ ) आसन्नित्यादेशः ]। किञ्च "सन्तनिः" ग्रहादिषु सम्यक् विस्तृतः "सुन्वताम्" अभिषुतवतां यजमानानां सम्बन्धिनी,

* ऋ० वे० ७, २, २१, २ ।

† 'सन्तनिः—सन्ततिः, सुन्वतामिव—यथा सुन्वतां सन्तनिः कर्म्म-सन्ततिः एवं सोमस्य धारयेति'—इति वि० ।

"पवमानः" पूयमानः सोमः "द्रप्सः" द्रुत-गमन-शीलः "वारम्" अवि-वालमयं पवित्रं "परि" परितः "अर्षति" गच्छति। "इव" —इति पाद-पूरणः॥

"सुन्वतामिव"—"घ्नतामिव"—इति पाठौ॥ २॥

अथ तृतीया।

३ १ २ ३ १ २ ३ १ २
उक्षामिमेतिप्रतियन्तिधेनवो।
३ १ २ ३ १र २र ३ २
देवस्यदेवीरुपयन्तिनिष्कृतम्।
१ २ ३ १ ९ ३ १ २ ३ २ ३
अत्यक्रमीदर्ज्जुनंवारमव्यय
२ ३ २ ३ २उ ३ १ २
मत्कन्ननिक्तम्परिसोमोअव्यत॥ ३*॥ ९

"उक्षा" रेतसः सेक्ता वृषभः पुरतो "मिमेति" शब्दायते [माङ् माने शब्दे च (ह्वा० आ०) तं वृषभं "धेनवः" गावः† "प्रति यन्ति" अनुगच्छन्ति। तथा "देवस्य" द्योतमानस्य संस्कृतं स्थानं "देवीः" देव्यः स्तुतयः "उप यन्ति" उपगच्छन्ति [अनेनाहित-सोमः स्तुतिभिश्चाभिधीयते। सोमो हि द्रोणकलशाभिगमन-काले शब्दं करोति, तमनु धेनवः प्रीणयित्र्यः स्तुतयः परियन्ति देवस्य स्थानं स्तुतयोऽभि गच्छन्ति। तथा सोऽयं

* ऋ० वे० ७, २, २१, ४।

† 'धेनवः—धेट् पाने (भ्वा०प०), पिबन्त्युदकानि आदित्य-रश्मयः। अथवा * * *'— इति वि०।

सोमः "अर्जुनं" श्वेतवर्णम् "अव्ययम्" अविमयम् अवेः स्वभूतं "वारं" वालं पवित्रम् "अत्यक्रमीत्" "अतिक्रामति [अतिक्रम्य पात्राणि गच्छतीत्यर्थः]। किञ्च सोमः "अत्कं न" आत्मीय-कवचमिव "निक्तम्" उज्ज्वलं अयण-द्रव्यम् "परि अव्यत" परितः संवृणोति ॥

"मिमेति"—"मिमाति"—इति पाठौ ॥ ३ ॥ ९

२र १र २ १ र २र १
॥ वाजजित् ॥ सूर्य्यस्येवा। रश्मयोद्रा। वायित्न
२ १ २ १र २ १ २र
वाः। होवा३होयि। मत्सरासाः। प्रसुतःसा। का
१र २ १ २ १ २ १
मीरतायि। होवा३हायि। तन्तुन्ततम्। परिसर्गा।
२र १र १ १ १र र १ २ १ र
साआशवाः। होवा३होयि। नन्द्रोहनायि। परतेधा।
२र १ २ १ ३ ५र र
माकिश्चना। होवा३होऽ२। वा २ ३ ३ औहोवा ॥(१)
२ र १ १ १ र २र १र २ १
उतोमतायिः। पृच्यतेसायि। च्यातेमधू। होवा३हो
२ र १ २र १ र २र १र
यि। मन्द्राजनायि। चोदतेआ। तारासनायि। हो
२ १ २ १र २ १ २र १र
वाहोयि। पवमानाः। सन्तनिःसू। न्वातामिवा। हो
२ १ २ १र २ १ २र १
वा३होयि। मधुमान्द्रा। सःपरिवा। रामर्षतायि।

२ १ ३ ५र र १र १
होवा३होऽ२। वा२३४औहोवा॥२। उत्तामिमायि।
२ १ २र १र २ १ २र १
तिप्रतिया। तीधेनवाः। हौवा३होयि। देवस्यदायि।
२र १ २र १ २ १ १
वीरूपया। तीनिष्कृताम्। होवा३होयि। अत्यक्र
२ १ २र१ १ १
मायिन्। अर्जुनम्वा। रामव्ययाम्। होवा३होयि।
२ १ १ २र १ १ १
अत्कन्ननायि। कर्म्परिसो। मोअव्यता। होवा३हो
३ ५र र २र१र २र १र १र ३ १ १
ऽ२। वा२३४औहोवा। वाजीजिगीवाविश्वाधना२नौ२ ३
१ १
४५॥ २१*॥ [१]

२र १ र र २ १
॥ काव्यम्॥ हुव्योवा। स्वेवरश्मयोद्रा। वयित्ना
१ र २ र १
वा२ः। मत्सरासः। त्रस्तुतःसा। कमीराता२यि।
१ २ र १ १ २ ४ ५
तन्तुन्ततम्परिसर्गा। सश्राश्वावा२३ः। नेन्द्राइदार्श्ना
२ १ १ २ ४
यि। पवतायिधा२३। माकाइयिम्वा५ना ६ ५ ६॥(१)
२ १ र २ र १ १ र
उ३ोवा। मतिःपृच्यतेसायि। च्यतेमाधू२। मद्राज

* ऊ० गा० ६प्र० १अ० २१सा०।

२ र र  २ र १  १ र
नीचोदतेआ। तरामाना२यि। पवमानःसन्तनिःह्व।

२ र १  १ २ ४ ५  २ १
न्वतामायिवा२३। माधूरुमान्द्रा। सः परायिवा २ ३।

२ २ ४  २ १  र
रामा३र्षापूता६५६यि॥(२) उत्तोवा। मिमेतिप्रतिया।

२ र १  १र र र  २ १
निधेनवा२ः। देवस्यदेवीरुपया। तिनिष्कार्त्ता२म्।

१ र  २ १  १ २ ४ ५
अत्यक्रमीद्ज्जनम्वा। रमव्यायाऽ२३म्। आत्काऽन्नानी।

२ १  १ २ ४
कम्परायिसो२३। मोआ३व्यापुना६५६(३) ॥११*॥ [२] ९

अग्निनरइति ऋचात्मकं द्वितीयं सूक्तम्,†

तत्र प्रथमा।

३ २उ ३ १ २  ३ २ ३
अग्निनरो दीधितिभिररण्यो

१ २  ३ २
र्हस्तच्युतञ्जनयतप्रशस्तम्।

३ १ २ ३ १ २  ३ २
दूरेदृशङ्गृहपतिमथव्युम्॥ १‡॥

* ऊ० गा० ९प्र० १ख० ११सा०।

† 'अग्निन्नः—एतदग्निष्टोमसाम। वामदेवम्'—इति वि०।

‡ छ० आ० १, २, २, १० (१भा० २१५ पृ०) = ऋ० वे० ५, ९, ३३, १।

हे "नरः" नेतार ऋत्विजः! यूयं "प्रशस्तं" प्रकर्षेण स्तुतं "दूरेदृशं" दूरे दृश्यमानं दूरे पश्यन्तं वा "गृहपतिम्" गृहाणां पालकम् "अथर्य्युम्" अगम्यम् अतनवन्तं वा "अग्निम्" "अरण्योः" सकाशात् "हस्तच्युतं" हस्तगतं "दीधितिभिः" अङ्गुलिभिः "जनयन्त" उत्पादयन्त ॥

"हस्तच्युतञ्जनयन्त"-"हस्तच्युतीजनयन्त"—इति पाठौ, "अथर्य्युम्"-"अथर्य्युंम्"—इति च ॥ १ ॥

अथ द्वितीया।

२ ३ २उ ३ १ २३उ २र
तमग्निमस्ते वसवो न्यृण्वन्

३ २ ३ १ २ ३१ १
सुप्रतिचक्षमवसे कुतश्चित्।

३ २ ३ ३उ ३ २ ३ १ २
दक्षाय्यो यो दम आस नित्यः ॥ २* ॥

"यः" अग्निः "दमे" गृहे गृहे "दक्षाय्यः" पूजनीयो हविर्भिः समर्द्धनीयो वा "नित्यः" अजस्रः "आस" बभूव "तं" "सुप्रतिचक्षं" सुप्रतिदर्शनम् "अग्निं" "कुतश्चित्" सर्वस्मादपि भयहेतोः "अवसे" रक्षणाय "वसवः" वासकाः वसिष्ठाः स्तोतारः "अस्ते" गृहे "न्यृण्वन्" न्यदधुः ॥ २ ॥

---

* ऋ० वे० ५, १, २३, २।

† विवरण-नये आसनित्य इत्येकं पदम्, तथाहि—'आसनित्यः—आसमासनं नित्यं यजमान-गृहे यस्य'—इति तद्व्याख्यानम्। विरुद्धञ्चैतत् पदकारादीनाम

१ २र १ २र
'आस। नित्यः'—इति दर्शनात् बहुव्रीहि-स्वराश्रुतेश्चेति विचार्यम्।

अथ तृतीया।

१ २ ३ १र २र ३ १र

प्रेद्धोअग्नेदीदिहिपुरोनोजस्रयासूर्म्यायविष्ठ।

१र २र ३ १ २ ३ १ २

त्वाᳪंशश्वन्तउपयन्तिवाजाः॥ ३* ॥ १०

हे "यविष्ठ" युवतमाग्ने! "प्रेद्धः" प्रकर्षेण समिद्धः त्वम् "अजस्रया" अमरणशीलया "सूर्म्या" ज्वालया "नः" अस्मदर्थं "पुरः" पुरस्तात् आहवनीयायतने "दीदिहि" दीप्यस्व। "त्वां" "शश्वन्तः" बहवः "वाजाः" अन्नानि हवींषि "उपयन्ति" उपगच्छन्ति† ॥ ३ ॥ १०

* ऋ॰ वे॰ ५, १, २२, ३ = य॰ वे १७, ७६।

† अत्रेयं महीधर-व्याख्या—"हे 'यविष्ठ!' [अतिशयेन युवा यविष्ठः। अतिशायने तमबिष्ठनौ, स्थूलदूरयुवेत्यादिना व-लोपे पूर्वगुणः] हे युवतम! हे 'अग्ने!' त्वं 'नो'ऽस्माकं 'पुरो' ऽग्रे 'दीदिहि' दीप्यस्व [दीव्यतेर्विकरण-व्यत्ययेन जुहोत्यादित्वात् श्लुः श्लौ द्वित्वम्, तुजादीनामिति पूर्व-दीर्घः]। किम्भूतस्त्वम्? 'अजस्रया' अनुपक्षीणया 'सूर्म्या' समित्काष्ठेन 'प्रेद्धः' प्रकर्षेण दीप्तः [सूर्मी शब्दः काष्ठ-वाचकः; यद्वा, लोहमयी ज्वलन्ती स्थूणा सूर्मी। अजस्रया सूर्म्या सूर्मी-समानया ज्वालया दीदिहि। सूर्मी-शब्दो ज्वालोपलक्षकः]। हे अग्ने! अतः शश्वन्तो निरन्तर-भाविनो वाजाः अन्नानि हवींषि त्वामुपयन्ति प्राप्नुवन्ति अतो दीप्यस्वेत्यर्थः"—इति।

आयङ्गौरिति तृचात्मकं तृतीयं सूक्तम्,*

तत्र प्रथमा।

१र २र ३ १ २ ३ १ २ ३ २

आयङ्गौःपृश्निरक्रमीदसदन्मातरम्पुरः।

३ १ २ ३ १ २

पितरञ्च प्रयन्त्स्वः॥ १† ॥

"गौः" गमनशीलः "पृश्निः" प्राष्टवर्णः व्याप्ततेजाः "अयं" सूर्य्यः "आक्रमीत्" आक्रान्तवान् उदयाचलं प्राप्तवानित्यर्थः। आक्रम्य च "पुरः" पुरस्तात् पूर्व्वस्यां दिशि "मातरं" सर्व्वस्य भूतजातस्य निर्मात्रीं भूमिम् "असदन्" आसीदति प्राप्नोति [सदेश्छान्दसो लुङ्, लृदित्वात् च्लेरङादेशः। ततः "पितरं" पालकं द्युलोकं "च"-शब्दादन्तरिक्षञ्च "प्रयन्" प्रकर्षेण शीघ्रं गच्छन् "स्वः" सु अरणः शोभन-गमनो भवति [यद्वा, पितरं स्वर्द्युलोकं प्रयन् वर्त्तते]॥ १॥

---

* 'उक्तमग्निष्टोमसाम। इदानीं मानसं स्तोत्रं भवति। * * *। मनसाभिहिं-करोति। मनसोद्गायति। मनसा प्रतिहरति। मनसा निधनमुपयन्ति। एतन्मानसं येनात्यग्निष्टोमायङ्गौः पृश्निरक्रमीदिति'—इति वि०।

† छ० आ० प० ३, ५, ४ (१भा० ३४२ पृ०) = ऋ० वे० ८, ८, ४७, १ = य० वे० ३, ६।

अथ द्वितीया।

३ १ २    ३ २उ ३ १ २ ३ २

अन्तश्चरति रोचनास्य प्राणादपानती।

१र २र ३ १र २र

व्यख्यन्महिषो दिवम् ॥ २* ॥

"अस्य" सूर्य्यस्य "रोचना" रोचमाना दीप्तिः "अन्तः" शरीर-मध्ये मुख्य-प्राणात्मना "चरति" वर्त्तते। किङ्कुर्वती? "प्राणादपानती" मुख्य-प्राणस्य प्राणाद्या वृत्तयः, तत्र प्राणनं नाड़ीभिरूर्द्धं वायोर्निर्गमनम्, तथाविधात् प्राणात् प्राणनात् अनन्तरम् अपानती, अपानं तन्नाड़ीभिरवाङ्मुखं वायोर्नयनं तत् कुर्वती, [अप-पूर्वादनितेः लटः शतृ, अदादित्वाच्छपोलुक्, "उगितश्च (४, १, ६)"—इति ङीप्, "शतुरनुमः (६, १, १७३)"—इति नद्यनुदात्तत्वम्। यद्वा, 'अन्तर्' द्यावापृथिव्योर्मध्ये 'अस्य' सूर्य्यस्य 'रोचना' रोचमाना दीप्तिः 'चरति' गच्छति। रुच दीप्तौ (भ्वा० आ०), 'अनुदात्तेतश्च हलादेः (३, २, १४९)"—इति युच्। किङ्कुर्वती? 'प्राणात्' प्राणनात् उदयादनन्तरम् 'अपानती' सायं समये अस्तं गच्छतीति। ईदृश्या दीप्त्या युक्तः] अतएव "महिषः" महान् सूर्य्यः "दिवम्" अन्तरिक्षम् उदयास्तमययोर्मध्ये "व्यख्यन्" विचष्टे प्रकाशयति॥ महिषः—महेः "अविमह्योष्टिषच् (उ० १, ४५)"—इति

---

* छ० आ० प० ६, ४, ५ (२भा० ३, ४६) = ऋ० वे० ८, ८, ४७, २ = य० सं० ३, ७।

औणादिकः ष्टिषच् प्रत्ययः। व्यत्यन्—"चक्षिङः ख्याञ् ( २, ४, ५४ )", छान्दसे लुङि "अस्यतिवक्ति ( ३, १, ५२ )"—इत्यादिना च्ले रङादेशः ॥ २ ॥

अथ तृतीया।

२ ३उ ३ १ २ ३ १ २ ३ १ २
त्रिꣳशद्धाम विराजति वाक्पतङ्गाय धीयते।

२ ३ २ ३ २ ३ १ २
प्रति वस्तोरह द्युभिः ॥ ३* ॥ ११

"त्रिंशत्" "धाम" धामानि स्थानानि [ वचन-व्यत्ययः ( ३, १, ८५ ) ] "वस्तोः" वासरस्याहोरात्रस्यावयवभूतानि "अह" [ शब्दोऽवधारणे ] "द्युभिः" सूर्य्यस्य दीप्तिभिरेव "वि राजति" विशेषेण दीप्यन्ते [ व्यत्ययेनैकवचनम् ( ३, १, ८५ )। मुहूर्त्तान्यत्र धामान्युच्यन्ते ; पञ्चदश रात्रेः, पञ्चदशाह्नः ] । "पतङ्गाय" [ पतन् गच्छतीति पतङ्गः सूर्य्यस्तस्मै ] सूर्य्याय, स्तुतिरूपा "वाक्" "प्रति धीयते" पतिमुखं धीयते प्रतिमुखं स्तोतृभिर्विधीयते क्रियते [ यद्वा, 'वस्तोः' अहनि 'त्रिंशद्धामानि' घटिकाभिप्रायमेतत्, त्रिंशत् घटिकाः ; "अत्यन्त-संयोगे द्वितीया ( २, ३, ५ )"। एतावन्तं कालं 'द्युभिः' दीप्तिभिः असौ सूर्य्यो 'वि राजति' विशेषेण दीप्यते, तस्मिंश्च समये 'वाक्' त्रयीरूपा 'पतङ्गाय' 'प्रतिधीयते' प्रतिमुखं धीयते तं सूर्य्यं सेवत

---

* छ० आ० प० ३, ५, ६ ( २भा० ३४९ पृ० ) = ऋ० वे० ८, ८, ४७, ३ = य० वे० ३, ८।

इत्यर्थः। श्रूयते हि—"ऋग्भिः पूर्वाह्णे दिवि देव ईयते यजुर्वेदे तिष्ठति मध्ये अह्नः"—इत्यादि ॥ २ ॥ ११

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य एकादशस्याध्यायस्य

तृतीयः खण्डः* ॥ ३ ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः ॥ ११ ॥

॥ इति षष्ठस्य प्रथमोऽर्द्धप्रपाठकः ॥ ६ † ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-श्रीवीर-बुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणाचार्य्येण विरचिते माधवीये सामवेदार्थ-प्रकाशे उत्तराग्रन्थे एकादशोऽध्यायः ॥ ११ ॥

———000———

---

* 'समाप्तश्चायं द्वादशाहः सत्रात्मकोऽहीनात्मकश्च'—इति वि०

† 'षष्ठस्य प्रपाठकस्य प्रथमोऽध्यायः समाप्तः'—इति वि०।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्
निर्ममे तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ १२ ॥

## ॥ अथ द्वादशोऽध्याय आरभ्यते* ॥

तत्र

प्रथमखण्डे उपप्रयन्त इति चतुर्ऋचं प्रथमं सूक्तम्†—

तत्र प्रथमा ।

२ १ २ ३ १र २र ३ १ २
**उपप्रयन्तो अध्वरम्मन्त्रं वोचेमाग्नये ।**
३ २ ३ १ २ ३ २
**आरे अस्मे च शृण्वते ॥ १‡ ॥**

---

* 'इदानीं गवामयनं संवत्सरं सत्रमुच्यते। तत्रादौ ज्योतिष्टोमेऽतिरात्रः पुनः प्रायणीयमहरं तदुक्थ्यम्। पुनश्चत्वारोऽभिप्लवाः। पृष्ठः षडहः समाप्तः। स द्वितीयः तृतीयः स चतुर्थः स पञ्चमः त्रयोऽभिप्लवाः षडहाः पृष्ठः षडहस्त्रयश्च मासस्त्रयश्चत्वारो-ऽभिप्लवाः समाप्ताः। स द्वितीयः स तृतीयः स चतुर्थः त्रयोऽभिप्लवाः षडहः आयुश्च गौश्च द्वे अहनी द्वादशाहानि महाव्रतश्चातिरात्रस्य संवत्सरस्यैतद् ब्राह्मणम्। अत्राङ्गानां परि-णामं सषष्ठ्यानि त्रीणि शतानि। एकादशाष्टषष्ठाः पञ्चचत्वारिंशदभिप्लवाः अभिजित् तत्राहं आयज्ञौ आयुषौ द्वादशाहस्य दशाहानि अतिरात्रः। चतुर्विंशत्या सह षष्ठो-मासः पूर्वस्मिन् पक्षसि शतातिरात्राभ्यां प्रथम उत्तरास्मिन् गवामयने अतिरात्रमीरि-तम् अध्याय-परिसमाप्तेः ब्राह्मणेनोक्तानि आर्षच्छन्दोदैवतानि। इदानीं तेषां साम्नां स्तोत्रीयाः ते वक्तव्या इत्येवमारभ्यते—इति वि०।

† 'आग्नेयसाज्यम्'—इति वि० ।

‡ ऋ० वे० १, ५, २, १ = य० वे० ३, ११ ।

"अध्वरं" हिंसा-प्रत्यवाय-रहितम् अग्निष्टोमादि-यज्ञम् "उप प्रयन्तः" उपेत्य प्रकर्षेण यन्तो गच्छन्तः शास्त्रविच्छेदेन सम्यग-नुष्ठितवन्त इत्यर्थः । तादृशा वयम् "अग्नये" अङ्गनादि-गुण-युक्ताय देवाय "मन्त्र" मनन-साधनमेतत् सूक्तरूपं स्तोत्रं "वोचेम" वक्तारो भूयास्म इत्याशास्यते । कीदृशायाग्नये ? "अस्य अस्मे च शृण्वते" च-शब्दोऽप्यर्थे आरे-शब्दात् परो द्रष्टव्यः आरे च दूरेऽपि स्थितोऽस्माकं स्तुतीः शृण्वते अस्मासु प्रीत्यतिशयेन सर्वत्र विद्यमानोऽग्निः अस्मदीयमेव स्तोत्रं शृणोतीति भावः । [ वोचेम—ब्रुवो वचिः ( २, ४, ५३ ), लिङ्याशिष्यङ्, "वच उम् ( ७, ४, २० )"—इत्युमागमः । शृण्वते—"शतुरनुमः ( ६, १, १७३ )"—इति विभक्तेरुदात्तत्वम् ॥ १ ॥

अथ द्वितीया ।

१र २र २ १ २ ३ १ २ ३ १ २
यः स्नीहितीषु पूर्व्यः संजग्मानासु कृष्टिषु ।
१ २ ३ २ ३ १ २
अरक्षद्दाशुषे गयम् ॥ २* ॥

"पूर्व्यः" चिरन्तनः "यः" अग्निः "स्नीहितीषु" वधकारिणीषु "कृष्टिषु" शत्रुरूपासु प्रजासु "जग्मानासु" सुसङ्गतासु सतीषु "दाशुषे" हवींषि दत्तवते यजमानाय "गयं" धनम् "अरक्षत्" रक्षितवान्† । तस्मै मन्त्रं वोचेमेति पूर्वेण सम्बन्धः । [स्नीहितीषु—

* ऋ० वे० १, ५, २१, २ ।

† 'गयं प्राणम् यद्यपि सर्वासु मनुष्यजातिषु अन्तर्हृदयान्तःस्थितं ज्योतिः तथापि ये यजमानाः तेषां गयान् प्राणान् रक्षति'—इति वि० ।

ष्णिह स्नेहने चुरादिः; "स्नेहयति"—इति वध-कर्मसु (निघ० २, १९, १३) पठितम्; स्निह्यन्ते हिंस्यन्ते प्रजा आभिरिति स्नीहितयः करणे "तितुत्रेष्वग्रहादीनाम् (७, २, ९ वा०)"—इति वचनात् निगृहीतिर्निपतितिवदिड़ागमः व्यत्ययेनैकारस्य ईकारः, छान्दसो दीर्घश्च; नित्त्वादाद्युदात्तत्वम्। सञ्जग्मानास् —"समोगमि (१, ३, २९)"—इत्यात्मनेपदम्, लिटः कानच्, गमहनेत्यादिनोपधालोपः। अरचत्—"छन्दसि लुङ्लङ्लिटः (३, ४ ६)"—वर्त्तमाने लङ्॥ २॥

अथ तृतीया।

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २
सनोवेदोअमात्यमग्नीरक्षतुशन्तमः।

३ २उ ३ १ २
उतास्मान्पात्वꣳहसः॥ ३*॥

"सः" अग्निः "नः" अस्माकं "वेदः" धनम् "अमात्यम्"† अन्तिके भवं सहभूतं वा "रक्षतु" शत्रोः सकाशात् पालयतु। कीदृशः? "शन्तमः" सुखतमः "उत" अपिच "अस्मान्" वसिष्ठान् "अंहसः" पापात् "पातु" रक्षतु॥

"शन्तमः"—"विश्वतः"—इति पाठौ॥ ३॥

---

* ऋ० वे० ५, २, १८, ३।

† 'अमत प्राणः, प्राणलं हृदयावस्थितं ज्योतिः'—इति वि०।

अथ चतुर्थी ।

३ १ २   ३ २ ३ २३ १२३ १ २
उतब्रुवन्तुजन्तवउदग्निर्वृत्रहाजनि ।
३ १र २र
धनञ्जयोरणेरणे ॥ ४* ॥ १

"अग्निः" "उदजनि" अरण्योः सकाशात् उत्पन्नः "उत" अनन्तरं "जन्तवः" जाताः सर्वे ऋत्विजः ब्रुवन्तु तमग्निं स्तुवन्तु । कीदृशोऽग्निः? "वृत्रहा" वृत्राणामावरकाणां शत्रूणां हन्ता "रणेरणे" सर्वेषु सङ्ग्रामेषु "धनञ्जयः" शत्रु-धनानां जेता† ["संज्ञायां (३, २, ४६)"—इति खच्, "अरुर्द्विषदजन्तस्य (६, ३, ६७)"—इति मुम्, चित्स्वरेणान्तोदात्तः । रणेरणे—रणन्ति दुन्दुभयोऽस्मिन्निति रणः सङ्ग्रामः ["वशिरण्योरुपसङ्ख्यानम् (३, ३, ५८ वा०)"—इत्यप्, "नित्यवीप्सयोः (८, १, ४)"—इति द्विर्वचनम्, आम्रेडितानुदात्तत्वम् ॥ ४ ॥ १

अथाग्नेयुङ्क्ष्वाहीति तृचात्मकं द्वितीयं सूक्तम्‡,

तत्र प्रथमा ।

१ २ ३ १र   २र   ३ १ २
अग्नेयुङ्क्ष्वाहियेतवाश्वासोदेवसाधवः ।
२ ३ १ २ ३ १ २
अरंवहन्त्याशवः ॥ १¶ ॥

* ऋ० वे० १, ५, २१, ३ ।

† 'धनञ्जयः—अग्निधनानां जेता'—इति वि० ।

‡ 'अग्निष्टोम साम'—इति वि० ।

¶ छ० आ० १, १, ३, ५, (१ भा० १३३पृ०, =ऋ० वे० ४, ५, २९, ३ ।

हे "देव" द्योतमानाग्ने ! तान् अश्वान् "युङ्क्ष्व" आत्मीये रथे योजय। "ये" "तव" त्वदीयाः "साधवः" साधकाः सुशीला वा "अश्वासः" अश्वाः "आशवः" शीघ्रगामिनः सन्तः "अरम्" अलम् पर्य्याप्तं त्वदीयं रथं वहन्ति "हि" खलु। तानश्वान् रथे युङ्क्ष्वेत्यर्थः॥

"युङ्क्ष्व"-"युङ्क्ष्वा"—इति पाठौ, "आशवः"-"मन्यवः" —इति च॥ १॥

अथ द्वितीया।

१ २ ३ १ २ ३ १र २र ३ १ २
अच्छा नो याह्या वहाभि प्रयाꣳसि वीतये।
२ ३ १र २र
आ देवाꣳ सोमपीतये॥ २*॥

हे अग्ने ! "नः" अस्मान् "अच्छ" आभिमुख्येन "याहि" आगच्छ, तथा "प्रयांसि" हविर्लक्षणान्यन्नानि "अभि" लक्ष्य "देवान्" "आवह"। किमर्थम् ? "वीतये" तेषां हविर्भक्षणार्थं, तथा "सोमपीतये" सोमपानार्थञ्च॥ २॥

अथ तृतीया।

१ २ ३ १र २र ३ १ २
उदग्ने भारत द्युमदजस्रेण दविद्युतत्।
२ ३ १ २
शोचा वि भाह्यजर॥ ३†॥ २

* ऋ० वे० ४, ५, २९, ४।

† ऋ० वे० ४, ५, २९, ५।

हे "भारत" हविषां भर्त्तरग्ने ! * "उत् शोच" उन्नततरं दीप्यस्व। तदेव विवृणोति— हे "अजर" जरा-रहिताग्ने ! "दविद्युतत्" भृशं द्योतमानस्त्वं "द्युमत्" द्युमता दीप्तिमता सुपांसुलुगिति ( ७, १, ३९ ) तृतीया-लुक् "अजस्रेण" अविच्छेदेन "तेजसा" "वि भाहि" विशेषेण प्रकाशयस्व [ यद्वा, भाति रक्षणीति-वार्थः। त्वं प्रथममुद्दीप्यस्व पश्चादमोघेन तेजसा सर्वं जगत् प्रकाशयेति योजनीयम् ] ॥ ३ ॥ २

अथ प्रसुन्वानायेति तृचात्मकं तृतीयं सूक्तम्।†

तत्र प्रथमा।

१ २ ३ १र २र ३ २ ३ १ २ ३ १र २र
प्रसुन्वानायान्धसोमर्त्तोनवष्टतद्वचः।
२ ३ १ २ ३ १ २ ३ २ ३ १र २र
अपश्वानमराधसꣳहतामखन्नभृगवः ॥ १‡ ॥

"सुन्वानाय" सुन्वानस्याभिषूयमाणस्य "अन्धसः" अदनीयस्य सोमस्य "तत्" प्रसिद्धं "वचः" वचनं घोषं "मर्त्तः" मारकः कर्म-विघ्नकारी श्वा "न वष्ट" [वश कान्तौ (अदा० प०) —इति धातुः] न कामयतां न शृणोत्विति यावत्। तथा, हे स्तोतारः! "राधसं" साधक-धर्म-रहितं "श्वानम्" "अपहत"।

* 'भारत—भरतामनुपात्तैर्निर्मथिताग्ने'—इति वि०।

† इदानीमाभिप्लविकमुच्यते'—इति वि०।

‡ ऋ० आ० ६, २, १, ९ (२ भा० १६८ पृ०) = पुनरत्रैव पुरस्तात् १, २, २१, ३ (३ भा० २९० पृ०) = ऋ० वे० ७, ५, ३, २।

तत्र दृष्टान्तः—"मखं न" यथा पुरा अपराद्धं मखं एतन्नामानं "भृगवः" अपहृतवन्तः तथा अपहृतेत्यर्थः ॥

"सुन्वानाय"-"सुन्वानस्य"—इति पाठौ, "वष्ट"-"व्रत"—इति च ॥ १ ॥

अथ द्वितीया।

२ ३ १र २र ३ २उ ३ २ ३ २र
आजामिरत्केअव्यतभुजेनपुत्रओण्योः।
१ २ ३ १र २र ३ १र २र ३ १ २
सरञ्जारोनयोषणांवरोनयोनिमासदम् ॥ २* ॥

"जामिः" बन्धुभूतो देवानां † सोमः "अत्के" आच्छादके पवित्रे "आ अव्यत" आवृणोति सम्बन्धो भवति। तत्र दृष्टान्तः—"भुजे न" यथा "ओण्योः" रक्षकयोः मातापित्रोः भुजे "पुत्रः" आवृणोति, तद्वत्। ततः सोऽयं सोमो "योनिं" स्व-स्थानभूतं कलशम् "आसद" आसत्तु "सरत्" सरति। तत्र दृष्टान्तद्वयम्—"जारो न" यथा जारो "योषणा" असतीं स्त्रियं प्राप्तुं सरति, यथा वा "वरः" कन्यां प्राप्तुं गच्छति, तद्वत् ॥ २ ॥

अथ तृतीया।

२ ३ १ २ ३ १ २ ३ २उ ३ १ ३ १ २
सवीरोदक्षसाधनोवियस्तस्तम्भरोदसी।
१ २ ३ १ २ ३ १र २र ३ १ २
हरिःपवित्रेअव्यतवेधानयोनिमासदम् ॥ ३‡ ॥ ३

---

* ऋ० वे० ७, ५, ३, ४।

† जामिः—'सोमस्य भगिनी'—इति वि०।

‡ ऋ० वे० ७, ५, ३, ५।

"दृळ्हसाधनः" बल-साधनः "सः" सोमः* "वीरः" समर्थो भवति, "यः" सोमः "रोदसी" द्यावापृथिव्यौ "वि तस्तम्भ" स्व-तेजसा व्याप्तत्वात् आच्छादयदित्यर्थः। किञ्च "हरिः" हरित-वर्णः सोमः "वेधा न" यथा विधाता यजमानः स्व-गृहमासी-दति, तद्वत् "योनिं" स्व-स्थानं कलशम् "आसदम्" आसत्तु पवित्रे "अव्यत" आवृणोत् सम्बद्धो भवति ॥ ३ ॥ ३

॥ महागौरीवितम् ॥ प्रसु। न्वाना३। यअन्धसा:। मर्त्तोनवष्टतद्वचा२३ः। आपश्वाना३१२३म्। अराधसाम्। हातामखा३१२३म। नभोवा। गा५वो६हाइ(१) ॥ १७† ॥ [१]

॥ गौतमम् ॥ प्रसुन्वानायअन्धसाः। मर्त्तोनवो। ष्टतद्वचा२ः। अपा। औहो२३४वा। श्वानमराधसा

---

* 'सः—सोमः प्रजापतिः नृपो वा'—इति वि०।

† क्र० गा० १प्र० २अ० १७सा०।

१ १ १ १   ३ २   २र   ५   ३ २   २र
२३४५म् । हता । औहो२३४वा । मखा । औहो२३

५   ४   ३
४वा । नमूपूगवाः । होइ । डा(१) ॥ १८* ॥ [२]

५   २र २   ४ ५
॥ महागौरीवितम् ॥ प्रतु । न्वाना२ । यन्नन्धसाः ।

१ र   १ र २   ४
मर्त्तोनिवष्ट तद्वचा२३ः । आदस्वामा२१२३म् । अरापूस

१ र २   ४ ५   ४ ५
साम् । हातामस्वा३१२३म् । नभोवा । गापूवोइवा

५र र   ३ २   ४र ५   १ र
यि ॥(१) आजा । मिरा२ । त्के यथ्यता । भुजेमपुन

२   १ र २   ४   १ र
आलियो२३ः । सारञ्जारा३१२३ः । नयोपूषणाम् । वारो

२   ४ ५   ४ ५   र
नयो३१२३ । निमोवा । सापूदोइहायि ॥(२) सवी ।

२र २   ४ र ५   १   र
रादा२ । हुतायनाः । वियस्तस्तश्चरोदसा २ ३ यि ।

१   २   ४र   १ र २
हारिःपवा३१२३यि । च आपूव्यता । वायिधानयो३१२३ ।

४ ५   ४   ५
निमोवा । सापूदोइहायि(३) ॥ १७† ॥ [३]

---

* ऊ० गा० १प्र० २श्च० १८सा० ।

† ऊ० गा० ६प्र० २श्च० १७सा० ।

॥ श्रोकोनिधनम् ॥ आजा३मिरत्के अव्यता। भुजा
यि। नपुत्त्रओ२णायो ३ः। सरज्जारोनयो२षाणा२
म्। वरोना२३४यो। निमा। सा२दा२३४औहोवा।
ओ२३४काः(२) ॥ १८* ॥ [४]

॥ औद्दलम् ॥ श्वोरोहा। त्वासा२धनाः। वियस्त
स्ता३। भारोदा२३४सायि। हरिःपवायि। नेआ२
व्यता। वेधाना२३४यो३। ना२३यिमा३। सा३४५हो
६हायि(३) ॥ १९† ॥ [५]

॥ साध्रम् ॥ प्रस्तुन्वा३नायअन्धसाः। मर्त्तोनवा२।
ष्टता३४५त्। वा२३४चाः। अपश्वानमराधसा२३४५म्।
हाताओ२३४वा। माखाओ२३४वा। नभृगवाः ॥(१)
आजामा३यिरत्के अव्यता। भुजायिनपू२त्। नओ३

* ऊ० गा० ६प्र० २ख० १८सा०।

† ऊ० गा० ६प्र० २ख० १९सा०।

३ ५ १ २र १र र ५ ११११ १
४५। श्रो२३४यो:। सरञ्जारोनयोषणा२३४५म्। वा
२ ३ ५ १ २ ३ ५ ४
राश्रो२३४वा। नायाश्रो२३४वा। निमा५सदाम्॥(२)
५ र र ४ ५ ४र ५ २ १ २ १ ५ २ ३
सवीरो३दक्षसाधना:। वियास्तस्तार। भरो३४५। दा
५ १ २ १ र २ १ ११११ १ २ ३
२३४सी। हरि:पवित्रेअव्यना२३४५। वायिधाश्रो२३४
५ १ २ ३ ५ ४ ४
वा। नायाश्रो २ ३ ४ वा। निमा५सदाम्। हो५ई।
डा(३)॥ २०*॥ [६]

५र र ३ २ ३र ४ ५ २ १ २१
॥ गौतमम्॥ श्राजामिरत्के श्रव्यता। भुजायिनपूत्।
२ र १ ३ २ ३र ५ २र १र र
क्षश्रोणियोर:। सरा। श्रौहो२३४वा। जारोनयोष
३ १११११ ३ २ ३र ५ ३ २ ३र
णा२३४५म्। वरा। श्रौहो२३४वा। नाया। श्रौहो
५ ४ ४
२३४वा। निमा५सदाम्। हो५ई। डा(२)॥ २१†॥ [७]

३ २ २ ४ ५ २ ४
॥ श्यावाश्वम्॥ प्रसू३१। न्वा३ना। यश्च। धा३स:।
५ १ र २ १ १र
एहिया। मा। तोनवह्या। तत्। वचा२:। एहिया२।

---

* ऊ० गा० ६प्र० २ख० २०सा०।

† ऊ० गा० ६प्र० १ख० १सा०

१र २ ४ ५ १र १र
अपश्वानामा३रा३। धा२३४साम्। ऐहा२यि। एह्नि

२ १ २ ४ २ ४
या२। हनामखान्ना३भू३। गा३५वो६हायि ॥ २* ॥ [८]

१ २ र १ १ २ १र
॥ औद्दलम् ॥ प्रसुन्वाना। या३आ२न्धसाः। मर्तो

२ १ २ २ ५ १ २ र १
नवा३। ष्टानद्दा२३४चाः। अपश्वानाम्। आरा२ध

१ २ १र २ १ ४ २
साम्। हनामा२३खा३म्। ना२३भू३। गा३४५वो६

५ १र १र १ १ २ १र २
हायि ॥ १) आजामिरा। त्केआ२व्यता। भुजेनपू३

१ २ ३ ५ १ २ र १ १
त्। त्वाआणा२३४योः। सरज्जाराः। नायो२षणाम्।

२ १र २ १ ४ २ ५
वरोना२३यो३। ना२३यिमा३। सा३४५दो६हायि ॥(२)

१ २र र १ १ २ १ २ १ २ ३
सवोरोद्दा। त्वासा२धनाः। विश्वस्तस्ता३। भारोद्दा

५ १ ७ १ १ २र१र
२३४सायि। हरिःपवायि। वेआ२व्याना। वेधाना२३

२ १ ४ २ ५
यो३। ना२३यिमा३। सा३४५दो६हायि(३) ॥२† ॥ [९]

---

* ऊ० गा० ११प्र० २अ० २सा०।

† ऊ० गा० ११प्र० २अ० ३सा०।

५ १र २र ३ ४ ५ २ १ २ १
॥ गौतमम् ॥ प्रत्नुन्वानायअन्धसाः । मर्त्तौनवा ।

२ १ ३ २ ३र ५ १र २र १र
ष्टतद्वचार्ः । अपा । औहो२३४वा । श्वानमराधसा

१ १ १ १ ३ २ ३र ५ ३ २ ३र
२३४५म् । हता । औहो२३४वा । मखा । औहो२३

५ ४ ५र र १ २ १र ४ ५ २ १
४वा । नभृ५गवाः ॥(१) आजामिरत्केअव्यता । भुजा

२ १ २ र १ ३ २ ३र ५
यिनपूत् । त्वओणियो र्ः । सरा । औहो २ ३ ४ वा ।

२र १र र ३ १ १ १ १ ३ २ ३र ५ ३ २
जारोनयोषणा२३४५म् । वरा । औहो२३४वा । नया ।

३र ५ ४ ५ र २र २ २ ४र ५
औहो२३४वा । निमा५सदाम् ॥(२) सवीरोदक्षसाध

२ १ २ १ १ र १ ३ २ ३र
नाः । वियास्तस्ता । भरोदसारीय । हरा । औहो

५ २ १ र २ ३ १ १ १ १ ३र २ ३र ५
२३४वा । पविन्नेअव्यता२३४५ । वधा । औहो२३४वा ।

३ २ ३र ५ ४ ४
नया । औहो २ ३ ४ वा । निमा५सदाम् । ह्यो५ई ।

डा(३) ॥ १३* ॥ [१०]

२ १ ४र ५ २ ३ ५
॥ आकूपारम् ॥ प्रत्नुन्वा२३नाय । अन्धा२३४साः ।

---

* ऊ० गा० ११प्र० ४ख० १६सा० ।

१ १ २ १ २ १ २ १
मर्त्तो २नवा। ष्टतद्वचाः। अपश्वाना २म्। अराध-
२ र १ १ ४ २ ४
साम्। हतामाखा२३म्। ना२३भू३। गा३४५वो६हा
२र १र ४ ५र २ २ ५ १
यि॥(१) आजामा२३यिरत्के। अव्या२३४ता। भुजा
१ २ र १ २ १ २ १
रयिनपूत्। त्रओणियोः। सरज्जारो२। नयोषणाम्।
१ र १ १ ४ २ ५
वरोनायो२३। ना२३यिमा३। सा३४५दो६हायि॥(२)
२ १र ४ ५ २र २ ५ १ १ २ र
सवीरो२३दक्ष। साधा२३४नाः। विया२स्तस्ता। भरो
१ २ १ र १ २र र १
दसायि। हरिःपावा२यि। त्रेअव्यता। वेधानायो
१ ४ २ ५
२३। ना२३यिमा३। सा३४५दो६हायि(३)॥ १६*॥[११]

३ ५ र र २ २ ४
॥ दैवोदासोत्तरम्॥ प्रा४स्तुन्वाना। हो। यअन्ध
५ ५ २ र र र १ २ ४ ५र
सा६ए। मर्त्तानवष्टतद्वचोअपश्वानमराधा३साम्। हता
३ १ ५र र ३ ५ ३
मखा३४। औहोवा। ना२३४भू। गवो२३४५ई।
डा(३)॥ १४†॥ [१२]

---

* ऊ० गा० १५प्र० १ख० १६सा०।

† ऊ० गा० १६प्र० १ख० १४सा०।

१ २र र १ २ १ र
॥ भ्रुद्वाभ्रुद्वीयम्॥ प्रसुन्वानायअन्धसाः। मत्तीँ

२१ २ १ र २ २१र २ १र
नवष्टतद्वार२३चाः। अपश्वानमराधार२३साम्। हतामा

२ १ २ २ ५र र २ १ १ १ १
र२३स्वा३म्। नार। भृगा३४औहोवा। वा२३४५ः॥(१)

१र २र १ २र १ २ १ र २ १र २ १
आजामिरत्केअव्यता। भुजेनपुत्रओणार२३योः। सर

र र २ १र २ १र २ २
ज्जारोनयोषार२३णाम्। वरोनार२३योर। नार३यो

१ ३र २ ५र र ३ १ १ १ १
३। नार२यिम्। आसा३४औहोवा। दार२३४५म्॥(२)

१ २र १र २ १र २ १ २ १र २ १
सवीरोदक्षसाधनाः। वियस्तम्भरोदार२३सायि। हरिः

२र १ २ र १र २ १ ३र
पवित्रेअव्यार२३ता। वेधानार३योर। नार२यिम्। आ

२ ५र र ३ १ १ १ १
सा३४औहोवा। दार२३४५म्(३)॥ १७*॥ [१३]

३ ४ र र ३ १ ५ २ ३
॥ वैश्वामित्रम्॥ प्रसुन्वानायअन्धसः। मर्त्तीनार२३४

५ २ १ २ २ १ २ र १ २ १
वा। ष्टा३ताद्वा३चाः। आपश्वानार२३ए३हा३यि। अरा

३ ५ १ २र ३ ५ ४
२धार ३ ४साम्। हतामाखौवाओ२ ३ ४वा। नभृ५ग

---

* ऊ० गा० १८प्र० १अ० १७सा०।

३र ४र ३र ४ ५ २ ३ ५
वाः ॥(१) आजामिरत्के अव्यत। भुजायिना२ ३ ४पू।

२ १ २ २ १२ र १ २ १ ३
त्ना३ओणा३यौः। सार ज्जारा२३हा३। नयोरषा२ ३ ४

५ १ २र ३ ५ ४
णाम्। वरो। नायौवाओ२३४वा। निमा५सदाम्॥(२)

३४ र ३र ४ ५ २ ३ ५ २ १२ २
सवौरोदक्षसाधनः। वियास्ता२३४स्ता। भा३रोदा३सा

१ २ १ २ १ ३ ५
यि। हारिःपवा२ ३यिहा ३ यि। त्ने आरव्या२ ३ ४ता।

१ २र ३ ५ ४ ४
वेधाः। नायौवाओ२३४वा। निमा५सदाम्। हो५

ई। डा(३)॥१८*॥१४

२ र र २ १ र
॥ स्वारकौत्सम्॥ प्रत्नुन्वानायाऽ३अन्धसाः। मर्त्तान

२ २ २ र २ १२ २
वष्टना१द्वा३चाः। अपश्वाना३म्। आ३राधा३साम्।

१ र ३ ५ ३ २ ४
आऽ२यि। हुतामखो२३४हायि। नभू३गा५वा६५६॥(१)

२र र २ १ र २ २ २
आजामिरत्के३अव्यना। भुजेनपुत्रओ१णा३यौः। सर

र २ १२ २ १ र ३
ज्जारो३। ना३योषा३णाम्। आऽ२यि। वरो नयो२३

* ऊ० गा० १८प्र० १ख० १८सा०।

५ ३ २ ४ १ र र २र
४च्चायि। निमा३सा५दा६५६ ॥(२) सवोरोदत्वा३साध

१ २ २ २
नाः। वियस्तस्तम्भरो१दा३सायि। हरिः। पवा३यि।

२ १ २ २ १ रर ३ ५ ३
त्रे३आव्या३ता। आऽ२यि। वेधानयोर३४च्चायि। नि

२ ४
मा३सा५दा६५ईम्(३) ॥ २०* ॥ १५

१ १र र १ २ १ र २
॥ उत्तमयम् ॥ प्रसुन्वानायअन्धसाः। मर्त्तोनवष्ट

१ २ १ र ११र २ १ २
तद्वार३चाः। अपश्वानमराधार३साम्। हतामखा२

१ १ ३ ५र र ३ ५र
म्। नाऽ२भूः। गा२। या२३४औहोवा। वा२३४औ

र ३११११ १र १र १ २र१२१ र
होवा। वा२३४५ः ॥(१) आजामिरत्केअव्यता। भुजे

२ १र २ १ र र२१र ०२ १२
नपुत्रओणार३योः। सरज्जारोनयोषार३णाम्। वरोन

१ १ ३ ५र र २
यो२। नाऽ२यिमा। सा२। या२३४औहोवा। दा

११११ १२र१र २ १र २ १ २ १र
२३४५म् ॥(२) सवीरोदत्तसाधनाः। वियस्तस्तम्भरो

२ १ २र१ २ र१३
दा२३सायि। हरिःपवित्रेअव्या२३ता। वेधानयो२।

* ऊ० गा० १६प्र० १ख० २०गा०।

१ १ २ ५र २ २ १ १
ना२ थिमा। मा२र्या २ ३४ औहोवा। हा२३
१ १
४ ५म्(३) ॥ २१* ॥ [१६]

१र १र १र १ २१ २ १र
॥ आवयन्तरम् ॥ प्रातुव्वानायअन्धसाः। मर्तानवा।
१ १ २ २ र र २ ५र २ १र
ष्टा२ताहा२सा:। अपश्वानमराधसा२३४औहो। हता
५ २ १ २ १ २ २
मा२३४खाम्। नभृ३आउवा२३। ए३। गवन्रा ॥(१)
२र र १ २ र १ २ १ २ १र २ १ २ २
आजामिरत्केअव्यता। भुजेनपूत्। मा३औणा२योः।
र र र ३ ५र २ १र ५ २
सरज्जारोनयोषणा२३३औहो। वरोना२३४यो। निमा२
१ २ २ २ २र र १र २ १र १ १
१उवा२३। ए३। सदमा ॥(२) सावीरोदक्षसाधनाः।
२ १ २ २ २ २ र ३
वियस्तस्ता। भा३रोदा२साथि। हरिःपवित्रेअव्यता
५र २र १र ५ २ २
२३४औहो। वेधाना२३४यो। निमा२१उवा२३। ए३।
२ २ २
सदमा(३) ॥ ७† ॥ [१७] ३

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य द्वादशस्याध्यायस्य
प्रथमः खण्डः ॥ १ ॥

---

* ऊ० गा० १८प्र० २ख० २१सा०।
† ऊ० गा० २२प्र० २ख० ७सा०।

अथ द्वितीय-खण्डे—

अभ्रातृव्यइति प्रगाथात्मकं प्रथमं सूक्तम्.

तत्र प्रथमा।

३ २ ३ १ २र ३ २ २ ३ १ २
अभ्रातृव्योअनात्वमनापिरिन्द्रजनुषासनादसि।
३ १ २ ३ १ २
युधेदापित्वमिच्छसे॥ १* ॥

हे "इन्द्र!" त्वं "जनुषा" जन्मनैव "अभ्रातृव्यः" ["व्यन् सपत्ने (४, १, १४५)"—इति व्यन् प्रत्ययः] सपत्न-रहित इत्यर्थः, "अना" अनेतृकः [ "ऋतश्छन्दसि ( ५, ४, १५८ )"-इति कपः प्रतिषेधः ] अनियन्तृक इत्यर्थः, "अनापिः" बन्धु-वर्ज्जितश्च, "सनादसि" चिरादेव भ्रातृव्यादि-वर्जितोऽसि, यत्र त्वया "आपित्व" बान्धवम् "इच्छसे" इच्छसि, तत्र "युधेत्" युद्धेनैव युद्धं कुर्वन्नेव स्तोतृणां सखा भवसि॥ १॥

अथ द्वितीया।

१ २ ३ १ २ ३ १ २ ३ १ २ २ २र
नकीरवतꣳसख्यायविन्दसेपीयन्तितेसुराश्वः।
३ २ ३ १ २ ३ १ २र ३ २ ३ १ २
यदाकृणोषिनदनुꣳसमूहस्यादीत्पितेवहूयसे॥ २† ॥ ४

* ऋ० ग्रा० ५, १, २, १ (१भा० ८२१पृ०)=ऋ० वे० ६, २, २, ४।

† ऋ० वे० ६, २, ३, ५।

हे इन्द्र ! "रेवतं" केवल-धनवन्तं यागादि-रहित मयष्टार माढ्य मन्यं मानवं "सख्याय" सखिभावाय "न किः विन्दसे" न लभसे नाश्रयसीत्यर्थः । अयष्टारो जनाः किं सन्तीत्यतआह—"सुराश्वः" [ टु ओ श्वि गति-वृद्ध्योः ; सुरया वृद्धाः तद्वत् ] प्रमत्त-नास्तिकाः । "ते" त्वां "पीयन्ति" [ पीयति हिंसा-कर्मा ] हिंसन्ति तन्नाश्रयतीत्यर्थः । "यदा" त्वं "नदनुं" [ नद अव्यक्ते शब्दे ( भ्वा० प० )] यं स्तोतारं "कृणोषि" मदीयोऽयमिति यदा भावयसि, तदानीं संवहसि धनादिकं तस्मै वहसि । "आदित्" अनन्तरमेव तेन लब्ध-धनेन स्तोत्रा "पिता इव" पालयिता जनक इव "हूयसे" स्तुतिभिराहूयसे स्तूयस इत्यर्थः ॥ २ ॥ ४

॥ उक्ष्यामहीयवम् ॥ अभ्रातृ३व्योअनातुवाम्। अ नापाश्यिरा२यि। इजनुषासना२३दसायि। यूधेदापा यि। त्वमा२३यिच्छसाउ। वा३ ॥(१) युधेदा३पित्वमि च्छसायि। नकायिरा१यिवा२। नऽसखियायवा२३यि न्दसायि। पायियन्तितायि। सुरा २ ३ श्रुवाउ। वा ३ ॥(२) पीयन्ता३यितेसुराश्रुवाः। यदाकाश्णो२। पि

२ १ २ १ २

तदनु९समू२३हसायि । आदित्यितायि । वह्व२३यसा

१र १११

उ । वा३ । स्तौषे३४५(३) ॥ १०* ॥ ४

आत्वासहस्रमिति त्र्यचात्मकं द्वितीयं सूक्तम्,†

तत्र प्रथमा ।

१ २ ३ १ २ ३ २ ३ २ ३ १ ३र ३ १ २

आत्वासहस्रमाशतंयुक्तारथेहिरण्यये ।

२ ३ १ २ १ २ ३ १ २ ३ १ २

ब्रह्मयुजोहरयइन्द्रकेशिनोवहन्तुसोमपीतये ॥ १‡ ॥

हे "इन्द्र!" "त्वा" त्वां "सहस्र" सहस्र-सङ्ख्याका "हरयः" त्वदीया अश्वाः "आ वहन्तु" आनयन्त्वस्मद्यज्ञं, तथा "शतं" शत-सङ्ख्याकाश्च भवदीयाश्वाः त्वामावहन्तु [ यद्यपि द्वावेवास्य हरी तथापि तद्विभूतयोऽन्येऽपि बहवोऽश्वाः सन्ति । ननु युगपदनेकैरश्वैः कथं वाहयितुं शक्यत इत्यत आह— युक्ता इति ], "हिरण्यये" स्वर्ण-विकारे [ हिरण्य-शब्दाद् विकारार्थे विहितस्य मयटः "ऋत्व्यवास्त्व्य (६, ४, १७५)"— इत्यादौ म-लोपो निपात्यते ] तादृशे "रथे" "युक्ताः" सम्बद्धाः [ बहूनामश्वानां शीघ्र-गमनाय रथे नियुक्तत्वाद् युगपदेव सर्वैरश्वैर्गन्तुं शक्यत इति भावः ]। कीदृशा हरयः ? "ब्रह्म-

* ऊ० गा० ७प्र० १ख० १०गा०

† 'अभीवर्त' स्तोत्रीयम्'—इति वि० ।

‡ ऋ० चा० २, २, १, २ ( १भा० ५०५पृ० ) = ऋ० वे० ५, ७, १४, ४ ।

युजः" ब्रह्मणा परिवृढेनेन्द्रेण युक्ताः [ यद्वा, ब्रह्मणास्मदीयेन स्तोत्रेण अस्माभिर्दत्तेन हविषा वा युक्ताः ] "केशिनः" केशाः सटाः तैर्युक्ताः। किमर्थम् इन्द्रस्य वहनम्? तत्राह—"सोमपीतये" सोमस्य पानाय यथास्मदीयं सोमं पिबेत्, तथा वहन्त्वित्यर्थः ॥ १ ॥

अथ द्वितीया।

२ ३ १ २ ३ २ २ १ २ ३ १ २
आत्वारथेहिरण्ययेहरीमयूरशेप्या।

३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
शितिपृष्ठावहताम्मध्वोअन्धसोविवक्षणस्यपीतये ॥ २* ॥

[ पूर्वं हयौ विभूतिरूपा अश्वाः इन्द्र मावहन्त्विति प्रार्थितम्, अधुना तावेवेन्द्र मावहतामिति प्रार्थ्यते—] "हिरण्यये" हिरण्मये "रथे" युक्तौ "मयूरशेप्या" मयूरवर्णः शेपो ययोस्तौ [ सुपां सुलुगिति ( ७,१,३९ ) विभक्तेर्डादेशः ] "शितिपृष्ठा" श्वेतपृष्ठौ† एवम्भूतौ "हरी" अश्वौ हे इन्द्र ! "त्वा" त्वाम् "आ वहताम्"। किमर्थम्? "मध्वः" मधुर-रसस्य "विवक्षणस्य" वक्तुमिष्टस्य स्तुत्यस्य‡ यद्वा वोढव्यस्य प्राप्तव्यस्य "अन्धसः" अन्नस्य सोमरूपस्य "पीतये" पानार्थम् ॥ २ ॥

---

* ऋ० वे० ५, ७, १४, ५।

† 'शितिपृष्ठौ—नीलपृष्ठौ'—इति वि०।

‡ 'अतिशयेन विवक्षितभूतस्य'—इति वि०।

अथ तृतीया।

२२ २ १ २ ३१२ ३१२
पिबात्वा३स्यगिर्वणःसुतस्यपूर्वपाइव।
१२ ३ १२३१ २ ३२ ३१२
परिष्कृतस्यरसिनइयमासुतिश्चारुर्मदायपत्यते॥ ३* ॥ ५

हे "गिर्वणः" गीर्भिर्वननीयः स्तुतिभिः सम्भजनीयेन्द्र! "सुतस्य" अभिषुतस्यास्य सोमस्य [क्रियाग्रहणं कर्त्तव्यमिति कर्मणः सम्प्रदानत्वाच्चतुर्थ्यर्थे षष्ठी (२,३,६२)] इम मभिषुतं सोमं "नु" क्षिप्रं "पिब"। तत्र दृष्टान्तः—"पूर्वपाइव"† [पूर्वः पूर्वेभ्यो देवेभ्यः प्रथमभावी सन् पिबतीति पूर्वपा वायुः, सह्यैन्द्रवायवे मुख्ये ग्रहे सर्वेभ्यो देवेभ्यः पूर्वं पिबति "यस्य देव दधिषे पूर्वपेयम्"—इति निगमान्तरम्; तादृशः] वायुरिव त्वमपि सर्वेभ्यो देवेभ्यः पूर्वं पिबेत्यर्थः। कीदृशस्य सोमस्य? "परिष्कृतस्य" अभिषवादिभिः संस्कृतस्य ["सम्पर्युपेभ्यः (६,१, १३८)"—इति करोतेर्भूषणे सुट्, "परिनिविभ्यः (८,३,७०)" —इति सुटः षत्वम्], "रसिनः" रसवतः। अपिच "इयमासुतिः"‡ अयमासवो मदकरः "चारुः" शोभनः सोमरसः "मदाय" हर्षाय हर्ष-जननाय "पत्यते" सम्पद्यते [पत्लृ गतौ (भ्वा० प०), यद्वा पत्यतिरैश्वर्य्य-कर्मा। मदाय—मदस्य पत्यते ईष्टे मदोत्पादने शक्त इत्यर्थः]॥ ३॥ ५

---

* ऋ० वे० ५, ७, १५, १।

† 'पूर्वपातारो ये ते यथा पिबन्ति तद्वत् पिबक'—इति वि०।

‡ 'आसुतिरुत्पत्तिरित्यर्थः'—इति वि०।

५र ४ १ ४ ५र ४ ५ १ र
॥ अभीवर्त्तम् ॥ आत्वा३सा२हस्रमाग्रतोवा । यूक्ता
२ र १ २ १ २ ३ ४
रथे । हिराण्या१या२यि । ब्राह्मयुजौ३१२३४ । हरय
५ २ १ २ १ २ २ २
इ । न्द्रकायिश्मा१यिना२ः । वहान्तु१सोर२ । मपा३यि ।
१ १ १ १ १ ५र ४ २ ४ ५ ४ ५ १ र
ता२३४५यि ॥(१) आत्वा३रा३थायिहिरण्ययोवा । हारी
२ र १ २ २ ३ ४र
मयू । रशायिपा१या२ । यितिपृष्ठा३१२३४ । वहता
५ २र १ १ १ १ ३ १ १
म्मध्वोऽन्धा१सा२ः । विवाक्षा१णा२ । स्यपा३यि । ता
३ १ १ १ १ ५ ४ ३ ४ ५ ४ ५
२३४५ । या२३४५यि ॥(२) पिबा३तू३वस्यगिर्वणोवा ।
१ २र १ १ २ २
स्तुतस्यपू । र्वपाऽऽ१यिवा२ । पारिष्कृता३१२३४ । स्य
४ ५ २ १ १ र १ २ ३ २
रसिनद्र । यमाहु१ता२यिः । चारुम्मा१दा२ । यपा३ ।
१ ३ १ १ १ १
त्या२३४५ । ता२३४५यि(३) ॥ १५* ॥ १
२र र १ २
॥ भारद्वाजम् ॥ आत्वासहा । स्रमाग्ना १ ता२म् ।
१ र १ र र १ २ १ १ १
यूक्तारथेहिरण्यये । ब्रह्मायू१जा२ः । हारयइ । न्द्रका

---

* ऊ० गा० ७प्र० १ख० १५सा० ।

२ १ २ १ ३ ५र र
यिश्रा१यिना २ः । वहान्तू१सो२३ । मा२पा२३४औहो
३ ५ २र र १ २
वा । ता२३४य ॥(१) आत्वा२थायि । हिरण्या१या २
१ र२र र र १ २ १ १र
यि । हारीमयूरशेप्या । शितायिपा१र्ष्ठा २ । वाहता
र १ २ १ २ १ २
म्म । ध्वोआन्धा१सा २ः । विवाचा१णा२३ । स्था२पा२
५र र ३ ५ २ र १ २
३४औहोवा । ता२३४ये ॥(२) पिबातुवा । स्यगायिर्वी
१ २ र र १ २ १
१णा २ः । वृतस्यपूर्वपाइव । परायिष्क्रा१त्तां २ । स्था२
२ १ २ १र २ १ २
सिनइ । यमाद्दृ१ता २यिः । चारुम्मा१दा२३ । या२पा
५र र ३ ५
२३४औहोवा । त्यो२३४ते(३) ॥ १२* ॥ २

२र १ २ १ २
॥ अभिनिधनं काण्वम् ॥ औहौहोहायि । आयाही ।
१ २ ३ ५ २ ३ ५ २ २ ५
आत्वा। सा२३४हा। स्रामाभा२३४ताम्। यूक्तारा२३४थायि।
२र १ २र १ २ ५ २ ३
हीरण्ययायि । ऐहोयि । आ२३४यिही । ब्रा३ह्मायू२३
५ २ ३ ५ १र१र २र १ ३
४जो । हारायार२३४ई । द्राकेशिनाः । ऐहोयि । आ

* ऊ० गा० १८प्र० २अ० १२सा० ।

२३४यिहो। वा इन्द्र२३४सो। मपा३यितापुयाइ५इ यि॥(१)

औहोहोहायि। आयिहो। आत्वा। रा२३४थायि।

हायिरण्या२३४यायि। हारीमा२३४यू। राशेपिया।

ऐहोयि। आ२३४यिही। प्रायितायिपा२३४र्ष्ठो। वा

हाता२३४म्मा। ध्वोअन्धसाः। ऐहोयि। आ२३४यि

हो। वायिवह्ना२३४ता। स्वपा३यितापुयाइ५इयि॥(२)

औहोहोहायि। आयिहो। पायिबा। तू२३४बा।

स्यागिर्वा२३४णाः। सूतस्या२३४पू। वीमाद्भवा। ऐहो

यि। आ२३४यिहो। पारिष्कार२३४त्तो। स्यारासो२३

४नाः। इयमात्तुनायि। ऐहोयि। आ२३४यिहो। चा

रुम्मा२३४दा। यपा३त्यापुता इ ५ इ यि। आ२३४

भो(३)॥ २ *॥ [३] ५

---

* ऋ० गा० २३प्र० ३ष्व० ३सा०।

अथ आसोतेति प्रगाथात्मकं तृतीयं सूक्तम्,

तत्र प्रथमा ।

१ २ ३ १ २ ३ २ ३ १र १र ३ १ २ ३ १ २

आसोतापरिषिञ्चताश्वन्नस्तोममप्तुरꣳरजस्तुरम् ।

३ १ २ ३ १ २

वनप्रक्षमुदप्रुतम् ॥ १ * ॥

हे ऋत्विज ! "आसोत" सोमम् अभिषुणुत [ षुञ् अभिषवे (स्वा० उ० ), लोटि छान्दसो ( २, ४, ७२ ) विकरणस्य लुक्, "तप्तनप्तनथनाश्च ( ७,१,४५ )"—इति तस्य तबादेशः] । किञ्च, "परिषिञ्चत" परितस्तं वसतीवर्यादिभिः सिञ्चत । कीदृशम् ? "अश्वं न" अश्वमिव वेगिनं "स्तोमं" स्तोतव्यम्, "अप्तुरम्" अन्तरिक्षस्थितानामुदकानां प्रेरकम् "रजस्तुरं" तेजसां प्रेरकम्, "वनप्रक्षम्" उदकवत् क्षरणशीलम्, "उदप्रुतम्" उदके गच्छन्तं प्लवमानं सोममभिषुणुत अभिषिञ्चत च ॥

"वनप्रक्षं"-"वनक्रक्षम्"—इति पाठौ ॥ १ ॥

अथ द्वितीया ।

३ १ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २

सहस्रधारंवृषभम्पयोदुहम्प्रियन्देवायजन्मने ।

३ २ ३ २ ३ १ २ ३ १र २र ३ २ ३ २ ३ २

ऋतेनयऋतजातोविवावृधेराजादेवऋतम्बृहत् ॥२†॥ ६

---

* ऋ० स्वा० ६, २, ४, २ ( २भा० २२८५० ) = ऋ० वे० ७, ५, १८, १ ।

† ऋ० वे० ७, ५, १८, ३ ।

१र र १ ७ १ ५
भा२। पायोऽहम् । प्रायन्दायिवा२३। या२३जा३।
२ ५ २ ४ ५र २ ३ ४ ५ ५
न्मा२३४५नोईहायि ॥(२) प्रियन्देवा। हो। यजन्मनाइए।
१र २ १ ७ १ र २र १र २
आर्त्तेनयः। आर्त्तजाता२। वायिवावृधे। राजादा
१ ५ २
२यिवा२३ः। आ२३तो२म्। हु३४५होई
५
हायि(३) ॥ १७ * ॥ [२]

२र १र २ ४ ५ २ ३ ५ २
॥ सफम् ॥ आसोता३परि। पिञ्चा२३४ता। अ
१ २ १ १ २ ४ २ ५
श्वन्नस्तोमा२म्। अप्तुरा॒रा२जा३। स्तू३२ ३ ४राम्।
२ २ ४ २ ५ २ १ २
वना। प्रच्चामू२दा३। मं३४५नोइहायि ॥(१) वनप्रा३
४ ५ २ ३ ५ २ १ २ १ १ २
चमु। दप्र२३ताम्। सहस्रधारा२म्। वृषभाया३
४ २ ५ २ १ र २ ३ २
यो३। दू३२३४हाम्। प्रियाम्। देवाया३जा३। न्मा
५ २ १ २ ४ र ५ २ ३ ५
३४५नोइहायि ॥(२) प्रियन्दे३वाय। जन्मा२३४नायि।
२ १र २ १ १ २ ४ २ ५
ऋतेनयाआ२। तजातो३वा३यि। वा३ २ ३ ४ह्वायि।

---

* ऊ० गा० ७ प्र० १ ख० १७ सा० ।

२ १ १ १ १र २ ४ २ ५
ऋतेनयाम्ना २। तजातोवा३यिवा३। वा३२३४र्द्धीयि।

२ १र २ १ १ १ ४ २ ५
ऋतेनयाम्ना २। तजातो३वा३। यि। वा३२३४र्द्धीयि।

२ र १ र २ ४ २ ५
राजा। देवाम्ना ३ त्तां ३ म्। बृ३ ४ ५ हो ईहायि(३)

॥ १३* ॥ [३] ६

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य द्वादशस्याध्यायस्य
द्वितीयः खण्डः ॥ २ ॥

---

अथ तृतीय-खण्डे —

अग्निर्वृत्राणीति तृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा।

३ २ ३ १ २ ३ १ २ ३ १ २
अग्निर्वृत्राणिजङ्घनद्द्रविणस्युर्विपन्यया।

१ २ ३ १र २र
समिद्धःशुक्र आहुतः ॥ १† ॥

"विपन्यया" सुस्तूयमानः "द्रविणस्युः" द्रविणं धनं स्तोतॄ-णामिच्छन् [ यद्वा, हविर्लक्षणं धनमात्मन इच्छन् "अग्निः"

---

* ऊ० गा० १२प्र० १ख० १३सा०।

† छ० आ० १, १, १, ४ ( १भा० ६८४पृ० ) = ऋ० वे० ४, ५, २७, ३।

"वृत्राणि" आवरकाणि रक्षः-प्रभृतीनि तमांसि वा "जङ्घनत्" हिंसन्तु। कीदृशोऽग्निः? "समिद्धः" सम्यक् दीप्तः अतएव "शुक्रः" शुक्लवर्णः "आहुतः" हविर्भिरभिहुतः ॥ १ ॥

अथ द्वितीया।

१ २ ३ २ ३ २ ३ १ २ ३ २ ३ १ २
गर्भेमातुःपितुष्पिताविदिद्युतानोअक्षरे*।

१ २ ३ २ १ २ ३ २
सीदन्नृतस्ययोनिमा ॥ २† ॥

[ अत्र मातृ-पितृ-शब्दाभ्यां भूद्यौश्चाभिधीयेते "द्यौः पिता, पृथिवी मातेति श्रुतेः ] "मातुः" भूम्याः "गर्भे" गर्भस्थाने मध्ये "अक्षरे" क्षरण-रहिते वेद्याख्ये स्थाने‡ "वि दिद्युतानः" विशेषेण दीप्यमानः "पितुः पिता" द्युलोकस्य पालयिता हविषां प्रदानेन, एवम्भूतोऽग्निः "ऋतस्य" यज्ञस्य "योनिम्" उत्तरवेद्याख्यं "धिष्ण्यं" [सप्तम्यर्थे द्वितीया (३, १, ८५)] "आसीदन्" उत्तरवेद्यामुपविशन् अग्निर्वृत्राणि जङ्घनदित्यन्वयः ॥ २ ॥

अथ तृतीया।

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २
ब्रह्मप्रजावदाभरजातवेदोविचर्षणे।

२ ३ २ ३ १ २ ३ २
अग्नेयद्दीदयद्दिवि ॥ ३¶ ॥ ७

---

* "अक्षरन्"—इति क० पु० पाठः।

† ऋ० वे० ४, ५, २७, ४।

‡ 'अक्षरे—अक्षीयमाणे स्थाने'—इति वि०।

¶ ऋ० वे० ४, ५, २७, ५।

हे "जातवेदः" जातानां वेदितः! "विचर्षणे" विशेषेण द्रष्टः अग्ने! "प्रजावत्" पुत्र-पौत्र-सहितं "ब्रह्म" अन्नम् "आ भर" आहर "यद्" ब्रह्म "दिवि" द्युलोके "दीदयत्" दीप्यते। देवेषु यत् प्रशस्तमन्नं राजते तदाहरेत्यर्थः ॥ २ ॥ ७

अस्यप्रेषेति तृचात्मकं द्वितीयं सूक्तम्,

तत्र प्रथमा।

२ २ ३ २ ३ १ २ ३ १ २
अस्यप्रेषाहेमनापूयमानो
३ २ ३ २ ३ १ २ ३ १ २
देवोदेवेभिःसमपृक्तरसम्।
३ १ ३ २ ३ १ २ ३ १ २
सुतःपवित्रम्पर्य्येतिरेभन्
३ २३ १ २ ३ २ ३ १ २
मितेवसद्मपशुमन्तिहोता ॥ १* ॥

"अस्य" सोमस्य "प्रेषा" [प्रेषतिर्गत्यर्थः क्विपि रूपं, "सावेकाच (६,१,१६८)"—इति विभक्तेरुदात्तत्वम्;] प्रेरणेन, "हेमना" हिरण्येन "पूयमानः" ["हिरण्यपाणिरभिषुणोति"—इति हिरण्य-सम्बन्धः, तादृशः] "देवः" दीप्यमानः सोमः "रसम्" आत्मीयं "देवेभिः" देवैः सह "समपृक्त" सम्पर्चयति संयोजयति [पृची सम्पर्के (अदा०आ०)] ततः "सुतः" अभिषुतः सोमः "रेभन्" शब्दायमानः सन् "पवित्रम्" ऊर्णास्तुकेन निर्मितं "पर्येति"

* छ० आ० ६, १, ४, ४ (२भा० ११५पृ०) = ऋ० वे० ७, ४, ११, १।

परिगच्छति। कमिव? "होता" देवानामाह्वाता ऋत्विक् "मिता इव" निर्मितान् "पशुमन्ति" बहुपशून् "सद्म" सदनानि यज्ञ-गृहान् यथा पर्य्येति तद्वत्॥ १॥

अथ द्वितीया।

३ १ २र ३ २ १ २
भद्रावस्त्रासमन्या३वसानो

३ ३ २ ३ १ २ ३ १ २
महान्कविर्निवचनानिशꣳसन्।

१ १ ३क २र ३ १ २
आवच्यस्वचम्वोःपूयमानो

३ १ २र ३ १ २
विचक्षणोजागृविर्देववीतौ॥ २*॥

"भद्रा" भद्राणि कल्याणानि "समन्या" [समनमिति सङ्ग्राम-नाम (२, १७, १६), तत्र साधुरिति यत्] सङ्ग्राम-योग्यानि "वस्त्रा" वस्त्राणि आच्छादकानि तेजांसि "वसानः" आच्छादयन् "महान्" "कविः" क्रान्तदर्शी अतएव "निवच-नानि" नितरां वक्तव्यानि स्तोत्राणि† "शंसन्" "विचक्षणः" विशेषेण सर्वस्य द्रष्टा "जागृविः" जागरणशीलः। हे सोम! एवम्भूतस्त्वं "देववीतौ" देवानां वीतिर्भक्षणं यस्मिन् तद्देववीति-र्यज्ञः तस्मिन् "चम्वोः" अधिषवण-फलकयोः‡ "आ वच्यस्व" पात्राण्यागच्छ [वचिर्गत्यर्थः (भ्वा० प०) व्यत्ययेन श्यन्॥ २॥

* ऋ० वे० ७, ४, ११, २।

† 'वचनानि—ऋग्यजुः-साम-लक्षणानि'—इति वि०।

‡ 'चम्वोः—अधिषवण-चर्मणोरुपरि'—इति वि०।

अथ तृतीया।

१ २ ३ १ २ ३ २ ३ १ २
समुप्रियोमृज्यतेसानोअव्ये

३ १ २ ३ २ ३ १ २ ३ २
यशस्तरोयशसाङ्क्षैतोअस्मे।

२ १ २ ३ १ २ ३ १ २ ३
अभिस्वरधन्वापूयमानो

३ १ २ ३ २ ३ १ २
यूयम्पातस्वस्तिभिःसदानः ॥ ३ * ॥ ८

"यशसां" यशस्विनां मध्ये "यशस्तरः" अतिशयेन यशस्वी "क्षैतः" क्षितौ भावः "प्रियः" प्रीणयिता सोमः "सानौ" समुच्छ्रिते "अव्ये" अवि-मये पवित्रे "अस्मे" अस्मदर्थं "सम्मृज्यते" ऋत्विग्भिः परिपूयते "उ" [—अवधारणे] "पूयमानः" त्वं "धन्वा" अन्तरिक्षे "अभि स्वर" अभितः शब्दय "यूयम्" [प्रजायां बहुवचनम्†] हे सोम ! त्वं "नः" अस्मान् "स्वस्तिभिः" कल्याणतमैः पालनैः "सदा" सर्वदा "पात" रक्षत पालयेत्यर्थः ॥ ३ ॥ ८

३ २ २ २ ३र
॥ उद्वायिवासिष्ठम् ॥ उद्वायि। अया३ ४औ

४र ५ १र २ १र २३४ ५ ३र२ ३र
होवा। प्रेषा। हे३मना। पूयमानाः। देवा३४औ

४र ५ १र २ १ २२४५ ३२
होवा। देवायि। भी३:सम। पृक्तरसाम्। सुता३

---

* ऋ० वे० ७, ४, ११, ३।

† 'यूयं पात—बहुवचनमिदं सह देवैरित्यर्थः'—इति वि०।

२र र १ २ १ २ ३ ४ ५ ३ २
४औहोवा । पवायि । चा३परि । एतिरेभान् । मिता

३र र ५ १ २ १ २ १ ४
३४औहोवा । वसा । श्रा३पशु । मा३४३ । ती३हो

३ १ ३र र४ ५ १ २ १
पूता६५६ ॥(१) भद्रा३४औहोवा । वस्त्रा । समनि ।

२ ३ ४ ५ ३ १ ३र ४र ५ १ २ १
यावसानाः । महा३४औहोवा । कवायिः । निवच ।

२ ३ ४ ५ ३र २ ३र ४र १ २ १ र
नानिश्र्ँसान् । आवा३४औहोवा । च्यस्वा । चमुवोः ।

२ ३ ४ ५ ३ २ ३र ४र ५ १ ३र १
पूयमानाः । विचा३४औहोवा । नृणो । जागृविः ।

२ २ ४ ३ २ ३र ४र ५
दा३४३यि । वा३चापूयिता६५६७ ॥(२) समू३४औहोवा ।

१ २ १ र २ ३र ४ ५ ३ २ ३र ४र ५
प्रियो । मृज्यते । सानोअव्यायि । यशा३४औहोवा ।

१ १ १ र २ ३र ४ ५ ३ २ ३र ४र ५
स्तरो । यशसाम् । वैतोअस्मायि । अभा३४औहोवा ।

१ २ १ र २ ३ ४ ५ २ २ ३र २ ४ ३र
स्वरा । धनुवा । पूयमानाः । उज्ञवायि । यूया३औ

४र ५ १र २ १ १ २ ४
होवा । पाता । स्वस्ति । भा३४३यिः । सा३दा५

ना६५६(३) ॥ ६ * ॥ [१] ८

---

* ऊ० गा० ७प्र० २ख० ६सा०

अथैतोन्विन्द्रमिति तृचात्मकं तृतीयं सूक्तम्,

तत्र प्रथमा ।

१२ २३ १२ ३२ २२३१ १
एतोन्विन्द्रᳪस्तवामशुद्धᳪशुद्धेनसाम्ना ।
३ २३१ २ ३१ २ ३२३ १२
शुद्धैरुक्थैर्वावृध्वाᳪसᳪशुद्धैराशीर्वान्ममत्तु ॥ १ * ॥

[ अत्रेतिहासमाचक्षते—पुरा किलेन्द्रो वृत्रादिकान् असुरान् हित्वा ब्रह्महत्यादि-दोषेणात्मान मपरिशुद्ध मित्यमन्यत अथ तद्दोष-परिहारार्थं यदेन्द्र ऋषीनवोचत्—यूय मपूतं मां युष्मदीयेन साम्ना शुद्धं कुरुतेति । ततस्ते च शुद्धत्वापादकेन साम्ना शस्त्रैश्च परिशुद्ध मकार्षुः । पश्चात् पूतायेन्द्राय यागादि-कर्माणि सोमादीनि हवींषि च प्रादुरिति । एषोऽर्थः शाट्यायनक-ब्राह्मणे प्रतिपादितः—"इन्द्रो वा असुरान् हत्वाऽपूत इवामेध्यो अमन्यत सोऽकामयत शुद्धमेवमासन्नं शुद्धेन साम्ना स्तुयुरिति स ऋषीनब्रवीत् स्तुतमिति तत एव ऋषयः सामापश्यन् तेनास्तुवन्नेतोन्विन्द्रमिति ततो वा इन्द्रः पूतः शुद्धो मेध्यो भवदिति । तथाच अस्या ऋचोऽयमर्थः—] ऋषयः परस्परं ब्रुवन्ति—"नु" क्षिप्रम् "एत उ" आगच्छतैव । आगत्य च "शुद्धेन" शुद्धत्वापादकेन साम्ना, तथा "शुद्धैः" शुद्धि-हेतुभिः "उक्थैः" शस्त्रैश्च इन्द्रम् शुद्धमपापिनं कृत्वा "स्तवाम" स्तुयाम । ततः "साम्ना" शस्त्रैश्च "वावृद्वांसं" पाप-राहित्येन वर्द्धमानं तमिममिन्द्र "शुद्धैः"

* छ० आ० ४, २, १, ८ (१भा० ७१४पृ०) = ऋ० वे० ६, ६, ११, २ ।

शुद्ध्युत्पादकैर्गव्यादिभिः "आशीर्वान्" आश्रयणवान् [ "छन्दसीरः (८, २, १५)"—इति मतुपो वत्वम्, तादृशः सोमः ] "ममत्तु" तमिन्द्रं मादयतु [ माद्यतेश्छान्दसः (२,४,७६)श्लुः ] ॥

"शुद्धैराशीर्वान्"-"शुद्धैआशीर्वान्"—इति पाठौ ॥ १ ॥

अथ द्वितीया ।

१ २ ३ २ ३ १ २ ३ १ ३ १ २ ३ १ २
इन्द्रशुद्धोनआगहिशुद्धःशुद्धाभिरूतिभिः ।

३ २ ३ १र २र ३ १ २
शुद्धोरयिंनिधारयशुद्धोममद्धिसोम्य ॥ २ * ॥

हे "इन्द्र!" "शुद्धः" अस्मदीयैः सामभिः शस्त्रैश्च परिशुद्धस्त्वं "नः" अस्मान् "आ गहि" आगच्छ "शुद्धाभिः" "ऊतिभिः" ऊतयो मरुतः [ अवन्ति सर्वत्र गच्छन्तीति वा ] तेऽपि सामभिः शस्त्रैश्च परिपूताः तैः मरुद्भिः सह "शुद्धः" पाप-रहितः त्वम् आगहि । आगत्य च "शुद्धः" त्वं "रयिं" धनं अस्मासु "निधारय" अतितरां स्थापय । किञ्च, हे "सोम्य" सोमार्ह ! "शुद्धः" त्वं "ममद्धि" सोमेन माद्य [ मदी हर्षे ( दि० प० ) लोटि "बहुलञ्छन्दसि ( २, ४, ७६ )"—इति शपः श्लुः ] ॥

"ममद्धिसोम्य"-"ममद्धिसोम्यः"—इति पाठौ ॥ २ ॥

---

* ऋ० वे० ६, ८, ३१, ६ ।

अथ तृतीया।

१ २ ३ १र २र ३ २ ३ १र २र ३ १ २
इन्द्रशुद्धोहिनोरयिंशुद्धोरत्नानिदाशुषे।
३ १ ३ १ २ ३ १र २र
शुद्धोवृत्राणिजिघ्नसेशुद्धोवाजंसिषाससि॥ ३ * ॥९

हे "इन्द्र!" "शुद्धः हिः" [—अवधारणे †] शुद्धएव त्वं "नः" अस्मभ्यम् "रयिं" धनं प्रयच्छ। तथा "शुद्धः" त्वं "दाशुषे" हविर्दत्तवते यजमानाय "रत्नानि" रमणीयानि कनक-गवादीनि देहि। ततः "शुद्धः" पाप-रहितः त्व "वृत्राणि" अपामावरकान् कर्म-विघ्नकारिणं शत्रून् पापानि वा "जिघ्नसे" हंसि। ततः "शुद्धः" शत्रु-हनन-दोष- परिहाराय अस्मदीयैः सामभिः शस्त्रैश्च परिशुद्धस्त्वं वाजमन्नमस्मभ्यं "सिषाससि" प्रदातुमिच्छसि ‡ [यदा शत्रूनहं हन्यां तदा शुद्धुत्पादकैः सामभिः शस्त्रैश्च यूयं मां परिशुद्धं कुरुतेत्येवमस्मभ्यं धनमन्नञ्च दातुमिच्छसीत्यर्थः] ॥ ३ ॥९

२र र १
॥ शुद्धाशुद्धीयोत्तरम् ॥ एतोन्विन्द्रंस्तवाइमा। शु
२ १ १ २ २ १र
द्धंशुद्धे। न। साम्ना२। शुद्धायिरुक्थाइयिः। वा
३ ५ २ १र २ १ २ १
वार्द्धा२३४साम्। शुद्धैरा२३श्री। र्वान्ममत्तु। इडा

---

* ऋ० वे० ६, ६, ३१, ४।

† 'हि तस्मादर्थे, शुद्धस्त्वं यस्मात् रयिं धनं शुद्धं निधारय'—इति वि०।

‡ 'सिषाससि—साधयसि'—इति वि०।

२ ३ ॥(१) इन्द्रशुद्धोनआगा३हि। शुदः शुद्धा। भिरू।

तायिभा२यिः। शुद्धोरा३यी३म्। निधा२रा२३४या।

शुद्धोमा२३मा। धीसोमिय। इडा२३॥(२) इन्द्रशुद्धो

हिनोरा३यीम्। शुद्धोरत्नानिदा। शूषा२यि। शुद्धो

वा३न्नी३। णिजा२म्ना२३४सायि। शुद्धोवा २ ३ जाम्।

सायिषासस्रि। इडा २ ३ भा ३ ४ ३। औ २ ३ ४ ५ ई।

डा(३)॥ १२ *॥ [१] ९

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य द्वादशस्याध्यायस्य

तृतीयः खण्डः॥ ३॥

---

अथ चतुर्थ-खण्डे—

अग्नेस्तोममिति तृचात्मकं सूक्तम्,

तत्र प्रथमा।

२ १र २र २ २१ १ २ २ १ २

अग्नेस्तोमम्मनामहेसिध्रमद्यदिविस्पृशः।

२ १ २ २ १ २

देवस्यद्रविणस्यवः॥ १ †॥

---

* ऊ० गा० ७प्र० २ख० १२सा०।

† ऋ० वे० ४, १, ५, २।

"द्रविणस्यवः" द्रविणं धनमिच्छन्तो वयं "दिविस्पृशः" सूर्यरूपेण आकाशं व्याप्नुवती "देवस्य" द्योतमानस्य "अग्नेः" "सिद्ध" पुरुषार्थानां साधकं "स्तोमं" स्तोत्रम् "अद्य" अस्मिन्नहनि "मनामहे" ब्रूमः ॥ १ ॥

अथ द्वितीया।

३ १ २ ३ २ ३ २ ३ १२ ३१ २ २
अग्निर्जुषतनोगिरोहोतायोमानुषेष्वा।

१ २ ३ १ २ ३ १ २
सयक्षद्दैव्यञ्जनम् ॥ २ * ॥

"होता" देवानामाह्वाता होम-निष्पादको वा "अग्निः" "मानुषेषु" "आ" वसति। "यः" अग्निः "नः" अस्माकं "गिरः" स्तुतीः "जुषतां" सेवताम् "सः" अग्निः "दैव्यं जनं" देव-सम्बन्धिनं जनं† "यक्षत्" यजतु ॥ २ ॥

अथ तृतीया।

१ २ ३ १ १ ३ २ ३ २ ३ १ २
त्वमग्नेसप्रथाअसिजुष्टोहोतावरेण्यः।

१ २ ३ १२ ३१
त्वयायज्ञंवितन्वते ॥ ३ ‡ ॥ १०

* ऋ० वे० ४, १, ५, ३।

† 'दैव्यं जनं—देवानां स्वभूतं वसु-रुद्र-मरुत्-प्रभृतिकं जनम्'—इति वि०।

‡ ऋ० वे० ४, १, ५, ४।

हे "अग्ने !" "जुष्टः" सर्व्वदा प्रीतः "वरेण्यः" सर्व्वैर्वरणीयः "होता" त्वं "सप्रथाः असि" सर्व्वतः पृथुर्भवसि [ तथाहि यास्कः— "सप्रथाः सर्व्वतः पृथुः (निरु० नै० ६.७)"—इति ]। किञ्च, सर्व्वे यजमानाः "त्वया" साधनेन "यज्ञं" "वि तन्वते"* ॥ ३ ॥ १०

अभित्रिपृष्ठमिति तृचात्मकं द्वितीयं सूक्तम्,†

तत्र प्रथमा ।

२ १ २ ३ १र ३ १
अभित्रिपृष्ठंवृषणंवयोधा

७ ३ १ २ ३ १ २
मङ्गोषिणमवावशन्तवाणी ।

२ ३ १ २ ३ १ २ ३ १उ ३
वनावसानोवरुणोनसिन्धु-

१ २ ३ १ २ ३ १ २
र्विरत्नधादयतेवार्याणि ॥ १ ‡ ॥

"त्रिपृष्ठं" त्रीणि पृष्ठानि स्तोत्राणि सवनानि वा यस्य स तथोक्तस्तं "वृषणं" वर्षकं "वयोधाम्" अन्नस्य दातारम् "अङ्गोषिणम्" अपोषवन्तं सोममभिलक्ष्य "वाणीः" स्तोतॄणां वाचः "अवावशन्त" शब्दायन्ते । "वना" वनानि उदकानि "वसानः" आच्छादयन् "वरुणो न" वरुणो यथा सिन्धूनाच्छादयति तद्वत् ।

---

* 'ऋत्विजः विस्तारयन्ति'—इति वि० ।

† 'पञ्चमस्याह्नः सम्पत्या मध्यन्दिनम्'—इति वि० ।

‡ छ० आ० ६, १, ४, ६ (२भा० १२० पृ०)=ऋ० वे० ७, ३, २६, २ ।

"सिन्धुः" स्यन्दनशीलः, "रत्नधाः" रत्नानां दाता सोमः "वार्य्याणि" धनानि "दयते" प्रयच्छति स्तोतृभ्यः ॥

"अङ्गोषिणम्"-"अङ्गूषाणम्"—इति पाठौ, "सिन्धुः"-"सिन्धून्"—इति च ॥ १ ॥

अथ द्वितीया।

१ २ ३ १ २ ३ १ २ ३
शूरग्रामःसर्ववीरःसहावान्

१ २ ३ १ २ ३ १ २
जेतापवस्वसनिताधनानि।

३ १ २ ३ १ २ ३ १र
तिग्मायुधःक्षिप्रधन्वासमत्

१र ३ १र ३र ३ १ २
स्वषाढःसाह्वान्पृतनासुशत्रून् ॥ २* ॥

हे सोम! त्वं "पवस्व"। कीदृशस्त्वम्? "शूरग्रामः" शूराणां ग्रामः सङ्घो यस्य सः, "सर्ववीरः" सर्वे वीरा यस्य स तथोक्तः, "सहावान्" सहनवान् "जेता" जयशीलः "सनिता" सम्भक्ता "धनानि" धनानां, "तिग्मायुधः" तीक्ष्ण-प्रहरण-साधनः,† "क्षिप्रधन्वा" क्षिप्र-सहनशील-धन्वा, "समत्सु" सङ्ग्रामेषु "अषाढः" असोढ़ा, "साह्वान्" अभिभवन्। कुत्र? "पृतनासु" शत्रु-सेनासु। कान्? "शत्रून्" ॥ २ ॥

---

* ऋ० वे० ७, ३, २६, ३।

† 'तीक्ष्णायुधः—असि-परशु-पाश-प्रभृतिभिरायुधैः सम्पन्नः'—इति वि०।

अथ तृतीया।

३ १ २ ३ १ २ ३ १
उरुगव्यूतिरभयानिकृण्वन्

२ ३ १र २र ३ १२
समीचीनेआपवस्वापुरन्धी।

३ १र २र ३ २ ३ १र १र
अपःसिषासन्नुषसःस्वा*ऽ२ऽर्गाः

१र ३ २ ३ २ ३ १ १
सञ्चिक्रदोमहोअस्मभ्यंवाजान्॥ २† ॥ ११

हे सोम! "उरुगव्यूतिः" विस्तीर्ण-मार्गः त्वम् "उभयानि" स्तोतृभ्यः "कृण्वन्" कुर्वन्, "पुरन्धी"‡ इमे द्यावापृथिव्यौ "समीचीने" सङ्गते कुर्वन्, "आ पवस्व" आक्षर। "अपः" "उषसः" "स्वः" आदित्यं "गाः" रश्मींश्च "सिषासन्" सम्भक्तुमिच्छन् "सं चिक्रदः"¶ सङ्क्रन्दसे। "महः" महतः महान्ति "वाजानि" अन्नानि अस्मभ्यं दातुमिति शेषः॥ २॥ ११

२ १ ऽ २ ३र २
॥ सम्पावैयश्वम्॥ ओ२हायि। ओ३हा। ओहा।

१ ऽ २ २ २ २ १ २ ३
हुयार। ओ३हा३ए। अभिन्निपा। छा३वुष। णास्व

* "स्व"—इति ऋ० पाठः।

† ऋ० वे० ७, ३, २६, ४।

‡ 'पुरं धारयित्र्यः'—इति वि०।

¶ 'चिक्रदः—शब्दं कुर्वन्—इति वि

४ ५ १ १र १ १र २ ३ ४ ५ २
योधाम् । अङ्गोषिणाम् । भवाव । ग्रन्तवाणीः । व

१र २ १ २ ३ ४ ५ २ २ १
नावसा । नो३वरु । णौनखिधूः । विरत्नधाः । दय

२ १ २ ४ २र १ र
मे । वा३४३ । रीयापुणा६५६यि ॥(१) प्रूरग्रामाः ।

२ १र २ ३ ४ ५ २र १र २ १ २
सर्ववी । रःसहावान् । जेतापवा । स्वा३स्वनि । ता

३ ४ ५ २ १र २ १ २ ३ ४ ५ २ १र
धनानी । तिग्मायुधाः । क्षिप्रध । न्वासमत्सू । ष्वषा

२ १ २ २ ४
ढःसा । क्षा३न्यृत । ना३४३ । सूक्ष्वापुन्न्६५६न् ॥(२)

२ १ २ २ ३ ४ ५ २१र र
उरुगव्य । तो३भर । यानिष्कपवान् । समीचीने ।

२ १ २ ३ ४ ५ २ १ २ २ २
आ३पव । स्वापुरन्धी । पपःमिणा । सा३नुष । सः

३ ४ ५ २ १ ५ २ २र २ १
सुवर्गाः । ओ३हायि । ओ३वा । भोवा । इया२ ।

५ २ २ १ १ र २ २
ओ३हा३ए । सम्विक्तदो । मचोष । स्वा३४३ । भ्या

४
वापुजा६५६न्(३) ॥ १७* ॥ [१] ११

---

* ऊ० गा० ७प्र० १अ० १७श्वा० ।

अथ त्वमिन्द्रेति प्रगाथात्मकं तृतीयं सूक्तम्,

तत्र प्रथमा ।

१ २ ३ १ २ ३ १ २र २ १ २
त्वमिन्द्रयशाअस्यृजीषीशवसस्पतिः ।

२ ३ १ २ १ २उ ३ १ ३ १ २ ३ १ २
त्वंवृत्राणिहꣳस्यप्रतीन्येकइत्पूर्वनुत्तश्चर्षणीधृतिः ॥ १* ॥

हे "इन्द्र ! "त्वं" "शवसस्पतिः" शवसोऽन्नस्य बलस्य वा पालयिता, "ऋजीषी" ऋजीषोऽभिषुतः सोमः तद्वान्, त्वं "यशा असि" यशस्वी भवसि । कथमस्य यशस्वित्वं ? तदाह-- "अप्रतीनि" बलिभिरपि अप्रतिगतानि "वृत्राणि" रक्षांसि "अनुत्तः" अन्यैर्नेतुमशक्यः त्वम् "एकइत्" एकएव असहाय एव "चर्षणीधृतिः" रक्षार्थेन यजमानादि-मनुष्याणां धारकः "पुरु" बहुलं यथा भवति तथा "हंसि" सम्प्रहरसि । अतएवास्य यशस्वित्वम् ॥

"शवसस्पतिः"-"शवसस्पते"—इति पाठौ, "इत्पूर्वनुत्तश्च-र्षणीधृतिः"—"नएकइदनुत्ताचर्षणीधृता"—इति च ॥ १ ॥

अथ द्वितीया ।

१ २ ३ १ २ २ १ २ ३ १ २ ३ १ २
तमुत्वानूनमसुरप्रचेतसꣳराधोभागमिवेमहे ।

२ ३ ३ १ २ ३ १ २ ३ १ २ ३ १ २
महीवकृत्तिःशरणातइन्द्रप्रतेसुम्नानोअश्नवन् ॥ २† ॥१२

* छ० आ० ३, २, १, ६ (१ भा० ५.१२पृ०)=ऋ० वे० ६, ६, १३, ५ ।

† ऋ० वे० ६, ६, १३, ६ ।

हे "असुर" बलवत्! प्राणवत्! वा हे "इन्द्र!" यः उक्त-गुणोऽस्ति "तं" च "प्रचेतसं" प्रकृष्ट-ज्ञानं "त्वा" "उ"[—इत्यव-धारणे] पितृवत् पोषकं त्वामेव "राधः" धर्मादि-साधनं धनं "नूनम्"*इदानीम् "ईमहे" याचामहे। तत्र दृष्टान्तः—"भाग-मिव" यथा कश्चित् पितरी भागभूतं धनं याचते, तद्वत्; इन्द्रो यजमानेभ्यः स्तोतृभ्यश्च धनं प्रयच्छत्येव तस्मात् भागभूतं धनं यष्टारो वयं याचामहे। किञ्च हे इन्द्र! "मह्नीव कृत्तिः" [कृत्ति चर्म्मोऽन्नं वा कृतीच्छेदने (रु० प०) करणे क्तिन्। कृतन्त्यनेनेति, दुर्ग्गो] कृत्तिरिव "ते" तव "शरणा" शरणं गृहम् अन्तरिक्षं द्युलोके महद् वर्त्तते [अत्र यास्कः—"कृत्तेर्यंगोवानं वा। मह्नीव कृत्तिः शरणा त इन्द्र। सुमहत्त इन्द्र शरणमन्तरिक्षे कृत्तिरिव (निरु० नै० ५, २२)"—इति]। किञ्च "ते" तव स्व-भूतानि "सुम्ना" सुम्नानि मन्त्रादि-विषय-सुखानि च "नः" अस्मान् "प्राश्नुवत्" प्रकर्षेणाश्नुवन्तां व्याप्नुवन्तु [अश्नोतेर्लेटि अडागमः (३, ४, ९४)] ॥ २ ॥ १२

५ ४ २ ४ ५२ ४२ ५ १
॥ अभीवर्त्तम् ॥ तुवा३मा२यिन्द्रयशा३असोवा। आ

२ १२ १ २ १ २ ३
ज्योषौश्च। वसास्या१ता२रयिः। त्ववम्वृचा३१२३४। पि

४ ५ २ २ २ १ २ १ १
तृ५ंस्यप्रतीनिए। कआयित्पू१हु२। अनूत्ता१स्वा२।

३ २ १ ३ १ १ १ १ ५ ४ २ ४
षणा३यि। धा२३४५। ता२३४५यिः ॥(१) अनू३त्ता३स्व

* 'निश्चितम्'—इति वि०।

५र ४ ५ १ २ १ २ १
र्षणीधृतोवा । आनुत्तस्त्व । षणायिधा१र्त्ता२रयिः । ता

र २ ३ ४५ २१ २ र १
मुत्वानू३१२३४ । नमस्तुर । प्रचायिता१सा२म । राधो

२ ३ २ १ ३ १ १ १ १ १
भा१गा२म् । इवा३यि । मार३४५ । हार३४५यि ॥(२)

५र४ २ ४ ५र ४ ५ १ र २र १ २
राधो३भा२गमिवेमहोवा । राधोभागम् । इवायिमा१

२ र १ २ ४ ५र १ १ २
हा२यि । माहोवका३१२३४ । तिःशरणा । नआआ१

१ २ ३र १ १
यिन्द्रा२ । प्रतायिद्ध१म्ना२ । नोआ३ । आ२ ३ ४ ५ ।

३ १ १ १ १
वा२३४५न(३) ॥ १८* ॥ [१]

२ १ ४ ५र
॥ द्विर्हिङ्कारम्वामदेव्यम् ॥ तुवमा२३यिन्द्रयशाअसा

१र र र र ऽ
यि । आज्जीषीशवसस्पतिस्त्वम्वृत्राणिहꣳस्यप्रतीन्याायि

१ ३र २ १ १ २ १ १ ३र २
कओहो३ । ऊम्मा२ । पू२३ह । अनुत्तस्चार्षणीहो३ ।

१ १ ४ ५ २ १ ४
ऊम्मा२ । धृतायिः । औ२३होवा ॥(१) अनुत्ता२३च

५र १ र २र २
र्षणीधृतायिः । आनुत्तश्चर्षणीधृतस्तमुत्वानूनमस्तुराऽप्र

* ऊ० गा० ७प्र० २अ० १८सा० ।

१र २ १ १ २ १र र र २ ३र
श्रोहो३। ऊम्मा२। ना२३साम्। राधोभागाऽमिवी

२ १ १ २ ४ ५ २र१र
होइ। ऊम्मा२। महा। औ३होवा ॥(२) राधोभा

४ ५र १ र र र र र
३गमिवेमहायि। राऽधोभागमिचेमहेमहीवक्ष्त्तिःश्रर्णा

२ ३र २ १ १ २ १ र २
ऽतन्नौहोइ। ऊम्मा२। श्रा२३यिन्द्रा। प्रतेत्तुम्नाऽन

३र २ १ १ ४ ५ ४
औहोइ। ऊम्मा२। श्रवान्। औ२३होवा। होऽ५ई।

डा(३) ॥ ७ * ॥ [२]

१ २ १ २ १र २ र
॥ यग्रम् ॥ त्वमिन्द्रा। यशाः। असायि। ऋजो

१र २ १ २ १ १ ३ २ १ र
षीअवसः। पतायिः। त्वम्वृत्राणी२३हर्ण्(ं)सिया। प्रती

१ २ १ ३ ५र र
नाए२। कद्र्त्पूह्र२हो१। तश्च। षा२णा२३४औहो

३ ५ १ २ १ २ १र
वा। धा२३४र्त्ताः ॥(१) अनुत्तश्चा। अनुत्तश्चा। पणी।

२ र १ २ र २
धृतायिः। अनुत्तस्त्वर्षणी। धृतायिः। तमुत्वानू३नम

३ २ १ १ १र
सुरा। प्रावा२यि। तासा२म। राधा२हो१यि।

---

ऊ० गा० १६प्र० २ख० ७सा०।

र १ १ २ ५र र २ ५
भागम्। आरथिवाऽ३औहोवा। मा२३४ हे॥(२)

१र२ र १ २र र र १र र र
राधोभागाम्। राधोभागाम्। हुवे। महायि। राधो

२र १ र २ २ र २३२ १
भागमिवे। महायि। महोवक्का३र्त्तिःशरा। णाता२

१ १ २र २
यि। आयिन्द्रा२। प्रता२यिहो१यि। सुम्ना। नो२

३ ५र र २ ५
आ२३४औहोवा। आ२३४वान्(३)॥ १४ * ॥ [३] १२

यजिष्ठन्त्वेति प्रगाथात्मकं चतुर्थं सूक्तम्,

तत्र प्रथमा।

१ २ ३ १ २ ३ १ २र ३ १ २
यजिष्ठन्त्वाववृमहेदेवन्देवत्राहोतारममर्त्त्यम्।

३ २ ३ १ २ ३ १ २
अस्ययज्ञस्यसुक्रतुम्॥ १ † ॥

हे अग्ने! "यजिष्ठं" यष्टृतमं "त्वा" त्वां "ववृमहे" वृणीमहे सम्भजामहे। कीदृशं त्वाम्? "देवत्रा" देवेषु मध्ये "देवम्" अतिशयेन दानादि-गुणकम्, "होतारं" देवानामाह्वातारम्, "अमर्त्त्यम्" अविनाशनम्, "अस्य" "यज्ञस्य" यागस्य "सुक्रतुं" सुष्ठु कर्त्तारम्॥ १॥

---

* ऊ० गा० १८प्र० २खं० १४सा०।

† छ० आ० २, १, २, ६ (१भा० ३८३ पृ०)=ऋ० वे० ६, १, १९, ३।

अथ द्वितीया ।

२ १ २र २ १ २ ३ १ २ ३ २३ १ २
अपान्नपातꣳसुभगꣳ*सुदीदितिमग्निमुश्रेष्ठ†शोचिषम् ।
१ २ ३ २ ३ १ र ३ २ ३ २उ ३ १ २ ३ २
सनोमित्रस्यवरुणस्यसोअपामासुम्नंयक्षतेदिवि ॥ २‡ ॥१३

"ऊर्जः" अन्नस्य "नपातं" न पातयितारं¶ [ यद्वा, नप्तारं चतुर्थं हविर्लक्षणेनान्नेन आपो जायन्ते, अद्भ्यश्चौषधि-वनस्पतयस्तेभ्य एष जायत इति चतुर्थत्वम्§। "नभ्राण्नपात् ( ६, ३, ७५ )"—इति नञ् प्रकृतिभावः ] "सुभगं" शोभनधनं "सुदीदितिं" सुष्ठु दीदयन्तं "श्रेष्ठशोचिषं" प्रशस्यतम-तेजस्कम् अग्निं स्तौमीति शेषः। स तादृशोऽग्निः "नः" अस्मदर्थं "दिवि" द्योतमाने देवयजने द्युलोके वा "मित्रस्य" देवस्य "वरुणस्य" च "सुम्नं" सुखम् "आ" अभिलक्ष्य "यक्षते" यजतु। तथा सोऽग्निः "अपाम्" अब्देवतानाञ्च सुम्नमभि यजतु ॥ २ ॥ १३

३ ४ २ ४ ५
॥ साध्यम् ॥ याऽ५जि। ष्ठम्वाइवाइवाइवृमद्यायि।
२र१र र र २ १ र १ ७
देवन्देवत्राहोतारइराम्। आमर्त्तियम्। आस्ययाज्ञा

---

* "ऊर्जोनपातं"—इति ऋ० पाठः।

† "अग्निंश्रेष्ठ"—इति च ऋ०-पाठः।

‡ ऋ० वे० ६, १, २९, ४।

¶ ऋग्वेदीयपाठमवलम्ब्यैवं व्याख्यानम्।

§ 'अपां नपातम्—अपां पौत्रमग्निम्। अपां पुत्रका वृक्षाः, तेषु सञ्जातं पुत्रं पौत्रम्'—इति वि०।

२३ । स्था२३सू२ । का३४५तो६हायि ॥(१) आ५पुस्य ।
यज्ञा३स्या२सुक्रतूम् । अपान्नपात७सुभा२३गाम् । सुदी
दितिम् । अग्निमूश्रे२३ । ष्ठा२३मो२ । चा३४५यिषो
६हायि ॥(२) आ५ग्निम् । उश्रे३ष्ठा३मोचिषाम् । स
नोमित्रस्यवरु२३णा । स्वासोअपाम् । आसुम्नाया२३ ।
चा२२ता३यि । दा३४५यिवो६हायि(३) ॥ ३* ॥ [१]

॥ ऐध्मवाहसम् ॥ यजिष्ठन्त्वाववृमाहायि । देवन्देव
त्राहोतारममर्त्तियाम् । अस्ययज्ञस्यसुद्दहा । अस्ययज्ञ
स्यसू५द्दहा । ऊयायि । ऊवो२३४वा । क्रा५तो६हा
यि ॥(१) अस्ययज्ञस्यसुक्रातूम् । अपान्नपात७सुभग७
सुदीदितायिम् । अग्निमुश्रेष्ठशोद्दहा । अग्निमुश्रेष्ठशो
५द्दहा । ऊवायि । ऊवो२३४ । वा । चा५यिषो६हा

---

* ऊ० गा० ८प्र० १ख० ३गा० ।

२ ३ २ ३ १ २
यि ॥(२) अग्निमुश्रेष्ठशोचायिषाम् । सुनोमित्रस्यवरुण
२ २
सोअपाम् । आसुम्नंयक्षताऽइहा । ऊवायि । ऊवो२
५ ४ ५
३४ । वा । हा५यिवोईहायि(३) ॥ २* ॥ [२] १३

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य द्वादशस्याध्यायस्य

चतुर्थः खण्डः ॥ ४ ॥

---

अथ पञ्चम-खण्डे —

यमग्नइति त्र्यचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा ।

१ २ ३ २उ ३ २ ३ १ २ ३ २ ३ २
यमग्नेपृत्सुमर्त्त्यमवावाजेषुयञ्जुनाः ।
२उ ३ १ २ ३ १ २
सयन्ताशश्वतीरिषः† ॥ १‡ ॥

हे "अग्ने !" "पृत्सु" सङ्ग्रामेषु "यं" "मर्त्यं" यजमानम् "अवाः" अवसि रक्षसि, "यं" पुरुषं "वाजेषु" सङ्ग्रामेषु "जुनाः" अवसि, "सः" नरः यजमानः "शश्वतीरिषः" नित्यान्य-

---

* ऊ० गा० १८प्र० १ख० ३सा० ।

† "स्वाहा"—इति यजुरधिकः पाठः ।

‡ ऋ० वे० १, ९, २२, २ = य० वे० ६, २९ ।

ञानि "यन्ता" नियन्तुं समर्थो भवति [पृत्सु—"पदादिषु मांस्पृत्स्नूनामुपसङ्ख्यानम् (६,१,६३)"—इति पृतना शब्दस्य पदादेशः "सावेकाच (६,१,१६८)"—इति विभक्तेरुदात्तत्वम्। अवाः—अव: अकाराकारयोर्विपर्ययः, यद्वा लेटऽडागमः, "इतश्च (३, ४,९७)"—इति सिप इकार-लोपः। जुनाः—जुइति गत्यर्थः सौत्रो धातुः, लङ्, सिप्, क्र्यादिभ्यः श्ना; "बहुलञ्छन्दस्यमाङ्योगेऽपि (६,४,७५)"—इत्यड़ागमाभावः; यद्वृत्तयोगात् (८,१,३०)" अनिघातः। यन्ता—तृनो नित्त्वादाद्युदात्तत्वम् (६,१,१९७)। शश्वतीः—"उगितश्च (४,१,६)"—इति ङीप्॥ १॥

अथ द्वितीया।

१ २ ३ १र २र
नकिरस्य सहन्त्यपर्येता कयस्यचित्।
१ २ ३ १ २
वाजोअस्तिश्रवाय्यः॥ २*॥

हे "सहन्त्य!" शत्रूणामभिभवन-शीलाग्ने! "अस्य" त्वद्भक्तस्य यजमानस्य "कयस्यचित्" कस्यापि "पर्येता नकिः" आक्रमिता नास्ति। किञ्चास्य यजमानस्य "श्रवाय्यः" श्रवणीयः "वाजः अस्ति" बल-विशेषोऽस्ति† ॥ २॥

* ऋ० वे० १, २, २३, २।

† 'वाजमन्नं'—इति वि०।

अथ तृतीया।

१र  २र३१२  ३१२  ३१२
सवाजंविश्वचर्षणिरर्वद्भिरस्तुतरुता।

१ २  ३१२
विप्रेभिरस्तुसनिता॥ ३* ॥ १४

"विश्वचर्षणिः" सर्वैर्मनुष्यैरुपेतः† "सः" अग्निः "अर्वद्भिः" अश्वैः‡ "वाजं" सङ्ग्रामं "तरुता" तारयिता "अस्तु" "विप्रेभिः" मेधाविभिः ऋत्विग्भिः सहितः तुष्टोऽग्निः "सनिता" फलस्य दाता¶ [ विश्वचर्षणिः—विश्वे चर्षणयः अस्य "बहुव्रीहौ विश्वं सञ्ज्ञायाम् ( ६, २, १०६ )"—इति पूर्वपदान्तोदात्तत्वम्। अर्वद्भिः—ऋ गतौ ( भ्वा० प० ), "अन्येभ्योऽपि दृश्यते ( ३,२,७५ )"—इति वनिप्, भिसि "अर्वणस्त्रसावनञः (६, ४, १२७ )"—इति नकारस्य तृ-इत्ययमादेशः। तरुता—तॄ प्लवन-तरणयोः (भ्वा०प०), अस्मात् "ग्रसित-स्कभित- ( ७, २, ३४ )—इत्यादौ तृजन्तो निपातितः, निपातनादेवेकारस्योत्वम् ] ॥ ३ ॥ १४

---

* ऋ० वे० १, २, १३, ४।

† 'विश्वस्य द्रष्टा'—इति वि०।

‡ 'अर्वद्भिः—तृतीयाबहुवचनं चतुर्थ्येकवचनस्य स्थाने द्रष्टव्यम्, अर्वते'—इति वि०।

¶ 'विप्रेभिः—विप्रेभ्यः सनिता, त्वां मुक्त्वा न कश्चिदन्यो दाता'—इति वि०।

अथ साकमुक्ष इति तृचात्मकं द्वितीयं सूक्तम्,

तत्र प्रथमा ।

२ १२ २ १ २ ३
साकमुक्षोमर्ज्जयन्तस्वसारो
२ ३ १ २ ३ २ ३ १ २
दशधीरस्यधीतयोधनुत्रीः ।
२ ३ १ २ ३ १र २र ३
हरिःपर्य्यद्रवज्जाःसूर्य्यस्य
१ २ ३ २ ३ २ ३ २
द्रोणन्ननक्षेअत्योनवाजी ॥ १* ॥

"साकमुक्षः" सह युगपत् सिञ्चन्तः [उक्ष सेचने (भ्वा०प०) क्विपि रूपम्, ताद्दश्यः] "स्वसारः" कर्म्म-करणार्थम् इतस्ततः सुष्ठु गच्छन्त्यः अङ्गुलयः "मर्जयन्त" सोमं शोधयन्ति [मृजू शोधनालङ्करणयोः ( अदा० प० ) ]। तथा "दश" दश-सङ्ख्याकाः "धीतयः" [ अङ्गुलि-नामैतत् ( निघ० २, ५, ७ ) ] "धीरस्य" समर्थस्य यज्ञस्य वा देवैर्ध्यातव्यस्य काम्यमानस्य वा सोमस्य "धनुत्रीः" प्रेरयित्र्यो भवन्ति। ततः "हरिः" हरितवर्णः सोमः "सूर्यस्य" "जाः" प्रादुर्भूता जाया दिशः ताः "पर्यद्रवत्" परितो गच्छति [ सूर्यस्य तेजसा हि आविर्भवन्तीति दिशान्तस्य जायात्वम् ] "अत्यः" अतनशीलः "वाजी न" अश्व इव स्थितः सोमः "द्रोणं" द्रोणकलशं "ननक्षे" व्याप्नोति [ नक्षतिर्व्याप्तिकर्मा ( निघ० २, १८, २ ) ] ॥ १ ॥

---

* ऋ० आ० ६, १, ५, ६ (२भा० ११६४०) = ऋ० मं० ७, ४, २, १ ।

अथ द्वितीया ।

२ ३ २ ३ २र ३ १र
सम्मातृभिर्न्नशिशुर्वावशानो
२र ३ १ २ ३ २
वृषादधन्वेपुरुवारोअद्भिः ।
२ ३ १र २र३ १ २ ३ १र
मर्य्योनयोषामभिनिष्कृतंयत्
२र ३ १ २ ३ १ २
सङ्गच्छतेकलशउस्त्रियाभिः ॥ २* ॥

"वावशानः" देवान् कामयमानः "वृषा" कामानां वर्षकः अतएव "पुरुवारः" बहुभिर्वरणीयः सोमः "अद्भिः" मातृभूताभिः वसतीवरीभिः "सं दधन्वे" सन्धार्यते । तत्र दृष्टान्तः— "मातृभिर्न शिशुः" कामयमानः पुत्रो यथा मातृभिः पयःप्रदानेन सन्धार्यते [धवि गत्यर्थः (भ्वा० प० ) कर्म्मणि लिटि रूपम्] "मर्य्यो न" मनुष्यो यथा "योषां" युवतिम् अभिगच्छति तद्वत्, "निष्कृतं" संस्कृतं स्वस्थानम् "अभि यन्" अभिगच्छन् "कलशे" द्रोणाभिधाने "उस्त्रियाभिः" अद्भिः गोविकारैः क्षीरादिभिर्वा "सङ्गच्छते" [ गमेरकर्मकात् "समो गम्यृच्छिभ्याम् ( १, ३, २९ )"—इत्यात्मने पदम् ॥ २ ॥

---

* ऋ० वे० ७, ४, ३, २ ।

† 'च्चादित्यरश्मिभिः'—इति वि० ।

अथ तृतीया ।

३ १२ २२ ३ २ ३ १ २ ३
उतप्रपिप्यऊधरघ्न्याया

२ ३ १ २ ३ २
इन्दुर्द्धाराभिःसचतेसुमेधाः ।

३ २ ३ २ ३ १ २ ३ २ ३ १
मूर्द्धानङ्गावःपयसाचमूष्वभि

२ ३ १ २ ३ २ ३ २
श्रीणन्तिवसुभिर्न्ननिक्तैः ॥ ३* ॥ १५

"उत" अपि च "अघ्न्यायाः" ["अघ्न्या"—इति गो नाम (निघ० २, ११, १)] अहं तयाविधाया गोः "ऊधः" पयःस्थानं सोमः "प्रपिप्ये" ओषध्यादिषु सोमः प्रविश्य प्रकर्षेण प्यायमति [प्यायतेर्लिङि "लिड्यङोश्च (६, १, २९)"—इति पी-भावः] "सुमेधाः" शोभन-प्रज्ञः सोऽयम् "इन्दुः" सोमः "धाराभिः" "सचते" समवैति सङ्गच्छते। ततो "गावः" "चमूषु" [चमन्ति भक्षयन्त्यत्र सोममिति चम्वो ग्रहादयः, तेषु] स्थितं "मूर्द्धानं" समुच्छ्रितमिमं सोमं "पयसा" उदकेन "अभि श्रीणन्ति" अभित आच्छादयन्ति† । तत्र दृष्टान्तः— "निक्तैः" प्रक्षालितैः "वसुभिः" वस्त्रैः यथा आच्छादयन्ति तद्वत् ॥ ३ ॥ १५

---

* ऋ० वे० ७, ४, ६, २ ।

† 'अभिश्रीणन्ति मिश्रयन्ति'—इति वि० ।

१र २र ३र २ १ २ १

॥ इन्द्रवद्वासिष्ठम् ॥ औहोवाहा ३ होयि । इन्द्रा ।

२ १ २ १ २ ३ ४ ५ २ १ र २

साकमुक्षो । मर्जय । न्तस्वसारः । दशधीरा । स्या

१र २ ३ ४ ५ २ १ २ १ र २ ३

इधीत । योधनुर्नीः । हरिःपर्या । द्रवज्जाः । सूरि

४ ५ १र २ १ २ २ ४

यस्या । द्रोणन्नना । क्षेश्यति । यो३४३ । नाइवाधू

२ १र २ १ २ ३ ४

ज्ञाइ ५ इयि ॥(१) सम्मातृभायिः । नशिशुः । वावशा

५ २ १र २ १ २ ३र ४ ५ २ १र

नाः । वृषादधा । न्वे ३पुरु । वारोअद्भायिः । मर्यो

२ १ २ ३ ४ ५ २ १ २

नयो । षा३मभि । निष्कृतंयान् । सङ्कृतायि । क

१र २ २ ४ २ १

लशे । ऊ३४३ । औ३याधुभाइ५इयिः ॥(२) उतप्रपायि ।

२ १र २ ३ ४ ५ २ १र २ ३

प्याऽऊधः । अघ्नियायाः । इन्दुर्धारा । औ३:सच्च ।

२ ३ ४ ५ २र १र २ १ २ ३ ४ ५ १र

तेमुमेधाः । मूर्द्धानङ्गा । वाऽःपय । साचमधू । औ

२र ३र २ १ २ ३ १ र २ १ २

होवाहाऽहोयि । इन्द्रा । औभिश्रीणा । तोइवस्तु । आ

२ ४

३४३यिः । नाइनायुयिक्वाइ५इयिः(३) ॥ ७ ॥ [१]

---

* क० गा० ८प्र० १ख० ७गा० ।

॥ पार्थम् ॥ ओ३होऽ२होयि । साकमुक्षो । मर्ज्ज
य । तस्वसाराः । दशधीरा । स्याऽ२धीत । योधनु
नीः । हरिःपर्य्या । द्रवज्जाः । स्वरियस्या । द्रोणान्न
ना । नें३क्षति । यो३४३ । नाऽ२वा५जाऽ६५६यि ॥(१)
सम्मातृभायिः । नशिशुः । वावशानाः । वृषादधा ।
न्वे३पुरु । वारोअद्भायिः । मर्य्योनयो । षाऽ२मभि । नि
ष्कृतंयान् । सङ्गच्छतायि । कलशे । ऊ३४३ । स्त्री
३या५भाऽ६५६यिः ॥(२) उतप्रपायि । प्याऽ२ऊधः । अघि
याया । इन्दुर्द्धारा । भोऽ२:सच । तेसुमेधाः । मूर्द्धा
नङ्गा । वाऽ२:पय । साचमूषु । ओ३होऽ२होयि । अभि
श्रीणा । तीऽ२वस्त्र । माऽ२४३यिः । नाऽ२ना५यिक्ताऽ६५६
यिः(३) ॥ ८ ॥ [२]

* ऊ० गा० १२प्र० १ख० ८सा० ।

१ २ १ र २
॥ औशनम् ॥ साकाम्। उक्षोमर्ज्जयन्ता। स्वसा
२ १ २र १ २ १र २र ३ ४ ५ १
२राः। दशधीरा। स्याऽ२धीत। योधनुवीः। हरिः
र १ २ र १ १ १ १ १
पर्य्यद्रवज्जाःसू। रियाऽ२श्वा। द्रोणननना। नेऽ३क्षति।
२ २ ४ १ २ १
योऽ३४३। नाऽ३वाऽ५जाऽ६५६यि ॥(१) साम्मा। नृभिर्न्नि
२ २ १ २ १ २ १ १ २र
मिष्णुर्वा। वशाऽ२नाः। वृषाऽ२धा। न्वेऽ३पुरु। वारो
४ ५ १ र र १ २
अद्धायिः। मर्य्योनयोषामभिनायिः। कृताऽ२यान्।
१ १ १ २ १ र २ २ ४ २
सङ्कृतायि। कलशे। ऊऽ३४३। लीऽ३याऽ५भाऽ६ ५ ६
१ १ र १ १
यिः ॥(२) ऊता। प्रपिप्यऊधरा। वियाऽ२याः। इन्द
२र १ २ १ १ २ ३ ४ ५ १र र र
द्धीरा। भीऽ३ःसच। तेसुमेधाः। मूर्द्धानङ्गावःपयसा।
७ २ र २ १ २ २
चमूऽ२षू। अभिश्रीणा। तीऽ३वसु। भाऽ३४३यिः। ना
४
ऽ२नाऽ५यिक्लाऽ६५६यिः(२) ॥ ४ ॥ [३] १५

* ऊ० गा० १८प्र० २अ० ४सा०।

अथ पिबासुतस्येति प्रगाथात्मकं तृतीयं सूक्तम्—

तत्र प्रथमा।

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २
पिबासुतस्यरसिनोमत्स्वानइन्द्रगोमतः।
३ १ २ ३ १ २ ३२ १ २ ३ १ २
आपिर्नोबोधिसधमाद्येवृधे३ऽस्माँ२अवन्तुतेधियः ॥ १* ॥

हे "इन्द्र!" "रसिनः" रसवतः "गोमतः" गोविकारैः पयः-प्रभृतिभिः श्रपण-द्रव्यैर्युक्तस्य "नः" अस्मदीयस्य "सुतस्य" अभिषुतस्य ["क्रियाग्रहणं कर्त्तव्यम्"—इति कर्मणः सम्प्रदान-त्वाच्चतुर्थ्यर्थे (२, ३, ६२)—षष्ठी] ईदृशं सोमं "पिब", पीत्वा च "मत्स्व" हृष्टो भव। अपि च त्वं "सधमाद्ये" सह मादयितव्ये सहितैरस्माभिस्तर्पयितव्ये सोमे "आपिः" आपयिता बन्धुः सन् "नः" अस्माकं "वृधे" वर्द्धमानाय "बोधि" बुध्यस्व "ते" त्वदीया "धियः" बुद्धयः अनुग्रहात्मिकाः "अस्मान्" स्तोतॄन् "अवन्तु" रक्षन्तु॥

"सधमाद्ये"-"सधमाद्यः"—इति पाठौ ॥ १ ॥

अथ द्वितीया।

३ १ २ ३ २ ३ १ २ ३१२ १२ ३ १ २
भूयामतेसुमतौवाजिनोवयम्मानस्तरभिमातये।
२ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
अस्माञ्चित्राभिरवतादभिष्टिभिरानःसुम्नेषुयामय ॥२†॥१६

---

* ऊ० गा० ३, ४, ५, ७ (१भा० ४९५पृ०) = ऋ० वे० ५, ७, २५, १।

† ऋ० वे० ५, ७, २५, २।

हे इन्द्र! "सुमतौ" शोभनायां बुद्धौ अनुग्रह-बुद्धौ "वाजिनः" हविष्मन्तो वयं "भूयाम" वर्त्तमाना भवाम "अभिमातये" अभिमन्यत इत्यभिमातिः शत्रुः * तस्मै तदर्थं "नः" अस्मान् "मा स्तः" माहिंसीः [स्तृञ् हिंसायाम् (क्र्या० प०) माङि लुङि छान्दसश्च्लेर्लुक्]। अपितु "अभिष्टिभिः" अभ्येषणीयाभिः प्रार्थनीयाभिः "चित्राभिः" चायनीयाभिः बहुविधाभिर्वा त्वदीयाभिः "ऊतिभिः" "अस्मान्" "अवतात्" [अव रक्षणे (भ्वा० प०)]। तथा "नः" अस्मान् "सुम्नेषु"† सुखेषु "आ यामय"‡ आयतान् कुरु सर्वदा सुखिन एव कुरु ॥ २ ॥ १६

॥ अभीवर्त्तम् ॥ पिबा३सू३तस्यरसिनोवा। मात्स्वान इ। द्रगोमा१ता २ः। आपिर्नोवा३१२३४। धिसधमा। दियेवा१द्द्र्ध्वी२यि। अस्माऽ३आ१वा२। तुता३यि। धा २३४५। या२३४५ः ॥(१) अस्माऽ३आ३वन्तु तेधियोवा। आस्माऽ३अव। तुतायिधा१या २ः। भूयामता३१२३४ यि। सुमतौवा। जिनोवा१या २म्। मानास्ता१रा२।

* 'अथवा कश्चिद्रोगः'—इति वि०।

† 'सुम्नेषु—यज्ञेषु'—इति वि०।

‡ 'स्थापयेत्यर्थः'—इति वि०।

भिमा३। ता२३४५। या२३४५यि ॥(२) माना३स्ता३
रभिमातयोवा। मानस्तर। भिमाता१या२यि। आस्मा
श्चित्रा३१२३४। भिरवतात्। अभायिष्टा१यिभा२यिः।
आनाःस्ह१स्ना२यि। घुया ३। मा २ ३ ४ ३। या २ ३
४ ५(३) ॥ ८* ॥ [१]

॥ उत्सेधम् ॥ पिबासुतस्यरसिनः। मत्स्वा। नआ
३४औहोवा। द्रगोमता ऽ २ः। हा३१उवा२३। ऊ३४
पा। आपा३यिर्नोबो। औहोवाहायि। धायिसधमा।
दियेवाह्नै। हा३१उवा२३। ऊ३४पा। अस्मा
२९अव। औहोवाहायि। तुना३यिधा५या६५६ः ॥(१)
अस्मा९अवन्तुतेधियो। स्मान्। अवा ३ ४ औहोवा।
तुतेधिया ऽ २ः। हा३१उवा२३। ऊ३४पा। भूया३म

* ऊ० गा० ८प्र० १अ० ८सा०।

५र ३ ५ १ २र १ १ र १ २
ता । औहोवाहायि । हमतीवा । जिनोवायम् ।

२ ५ ३र १ ४ ५र ४ ५
हाउ१उवार३ । ऊ३४पा । मानाउस्तर । औहोवाहा

३ १ ४ ३र ४ ३ ४र ५र र
यि । भिमाइताप्रया६५६ ॥(२) मानस्तरभिमातये । मा

३ २ ३र ४र ५ २ १र
नः । स्तरा३४औहोवा । भिमातयाऽ२यि । हाउ१उवा

२ ५ ३ २ ४ ५र ४ ५
२३ । ऊ ३ ४ पा । अस्माइन्विना । औहोवाहायि ।

१ २ १ २ १ २ २
भायिरवतात् । अभिष्टायिभिः । हाउ१उवा । ऊ३४

५ ३र २ ४ र ५र ४ ५ ३ २ ५
पा । आनाइःसुम्ने । औहोवाहायि । धुयाउमाप्रया

३ १ १ १ १
६५६ । ऊ२३४५(३) ॥ १५* ॥ [२]

२ र २ १ २ १
॥ निषधम् ॥ पिबासुतस्याउरसिनाः । मत्स्वानआ

२ र १ १ २ १ २ ४ ५ २
यि । द्रगोमता२ः । इहा३ । आपाउयिन्नीवो । हा

३ ५ १ २ १ २ र १ २ १ २
होर३४हा । धायिसधमा । दियेवार३द्धायि । इहा३ ।

१ २ ४ ५ २ ३ ५ ३ २ ४
आस्मा३ऽऽआवा । हाहोर३४हा । तुताउयिधाप्रया६५

---

* ऊ० गा० १३प्र० १ख० १५सा० ।

२ र २र १ २ १ १र १
६ः। अस्मा ऽ अवन्तू३तेधियाः। अस्मा ऽ अवा। तुतेधि

१ २ १ १ ४ ५ २ ३ ५ १
या२ः। इहा३। भूया३मातायि। हाश्चो२३४हा। सू

१र १ २र १ र १ २ १ १ ४ ५
मतीवा। जिनोवा२३याम्। इहा३। माना३स्तारा।

२ ३ ५ ३ २ ४ २र
हाश्चो२३४हा। भिमा३तापूया६५६यि ॥(२) मानस्तर

१र र १ २ १ २ र १ १ १
भी३मातयायि। मानास्तरा। भिमातया२यि। इहा

१ २ ४ ५ २ ३ ५ १ २ १
३। आस्मा३श्चायिना। हाश्चो२३४हा। भायिरवतात्।

२ १ २ १ २ १ २ ४ ५ २
अभिष्टा२३यिभायिः। इहा३। आना३ःसुम्नायि। हा

३ ५ ३ २ ४ ३ १ १ १ १
श्चो२३४हा। षुया३मापूया६५६। श्चे२३४५(३) ॥१६*॥[२]

५ ४ २ ३ ४ ५ १ र र
॥ पृष्ठम् ॥ पिबा३सुतस्यरसिनाः। मत्स्वानइन्द्रगो

१ १र १ र र र र १
मता२३श्चोइया। आपिर्नोबोधिसधमाद्येवृधा २ ३ श्चोइ

२ १र २ १ २
या। अस्मा ऽ आ२३वा। तुतायिधा२३या २ ४ ३ः ॥(१)

५ ४ २ ३ ४ र ५ १ र र १
अस्मा३ ऽ अवन्तुतेधियाः। अस्मा ऽ अवन्तुतेधियार ३ श्चो

---

* ऊ० गा० १३प्र० १ख० १६षा० ।

इया । भूयामतेसुमतौवाजिनोवया२३ँ होइया । मा

नस्ता२३रा । भिमाता२३या३४३यि ॥(२) माना२स्तर

भिमातयायि । मानस्तरभिमातया२३यिहोइया । अस्मा

श्चित्राभिरवतादभिष्टिभा२३यिहोइया । आनःसूर२३म्ना

यि । युयामा२३या३४३ । ओ२३४५इ । डा(३) ॥१२*॥[४]

॥ जमदग्नेःसाम ॥ पिबासुतस्यरसिनोमत्स्वाहाउ ।

ना२ः । इन्द्रा२गोमता२३ः । हाउ । आपिन्ना२वो ।

धिसाधमा२ । रियेवृधा२३ । हाउ । अस्माँ अवा

२३ । हा । तुते३हो२ । या२३४औहोवा । धियऊ

२३४५ ॥(१) अस्माँ अवन्तुतेधियोस्मान्हाउ । आ२ ।

वन्तू२तेधिया२३ः । हाउ । भूयामा२ते । हमतौवा

२ । जिनोवया२३म् । हाउ । मानास्तरा२३ । हा ।

---

* ऊ० गा० १६।१० पूर्वा० १२सा० ।

२ २ १ ३ ५र २ २ २ १ १ १ १
भिमा३हो२ । या२३४औहोवा । तयऊ २ ३ ४ ५ ॥(२)

२र २ २ २ २ १ १ १र
मानस्तरभिमानयेमानोहाउ । स्ता२ः । अभा२यिमा

२ १र २ १ ०
तया२३यि । हाउ । अस्मान्त्वा२यिन्त्रा । भिरावना२

१ २ २ १ ०
त् । अभिष्टिभा२३यिः । हाउ । आनाःसुम्ना २ ३ यि ।

१ ३ २ १ ३ ५र २ २ ३
हा । षुया ३ हो २ । या २ ३ ४ औहोवा । मयऊ

१ १ १ १
२ ३ ४ ५(३) ॥ १६* ॥ [५] १६

अथ त्रिरस्मैसप्तेति तृचात्मकं चतुर्थं सूक्तम् ,

तत्र प्रथमा ।

१ २ ३ २ ३ १ २
त्रिरस्मैसप्तधेनवोदुदुह्रिरे

३ २ ३ १ २ ३ १ २
सत्यामाशिरम्परमेव्योमनि ।

३ २ ३ १र २र ३ २ ३
चत्वार्यन्याभुवनानिनिर्णिजे

१ २ ३ २ ३ १र २र
चारूणिचक्रेयदृतैरवर्द्धत ॥ १† ॥

---

* ऊ० गा० १८प्र० २ख० १६सा० ।

† ऋ० चा० ६, २, २, ७ (२भा० १८८पृ० ) = ऋ० वे० ७, २, २३, १ ।

"परमे व्योमनि" विविधमोममवनं गमनं देवानामत्रेति व्योमा यज्ञः, तस्मिन् स्थिताय यद्वा परमे व्योमनि अन्तरिक्षे वर्त्तमानाय "त्रिः सप्त" एकविंशति-सङ्ख्याकाः "धेनवः" प्रीणयित्र्यो गावः "सत्यां" सत्यं यथार्थभूतम् "आशिरम्" आश्रयमाणं "दुदुह्रिरे" दुहन्ति [यद्वा, त्रिःसप्त द्वादश मासाः पञ्चर्त्तवः त्रय इमे लोका असावादित्य एकविंश इति, एतैः सर्वैः सह गोषु उत्पद्यंते तद्गावो दुहन्तीति]। किञ्चायं सोमः "अन्या" अन्यानि "चत्वारि" "भुवनानि" उदकानि वसतीवरीस्तिस्त्रैकधना इति, तानि चतुःसङ्ख्याकानि "चारूणि" कल्याणानि उदकानि "निर्णिजे" निर्णेजनाय परिशोधनाय "चक्रे" करोति। "यद्" यदा अयम् "ऋतैः" यज्ञैरेव "वर्द्धितः" वर्द्धितवान् तदा करोति ॥

"दुदुह्रिरे," "परमेव्योमनि"-"दुदुह्रे," "पूर्वेव्योमनि"—इति पाठौ ॥ १ ॥

अथ द्वितीया।

१र २र ३ १ २ ३ १ २
सभक्षमाणो अमृतस्य चारुण

३ २उ ३ १ २ ३ १ २
उभे द्यावा काव्येना वि शश्रथे।

१ २ ३ २ ३ २ ३ १ २ ३
ते जिष्ठा अपो मंहना परि व्यत

१ २ ३ २ ३ १ १ २ ३ १ २ ३ २
यदी देवस्य श्रवसा सदो विदुः ॥ २* ॥

---

* ऋ० वे० ७, २, २३, २।

"सः" "भक्ष्यमाणः" "चारुणः" कल्याणस्य "अमृतस्य" उदकस्य ["क्रियाग्रहणमिति कर्म्मणः सम्प्रदान-सञ्ज्ञा, "चतुर्थ्यर्थे बहुलम् (२, ३, ६२)"—इति षष्ठी] चारूदकं भक्ष्यमाणः [इकारलोपश्छान्दसः (३, ४, ९७)] भिक्ष्यमाणः यष्टृभिः याच्यमानः सन् "उभे" "द्यावा" [द्यावादेशस्य द्वन्द्वे विहितत्वात् उत्तरपदाभावेऽपि द्वन्द्वः प्रतीयते] उभे द्यावापृथिव्यौ "काव्येन" कवि-कर्म्मणा "वि शश्रथे"* विहृतकारातिशयेन निमित्तेन प्रक्ले-नोदकेन सम्पूरयतीत्यर्थः। किञ्च "तेजिष्ठाः" अतिशयेन दीप्तानि "अपः" उदकानि "मंहना" महत्त्वेन "परि व्यत" तदा परित आच्छादयति। "यदि" यदा ऋत्विजः "देवस्य" द्योतमानस्य सोमस्य "सदः" स्थानं "अवसा"† हविषा युक्ताः सन्तः "विदुः" यागार्थं जानन्ति लभन्ते तदा आप्नोतीति। [विद ज्ञाने (अदा० प०) "सिजभ्यस्त (३, ४, १०९)"—इति झेर्जु-सादेशः॥

"भक्ष्यमाणः"-"भिक्ष्यमाणः"—इति पाठौ॥ २॥

अथ तृतीया।

१ २ ३ १र २र ३ १
तेअस्यसन्तुकेतवोम्टत्यवो
२ ३ १ २ ३ १र २र
दाभ्यासोजनुषीउभेअनु।

---

* 'विशश्रथे—विविधं शिथिलीकरोति'—इति वि०।

† 'अवसा—अन्नेन बलेन वा'—इति वि०।

१ २ ३ १ २ ३ ३र २ १
येभिर्नृम्णाचदेव्याचपुनत

३र ३ १ २
आदिद्राजानम्मननाअगृभ्णत ॥ ३* ॥ १७

"अस्य" एतादृशस्य सोमस्य "केतवः" प्रज्ञापकाः सर्वैः स्नायनीया रश्मयः। कीदृशाः? "अमृत्यवः" मरण-धर्म्म-रहिताः अत एव "अदाभ्यासः" ["दभेश्चेति वक्तव्यम् (७, ३, ६८ वा०)"—इति ण्यत्] परैरहिंस्यास्तेतादृशा अस्य रश्मयः "उभे" "जनुषी" जन्मना स्थावर-जङ्गमात्मके द्वे "अनु" लक्षीकृत्य "सस्रु" स्रवन्तु [ओषधीनामग्रे सोमो रेतो निषिञ्चति यज्ञः मनुष्याणाञ्च धाराः स्रवति खलु] सोऽयं "येभिः" यैः केतुभिः "नृम्णा" नृम्णानि बलानि "देव्या" देवार्हाणि चान्नानि "पुनते" प्रेरयति। "आदित्" अभिषवानन्तरमेव† "राजानं" सोमं "मनना" मननीयाः स्तुतयः "अगृभ्णत" परिगृह्णन्ति प्राप्नुवन्तीत्यर्थः "हृग्रहोः"—इति छान्दसो भकारः ॥ ३ ॥१७

१ ५र ४५र ४५र र
॥ मारुतम् ॥ चा२ ३ ४यिः। अस्मैसप्तधेनवोदुद्रौ।

४ ५ २ १र र २ र १
द्रो३हायिरायि। सत्यामाशिरम्परमायि। वियोमानी२।

---

* ऋ० वे० ७, १, २३, ३।

† 'आत्'-'इत्'—इति पदपूरणौ—इति वि०।

१र र २ १ २ ३

चत्वार्य्यन्याभुवना। निनिर्णीयिजा२३यि। चारुणा२३

५ २र १ २र ५ २ ४ २

४यिवा। क्रेयहृतैः। आवा३द्वी५ताई५६॥(१) सा२३

५ र र ४ ५ र ४ ५ १ र र र र

४:। भक्षमाणोअमृतस्यचौ। द्दारूणाः। उभेद्यावाका

र २ २ र र र २

व्येना। विश्वआथा२यि। तेजिष्ठाअपोम२हना। परि

२ ३ ५ २ १ २र १ र

व्याता२३। यादोदा२३४यिवा। स्यश्रवसा। सादो३

४ १ ५ र ४ ५र र

वा५यिदू६५६:॥(२) ते२३४। अस्यसन्तुकेतवोअमौ।

४ ५ १ र र र २र १ १र

होर्क्यावाः। अदाभ्यासोजनुषो। उभेआनू२। येभि

र र २ १ २ ३ ५

नृम्णाचदेव्या। चपुनादा२३यि। आदिद्रा२ ३ ४जा।

२१ २र १ २ ४

नम्मनना:। आगा३म्णी५ताइ५६(३)॥ १२*॥ [१] १७

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य द्वादशस्याध्यायस्य

पञ्चमः खण्डः॥ ५॥

---

* ऊ० गा० प्र० १अ० १२सा०।

अथ षष्ठे खण्डे—

अभिवायुमिति तृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा ।

२ १ ३ १ ३क २र ३ १
अभिवायुंवीत्यर्षागृणानो

२ ३ १र १र ३ १ २
ऽ३ऽभिमित्रावरुणापूयमानः ।

३ १र २र ३ १२ ३ १
अभीनरन्धीजवनꣳरथेष्ठा

३ १ ३ १२३१ १
मभीन्द्रंवृषणंवज्रबाहुम् ॥ १* ॥

हे सोम ! "गृणानः" स्तूयमानस्त्वं "मित्रावरुणा" मित्रावरुणौ च पानाय "अभि" गच्छ । किञ्च "नरं" सर्वस्य नेतारं, "धीजवनं" बुद्धग्रा समं वेगं कुर्वाणं,† "रथेष्ठां" रथे तिष्ठन्तम् [अनेनाश्विनावभिधीयते ; एकवचनन्तु प्रत्येक-विवक्षया समुदाय-विवक्षया वा ; एतादृशावश्विनौ चाभिगच्छ] । तथा "वृषणं" कामानां वर्षकं "वज्रबाहुं" वज्र-युक्त-हस्तम् "इन्द्रं" च त्वं पानाय "अभि" गच्छ ॥ १ ॥

---

* ऋ० वे० ७, ४, २०, ४।

† 'धीजवनं—धीर्बुद्धिः तया जवनं वेगवन्तम् अथवा मनोजवैरश्वैः गन्तारम्' —इति वि० ।

अथ द्वितीया ।

२ १ १२ २ १ १ ३ ३ २ १ २ १ २ २ १ २
अभिवस्त्रासुवसनान्यर्षाभिधेनूःसुदुघाःपूयमानः ।
२ २ ३ १२ २२ ३ १ २ २ ३ १ २ ३ १ २
अभिचन्द्राभर्त्तवेनोहिरण्याभ्यश्वान्रथिनोदेवसोम ॥ २* ॥

हे "सोम!" अस्माकं "सुवसनानि" सुपरिधानानि "अभि" "वस्त्रा" वस्त्रा-गमय [यद्वा, सुवसनानि शोभन-वस्त्र-सहितानि "वस्त्रा" वस्त्रा-... ] किञ्च "पूयमानः" आच्छादकानि धनानि "अभि" गमय। किञ्च "पूयमानः" पवित्रेण त्वं "सुदुघाः" सुष्ठु पयसो दोग्ध्रीः "धेनूः" नवप्रसूति-का गाः "अभि" प्रापय। अपिच "चन्द्राणि" आह्लादकानि† "हिरण्यानि" "भर्त्तवे" भरणाय पोषणाय "नः" अस्माकम्‡ "अभि" गमय। तथा हे "देव" स्तोतव्य! हे "सोम!" "रथिनः" रथवतः अश्वान् अस्माकम् "अभि" प्रापय ॥ २ ॥

अथ तृतीया ।

३ १ २ ३ १२ २२ ३ २उ ३ १ १ ३ १ २
अभीनोअर्षदिव्यावसून्यभिविश्वापार्थिवापूयमानः ।
३ २उ ३१ २ ३ १ २ ३क २२ ३ १ २ ३ १ २
अभियेनद्रविणमश्नवामाभ्यार्षेयञ्जमदग्निवन्नः ॥ ३¶ ॥१८

हे सोम! पवित्रेण "पूयमानः" त्वं "दिव्या" दिव्यानि

---

* ऋ० वे० ७, ४, २०, ५ ।

† 'चन्द्राणि—कान्तानि'—इति वि० ।

‡ 'नः—अस्मभ्यम्'—इति वि० ।

¶ ऋ० वे० ७, ४, २१, १ ।

दिवि भवानि "वसूनि" धनानि "नः" अस्माकम् "अभ्यर्ष" अभिगमय तथा "पार्थिवा" पार्थिवानि पृथिव्यां भवानि "विश्वा" विश्वानि सर्वाणि धनान्यभिगमय। तथा "येन" त्वदीयेन सामर्थ्येन "द्रविणं" धनं "वयम्" "अश्नवाम" अभिव्याप्नुयाम तत् सामर्थ्यम् "अभि" गमय। किञ्च "आर्षेयम्" ऋषीणामृषिपुत्राणां योग्यं धनं "जमदग्निवत्" जमदग्नेर्यथा त्वं प्रापय एवं "नः" अस्माकमपि अभ्यर्ष [ यद्वा, आर्षेयम्, ऋषीणां योग्यं मन्त्रं जमदग्नेः स्वभूतं मन्त्रं यथा स्वादुतमम् अकार्षीः एवमस्माकं तादृशं मन्त्रं स्वादुतमं कुर्विति मन्त्रद्रष्टा स्तोता कुत्सो नाम ऋषिः प्रार्थयते ] ॥ ३ ॥ १८

२ २ २ १र २
॥ पार्थम् ॥ ओ३हो३होयि। अभिवायूम्। वी३

१ २ ३ ४ ५ २ १ २१र २३४ ५
तिप। षागृणानाः। अभिमित्रा। वरुणा। पूयमानाः।

२र १ ३ १ २ ३४५ २१
अभीनराम्। धी३जव। न२रथेष्ठाम्। अभिइन्द्राम्।

२२ २ २ ४
वृषणाम्। वा ३४३। आ३वापूह ६५६ म् ॥(१)

२ १ २१ २ ३४५ २ १र २१
अभिवस्त्रा। सुवस। नानियर्षा। अभिधेनूः। सुदु

र २३४५ २ १ २१र २ ३४
घाः। पूयमानाः। अजिचन्द्रा। भर्त्तवम्। नोदिर

५ २ १ २१ २ २ ४
ण्या। अभियस्वान्। रथिनः। दा३४३यि। वा३सो

२ र १र २ १ २ ३ ४ ५
५मा६५६ ॥(२) अभीनोआ। पा३दिवि। यावन्नी।
२ १ २ १ २ १ २ ३ ४ ५ २ १र
अभिविश्वा। पा३र्थिवा। पूयमानाः। अभियेना।
२ १ १ २ ३ ४ ५ २ २ २ १र
द्रविणम्। अश्नवामा। औ३हो३होयि। अभियर्ष।
२ १ २ २ ४
या३जमत्। आ३४३। ग्ना३यिवा५न्ना६५६ः

(३) ॥ १४* ॥ [१] १८

अथ† यज्जायथाइति त्र्यृचात्मकं द्वितीयं सूक्तम्,

तत्र प्रथमा।

१र २र ३ १ २ ३ १ २
यज्जायथा अपूर्व्य मघवन्वृत्रहत्याय।
१ २ ३ १ २ ३ १ २ ३ १र २र
तत्पृथिवीमप्रथयस्तदस्तभ्नाउतोदिवम्॥ १‡ ॥

हे "अपूर्व्य"¶ त्वत्तो व्यतिरिक्तेन पूर्वेण वर्जित! हे "मघवन्" मंहनीय-धनवन्! "इन्द्र!" "वृत्रहत्याय" वृत्रहननाय§ "यद्" यदा त्वं "जायथाः" उत्पन्नः प्रादुर्भूतोऽसि "तत्" तदानीमेव

---

* ऊ० गा० ८प्र० २अ० १४सा०।

† 'उक्तोऽभिप्लवः। उक्ताः पृष्ठ्याः। उक्तोऽभिजित्। इदानीं स्वरसामानः'—इति वि०।

‡ ऋ० वे० ६, ६, १२, ५।

¶ 'अपूर्वगुण!'—इति वि०।

§ 'वृत्रहत्य इन्द्रोऽभिधीयते, तस्मै वृत्रहत्याय हविर्दद्म इति वाक्यशेषः'—इति वि०।

"पृथिवीं" प्रथमानां भूमिम् "अप्रथयः" प्रथितां दृष्टामकरोः। "उत" अपि च "तत्" तदानीमेव "दिवं" द्युलोकम् अन्तरिक्षेण "अस्तभ्नाः" निरुद्धामकार्षीः [एतादृशं वीर्य्यं त्वदन्यस्य न सम्भवतीत्यर्थं द्योतयति अपूर्व्येति पदम्] ॥

"उतोद्दिवम्"-"उतद्याम्"—इति पाठौ ॥ १ ॥

अथ द्वितीया ।

१ २ ३ १ २ ३ २ ३ २ ३ १र २र
तत्तेयज्ञोअजायततदर्कउतहस्कृतिः ।
१र २र ३ १ २ ३ २ ३ १उ ३ १ २
तद्विश्वमभिभूरसियज्जातंयच्चजन्त्वम् ॥ २* ॥

हे इन्द्र! "यद्" यदा त्वम् अजायथाः तदानीं "ते" त्वदर्थं "यज्ञः" अग्निष्टोमादिः "अजायत" सोम-पानार्थमभूत्। "उत" अपिच "तद्" तदानीं "हस्कृतिः" [हस हसने (भ्वा०प०) हासकारी प्रीत्यर्थं क्रियमाणो हर्ष-सूचको द्वितीय-मन्त्रोऽपि अजायत। किञ्च तदा "यद्" "जातं" भूतजातं "यच्च" "जन्त्वम्" [कृत्यार्थे त्व-प्रत्ययः] जनितव्यं विश्वमस्ति, "तत्" "विश्वं" सर्व्वम् "अभिभूः असि" स्व-महिम्ना अभिभूतवानसि ॥ २ ॥

अथ तृतीया ।

३ १ २ ३ १र २र ३ १र २र ३ २
आमासुपक्वमैरयआसूर्य्यᳲरोहयोदिवि ।
३ १र २र ३ २ ३ २ ३ १ २ ३ २
घर्मन्नसामन्तपतासुवृक्तिभिर्जुष्टङ्गिर्वणसेबृहत् ॥३ †॥१९

* ऋ० वे० ६, ६, १२, ६ । † ऋ० वे० ६, ६, १२, ७ ।

हे इन्द्र! "आमासु" अपक्वासु गोषु "पक्वं" पयः "ऐरयः" प्रेरय [तथा च मन्त्रः—"आमासुचिद्दधिषे पक्वमन्तः" इति। किञ्च, "दिवि" द्युलोके "सूर्य्यम्" "आरोहयश्च" [पूर्वं पणयो-नामासुरा अङ्गिरसां गा अपहृत्यान्धकारावृते कस्मिंश्चित् पर्वते स्थापितवन्तः, ततोऽङ्गिरसः इन्द्रं स्तुत्वा गाः पुनरस्मभ्य-माहरेति तैरुक्तम् इन्द्रो गवां स्थानं तमसावृतं दृष्ट्वा तत्र गो-प्रदर्शनाय द्युलोके सर्वप्रकाशकं सूर्य्यमारोहितवान्] स्थापित वानसि ["चादि-लोपे विभाषा (८, १, ६२)"—इति पूर्वस्य ऐरयइत्यस्य न निघातः। अथ परोच्चतोऽर्द्धर्च्चः—] हे स्तोतारः! "सुवृक्तिभिः" शोभनाभिः स्तुतिभिः "न तपत" इन्द्रं तीक्ष्णीकुरुत [इन्द्रं स्तुतिभिः यथा तपन्ति तद्वत्]। ततः "गिर्वणसे" गीर्भिर्वननीयायेन्द्राय "जुष्टं" प्रीतिकरं पर्याप्तं वा "बृहत्" महत् बृहदाख्यं वा "साम" गायत ॥३॥१९

अथ मत्स्यपायीति तृचात्मकं तृतीयं सूक्तम्,

तत्र प्रथमा।

१र २र ३ २ ३ १ २ ३ १र २र
मत्स्यपायितेमहःपात्रस्येवहरिवोमत्सरोमदः।
१ २ ३ २ ३ १ २ ३ १ २ ३ १ २
वृषातेवृष्णइन्दुर्वाजीसहस्रसातमः॥ १* ॥

हे "हरिवः" हरिभ्यां तद्वन्निन्द्र! "महः" महान् पूज्यो-ऽयं सोमः "पात्रस्येव" पात्रेणेव सोमपात्रेण यथा धार्यते सोमः,

* ऋ० वे० २, ४, १८, १।

तत्सदृशेन त्वया [ तृतीयार्थे षष्ठी ( २, १, ८५ )। यद्वा, 'पात्रस्य' 'ते' तव स्वभूतः 'मद्दः' महान् सोमइति वा योजना ] "अपायि" पीतः [ आशंसाया विवक्षितार्थत्वात् भूतेऽर्थे प्रयोगः ] यतः पिब अतो "मत्सि" माद्यसि मादयस्व वा। "मत्सरः" मद-साधनः, "मदः" तर्पयिता; "वृषा" वर्षिता, "इन्दुः" क्लेदयिता आह्लाद-कारीत्यर्थः, "वाजी" अन्नवान् अन्नकार्य्य-तृप्ति-सद्भावात् अन्नवानित्युच्यते, "सहस्रसातमः" अपरिमित-दातृतमः सहस्र-पुरुष-सम्भजन-पर्यन्त-शक्त्यतिशयी वा एवं महानुभावः सोमः सम्पादितस्तं पिबेत्यर्थः॥ १॥

अथ द्वितीया।

१ २          ३ २उ ३ २ ३ १ २
आनस्तेगन्तुमत्सरोवृषामदोवरेण्यः।

३ १ २          ३ १ २ ३ १र २र
सहावाꣳइन्द्रसानसिःपृतनाषाडमर्त्त्यः॥ २*॥

हे इन्द्र! "ते" त्वां "मत्सरः" मर्षण-साधनः सोमः "आगन्तु" आगच्छन्तु। कीदृशोऽयम्? "वृषा" वर्षकः "मदः" तर्पयिता, "वरेण्यः" वरणीयः, "सहावान्" सहायवान् अस्मदृत्तेन सोमेन सहायवान् सन् "सानसिः" अस्माभिः सम्भजनीयः, "पृतनाषाट्" शत्रुसेनाया अभिभविता अमर्त्त्यश्च भवेति॥ २॥

* ऋ० वे० ६, ४, १८, २।

अथ तृतीया ।

२उ ३ १ २ ३ २ ३ १ २ ३ १ र

त्वꣳह्यिशूरःसनिताचोदयोमनुषोरथम् ।

३ २ ३ १ २ ३२उ ३ २ ३ २ ३ १ २

सहावान्दस्युमव्रतमोषःपात्रन्नशोचिषा ॥ ३* ॥ २०

हे इन्द्र ! "त्वं" "हि" खलु "शूरः" शौर्योपेतः "सनिता" दातासि। अतः "मनुषः" मनुष्यस्य मे "रथं" रंहणं स्यन्दनं मनोरथं वा स्वर्ग-गमन-साधनं यज्ञार्थं रथं वा "चोदयः" प्रेरय। किञ्च त्वं "सहावान्" भूत्वा "दस्युम्" उपक्षयितारम् "अव्रतम्" अकर्म्माणम् अननुष्ठायिनम् "ओषः"† दह। किमिव ? "शोचिषा" दीप्त्या ज्वालया अग्निः "पात्रन्" स्वाधारं पात्र-विशेषमिव यागाधिकारी सन् यो न यजते, तं देहीत्यर्थः ॥ ३ ॥ २०

५ २ ४ ५ ४र ५ २र १ २र १

॥ कालेयम् ॥ मत्स्वियाऽपायितेमहाः । पात्रास्येवा ।

२ ३ २र १ २ ३र २ १ र र र

हरिवोमा२३ । त्सरोमदा३ः । वा२३४ । पातेवृष्णे ।

२ २ १र ३ २ २ ५ ४

आ३यिन्दूः । वाजायिसही । वा३४३औ३४वा । स्वसा

५र २ ४ ५ ४ ५ २ १ २ १ २ र

५तमाः ॥(१) आनस्तेऽगन्तुमत्सराः । वृषामदो । वरे

---

* ऋ० वे० १, ४, १८, ३ ।

† 'ओषः पात्र' न—दीप्तः पात्र' न'—इति वि० ।

२ १ २ १ ५ ६ २ २
णियार२३ः । सद्दा३ । वा७२३४ । इन्द्रसा । ना३सा

१ ३र २ २ ५ ४
यिः । पृतनाषौ । वा३४३ओ३४वा । अमा५र्त्तियाः ॥(२)

५ २ ४र ५ ४ ५ २र १ २र १ ३ ३र २ १
तुवं७हो३शूरःसनिता । चोदायोमा । नुषोरया२३म् ।

२ १ ५ २ २ १र
सद्दा३ । वार२३४न् । दस्युम । आ३ताम् । ओषाः ।

३र ३र २ ५ ४ ४
पाचौ । वा३४३ओ३४वा । नशो५चिषा । द्यो५ई ।

डा(३) ॥ १६* ॥ [१] २०

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य द्वादशस्याध्यायस्य

षष्ठ खण्डः ॥ ६ ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।

पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः ॥ १ २ ॥

॥ इति षष्ठस्य द्वितीयोऽर्द्धप्रपाठकः ॥ *

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-

श्रीवीर-बुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणा-

चार्य्येण विरचिते माधवीये सामवेदार्थ-प्रकाशे

उत्तराग्रन्थे द्वादशोऽध्यायः ॥ १२ ॥

---

* ऊ० गा० २१प्र० १अ० १६सा० ।

† 'षष्ठस्य प्रपाठकस्य द्वितीयोऽध्यायः समाप्तः'—इति वि० ।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्म्ममे तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ १३ ॥

## ॥ अथ त्रयोदशोऽध्याय आरभ्यते ॥

तत्र,

प्रथमे खण्डे—

पवस्ववृष्टिमिति पञ्चर्चं प्रथमं सूक्तम्,

तत्र प्रथमा ।

१ २ ३ २उ १ २ ३ २ ३ १र २र
**पवस्ववृष्टिमासुनोपामूर्म्मिन्दिवस्परि ।**
३ १ २ ३ १र २र
**अयक्ष्मावृहतीरिषः ॥ १* ॥**

हे सोम ! त्वं "दिवः" द्युलोकात् "वृष्टिं" वर्षं "नः" अस्माकं "सु" सुष्ठु "आ पवस्व" समन्तात् क्षर† । एतदेव दर्शयति—"अपाम्" उदकानाम् "ऊर्मिं" तरङ्गं दिवः "परि" आपवस्व । अपिच "अयक्ष्माः" यक्ष्म-रहितानि अनामयानि "वृहतीः" महान्ति "इषः" अन्नानि आपवस्व ॥ १ ॥

---

* ऋ० वे० ७, १, ६, १ ।

† विवरण-मते तु 'आसु'—इत्येकं पदम् अतएव 'आसु सोमधारासु'—इति व्याख्यातम् ।

अथ द्वितीया।

१ २ ३ १ २ ३ २ ३ १ २ ३ १ र २ र
तयापवस्वधारयाययागावइहागमन्।
१ १ ३ १ २ ३ २
जन्यासउपनोगृहम् ॥ २* ॥

हे सोम! त्वं "तया" तादृश्या "धारया" "पवस्व" चर। कीदृश्येत्यत्राह—"यया" यादृश्या त्वदीयया धारया "जन्यासः" जन्याः शत्रु-जनपद-भवाः† "गावः" "इह" अस्मिंल्लोके "नः" अस्माकं सम्बन्धि "गृहम्" "उप आ गमन्" उपागच्छन्ति ॥ २ ॥

अथ तृतीया।

३ १ २ ३ १ २ ३ १ २ ३ १ २
घृतम्पवस्वधारयायज्ञेषुदेववीतमः।
३ १ २ ३ १र २र
अस्मभ्यंवृष्टिमापव ॥ ३‡ ॥

हे सोम! "यज्ञेषु" "देववीतमः" अतिशयेन देवकामः त्वम् "अस्मभ्यं" स्तोतृभ्यः "घृतम्" उदकं "धारया" "पवस्व" चर; "वृष्टिं" वर्षञ्च "आ पव" ॥ ३ ॥

---

* ऋ० वे० ७, १, ६, २।

† 'जन्यासः—जनसम्भिताः'—इति वि०।

‡ ऋ० वे० ७, १, ६, ३।

अथ चतुर्थी।

१ २ ० २ १ २ ३ १ २ ३ १ २

सुत ऊर्ज्जे व्या३२व्यय*म्पवित्रन्धावधारया।

३ १ २ ३ २ ३ १ २

देवासःशृणवन्हिकम्॥ ४† ॥

हे सोम! "सुतः" अभिषुतस्त्वं "नः" अस्माकम् "ऊर्जे" अन्नाय "अव्ययम्" अविमयं‡ "पवित्र" धारया सम्याति "वि धाव" प्राप्नुहि "देवासः" देवा अपि¶ "हि कं शृणवन्" गमन-वेलाया-मुत्पन्नं त्वदीयं शब्दं शृणवन्तु॥ ४॥

अथ पञ्चमी।

१ ० ३ १ २ ३ १ २

पवमानो अभिष्यदद्रक्षा१ंस्यपजङ्घनत्।

३ २ ३ २ ३ १ २

प्रत्नवद्रोचयन्रुचः॥ ५ § ॥ १

"रक्षांसि" राक्षसाः "अप जङ्घनत्" "रुचः" आत्मीया दीप्तीः "प्रत्नवत्" पुराणवत् "रोचयन्" दीपयन् "पवमानः" सोमः "असिष्यदत्" स्यन्दते॥ ५॥ १

---

* "अव्ययं"—इति ऋ०-पाठः।

† ऋ० वे० ७, १, ६, ४।

‡ 'अथवा वि अन्तरिक्षात् अव्ययं पवित्र धाव'—इति वि०।

¶ 'देवासः शृणवन् हि कम्—एतच्छृण्वन् हे देवाः! कं प्रजापतिरूपं सोमम् अथवा कं पानीयं सोमं'—इति वि०।

§ ऋ० वे० ७, १, ६, ५।

अथ प्रत्यस्मा इति चतुर्ऋचं द्वितीयं सूक्तम्,

तत्र प्रथमा।

१ २ ३ १ २ ३ १ २ ३ १ २
प्रत्यस्मैपिपीषतेविश्वानिविदुषेभर।
२ २ ३ २ ३ १ २ ३ १ २
अरङ्गमायजग्मयेपश्चादध्वनेनरः॥ १* ॥

हे अध्वर्यो! "नरः" नेता यज्ञानां त्वम् "अस्मै" इन्द्राय "प्रति भर" अभिभर सोमं प्रयच्छेत्यर्थः। कीदृशायेन्द्राय? "पिपीषते" पातुमिच्छते "विश्वानि" सर्वाणि वेद्यानि "विदुषे" जानते "अरङ्गमाय" पर्य्याप्त-गमनाय "जग्मये" यज्ञेषु गमन-शीलाय "अपश्चादध्वने" [ दघ्निर्गतिकर्म्मा निघ०२,१४,६२ )] अपश्चाद्गमनाय सर्वेषामग्रगामिने॥

"नरः"-"नरे"—इति पाठौ॥ १॥

अथ द्वितीया।

१ २ ३ १ २ ३ १ २ ३ १ २
एमेनम्प्रत्येतनसोमेभिःसोमपातमम्।
१ २ २ १ ३ १ २ ३ २ ३ १ १
अमत्रेभिर्ऋजीषिणमिन्द्रꣳसुतेभिरिन्दुभिः॥ २† ॥

हे अध्वर्यवः! "सोमेभिः" सोमैः करणभूतैः "सोमपातमं" अतिशयेन सोमस्य पातारम् "एनम्" इन्द्रम् "आ" अभिमुखं

* छ० आ० ४, २, २, १ (१भा० ७१९ पृ०) = ऋ० वे० ४, ७, १४, १।

† ऋ० वे० ४, ७, १४, २।

"प्रत्येत" प्रतिगच्छत ["ईम्"—इति निपातोऽनर्थकः]। कीदृश मिन्द्रम्? "अमत्रेभिः" अमत्रैः सोमपात्रैः ग्रह-चमसादिभिः "ऋजीषिणम्" ऋजीषं शत्रूणामुपार्जकं बलं, तद्वन्तं, [यद्वा, ऋजीषिणमित्युत्तरत्र सम्बन्धनीयं, 'सुतेभिः' अभिषुतैः 'इन्दुभिः' सोमैः, 'ऋजीषिणं' गतसारः सोमः ऋजीषः तद्वन्तम्। अथवा अमत्रैः अपरिमितैरभिषुतैः सोमैः ऋजीषिणम्। ऋजेर्गत्यर्था-द्वौणादि-साधन ऋजीष-शब्दः, ततो मत्वर्थीयइति सङ्गतमित्यर्थः। एवंविधमिन्द्रं प्रति गच्छतेत्यन्वयः। अन्य आह—अमत्रेभिः ग्रहचमसादिभिः गतैः सोमैः ऋजीषिणं बलवन्तमिन्द्रं प्रति गच्छतेति] ॥ २ ॥

अथ तृतीया।

१ २ ३ २ ३ ४ २ ३ १ २ ३ १२
यदीसुतेभिरिन्दुभिःसोमेभिःप्रतिभूषथ।
२ ३ १ २ ३ १ २ ३ २उ ३ १र २र
वेदाविश्वस्यमेधिरोधृषत्तन्तमिदेषते ॥ ३* ॥

हे अध्वर्यवः! "सुतेभिः" अभिषुतैः "इन्दुभिः" उन्दनशील दीप्तैर्वा "सोमेभिः" सोमैः "यदि प्रतिभूषथ" इन्द्रं प्रति यदि यूयं गच्छथ [भू प्राप्तौ (भ्वा० उ०)—इत्यस्यैतद्रूपं] तदानीं "मेधिरः" मेधावी† [मेधो यज्ञः (निघ०३,१७,४) तद्वान् वा] स इन्द्रः "विश्वस्य" विश्वं सर्वं भवदीयं कामं "वेद" वेत्ति जानाति ज्ञात्वा च "धृषत्" शत्रूणां धर्षकः सन् "तमित्" तं तं काममेव"एषते" प्रापयति ॥ ३ ॥

---

* ऋ० वे० ४, ७, १४, ३।

† 'मेधिरः—प्रथमः पञ्चादेः, धृषत् धारणार्थम्'—इति वि०।

